# SARASVATI BHAVANA GRANTHAMALA

VOL. 86

*Part I*

**GENERAL EDITOR —**
Kshetresachandra Chattopadhyaya
Director, Research Institute,
Varanaseya Sanskrit Vishva Vidyalaya,
Varanasi



# GARGA-SAMHITA

*( Volume I )*

VARANASI
1959

सरस्वतीभवन-ग्रन्थमाला

( ८६ )

# गर्गसंहिता

श्रीविभूतिभूषणभट्टाचार्येण संशोधिता

( प्रथमो भागः )

वाराणस्याम्

१८८० तमे शकाब्दे

# विज्ञप्तिः

भगवतः श्रीकृष्णचन्द्रस्य भक्तजनमनोहारिणीं कथामाश्रित्य ये पौराणिका ग्रन्था लिखितास्तन्मध्ये गर्गसंहिताऽप्येका। एषा संहिता १८३० तमे शके श्रीवेंकटेश्वर-यन्त्रालयान्मुद्रिता तथापि सरस्वतीभवनस्थमातृकाचतुष्टयस्याधारेण तस्याः संशोधितं संस्करणमस्माभिः प्रकान्तम्। ग्रन्थस्यास्य संशोधनं सरस्वतीभवन-पुस्तकालयस्य सहकार्यध्यक्षेण श्रीविभूतिभूषणभट्टाचार्येण वाराणसेयराजकीय-संस्कृतमहाविद्यालयस्याध्यक्षचरस्याधुना संस्कृतविश्वविद्यालयप्रस्तोतुः श्रीकुबेरनाथ-शुक्लस्य निरीक्षणेन कृतम्।

अस्मिन् पुस्तके वासुदेवः श्रीकृष्णः पूर्णं ब्रह्मेति पक्षः स्वीकृतः। अत्र श्रीराधिका श्रीकृष्णस्य पत्नीति प्रतिपादितम्। सन्त्यन्येऽपि विशेषा अत्र ये श्रीकृष्णचरितानामैतिहासिकाध्ययने भृशमुपकुर्युः। एतत् सर्वं संशोधकस्य भूमिकायां प्रकाशयिष्यते। अधुना खण्डदशकमितस्यास्य ग्रन्थस्य खण्डषट्क-मयः प्रथमो भागः प्रकाश्यते। शिष्टो भागो द्वितीये भागे प्राकाश्यं लप्स्यते। तत्रैव भूमिकापि सन्निवेशयिष्यते।

विद्वज्जनसेवी—

**क्षेत्रेशचन्द्रचट्टोपाध्यायः**

अनुसन्धान-संस्थान-सञ्चालकः।

# गर्गसंहिता

## ( प्रथमो भागः )

श्रीगणेशाय नमः ।

# गर्गसंहिता

## ( गोलोक खण्डः )

ॐ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १
शरद्विकचपङ्कजश्रियमतीवविद्वेषकम्
मिलिन्दमुनिलेढितं कुलिशकञ्जचिह्नावृतम् ।
स्फुरत्कनकनूपुरं दलितभक्ततापत्रयं
चलद्युतिपदद्वयं हृदि दधामि राधापतेः ॥ २
वदनकमलनिर्यद् यस्य पीयूषमाद्यं
पिबति जनवरोऽयं पातु सोऽयं गिरं मे ।
बदरवनविहारः सत्यवत्याः कुमारः
प्रणतदुरितहारः शार्ङ्गधन्वावतारः ॥ ३
कदाचिन्नैमिषारण्ये श्रीगर्गो ज्ञानिनां वरः ।
आययौ शौनकं द्रष्टुं तेजस्वी योगभास्करः ॥ ४
तं दृष्ट्वा सहसोत्थाय शौनको मुनिभिः सह ।
पूजयामास पाद्यार्घैरुपचारैर्विधानतः ॥ ५

शौनक उवाच

सतां पर्यटनं धन्यं गृहीणां शान्तये स्मृतम् ।
नृणामन्तस्तमोहारी साधुरेव न भास्करः ॥ ६
तस्मान्मे हृदि सम्भूतं सन्देहं नाशय प्रभो ।
कतिधा श्रीहरेर्विष्णोरवतारा भवन्त्यलम् ॥ ७

गर्ग उवाच

साधु पृष्टं त्वया ब्रह्मन् भगवद्गुणवर्णनम् ।
शृण्वतां गदतां यद्वै पृच्छतां वितनोति शम् ॥ ८
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
यस्य स्मरणमात्रेण महादोषः प्रशाम्यति ॥ ९
मिथिलानगरे पूर्वं बहुलाश्वः प्रतापवान् ।
श्रीकृष्णभक्तः शान्तात्मा बभूव निरहङ्कृतिः ॥ १०
अम्बरादागतं दृष्ट्वा नारदं मुनिसत्तमम् ।
सम्पूज्य चासने स्थाप्य कृताञ्जलिरभाषत ॥ ११

जनक उवाच

अयोनिरात्मा पुरुषो भगवान् प्रकृतेः परः ।
कस्मात्तनुं समाधत्ते तन्मे ब्रूहि महामुने ॥ १२

नारद उवाच

गोसाधुदेवताविप्रवेदानां रक्षणाय वै ।
तनूर्धत्ते हरिः साक्षाद्भगवानात्मलीलया ॥ १३
यथा नटः स्वलीलायां मोहितो न परस्तथा ।
अन्ये दृष्ट्वा च तन्मायां मुमुहुस्ते मुहुर्मुहुः ॥ १४

जनक उवाच

कतिधा श्रीहरेर्विष्णोरवतारा भवन्त्यलम् ।
साधूनां रक्षणार्थाय कृपया वद मां प्रभो ॥ १५

नारद उवाच

अंशोऽशांशस्तथावेशः कला पूर्णः प्रकथ्यते ।
व्यासाद्यैश्च स्मृतः षष्ठः परिपूर्णतमः स्वयम् ॥ १६
ब्रह्मादयः स्मृता अंशा अंशांशास्तु मरीच्यादिः ।
कलाः कपिलकूर्माद्या आवेशा भार्गवादयः ॥ १७

पूर्णो नृसिंहो रामश्च श्वेतद्वीपाधिपो हरिः ।
वैकुण्ठोऽपि तथा यज्ञो नरनारायणः स्मृतः ॥ १८
परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ।
असंख्यब्रह्माण्डपतिर्गोलोके धाम्नि राजते ॥ १९
कार्याधिकारं कुर्वन्तस्तदंशास्ते प्रकीर्त्तिताः ।
तत्कार्यभारं कुर्वन्तस्तेऽशांशा विदिताः प्रभो ॥२०
येषामन्तर्गतो विष्णुः कार्यं कृत्वा विनिर्गतः ।
तान्नाऽऽवेशावतारांश्च विद्धि राजन् महामते ॥२१
धर्मं विधाय कृत्वा च पुनरन्तरधीयत ।
युगे युगे वर्तमानः सोऽवतारः कला हरेः ॥२२
चतुर्व्यूहो भवेद्यत्र दृश्यन्ते च रसा नव ।
अतःपरञ्च वीर्याणि स तु पूर्णः प्रकथ्यते ॥२३
यस्मिन् सर्वाणि तेजांसि विलीयन्ते स्वतेजसि ।
तं वदन्ति परं साक्षात् परिपूर्णतमं स्वयम् ॥२४
पूर्णस्य लक्षणं यत्र यं पश्यन्ति पृथक् पृथग् ।
भावेनापि जनाः सोऽपि परिपूर्णतमः स्वयम् ॥२५
परिपूर्णतमः साक्षाच्छ्रीकृष्णो नाऽन्य एव हि ।
एककार्यार्थमागत्य कोटिकार्यं चकार ह ॥२६

पूर्णः पुराणः पुरुषोत्तमोत्तमः
परात्परो यः पुरुषः परेश्वरः ।
स्वयं सदाऽऽनन्दमयः कृपावित्
स एव कृष्णः प्रणिगद्यते बुधैः ॥२७

गर्ग उवाच

तच्छ्रुत्वा हर्षितो राजा रोमाञ्चोद्गमविह्वलः ।
प्रमृज्य नेत्रेऽश्रुपूर्णे नारदं वाक्यमब्रवीत् ॥२८

बहुलाश्व उवाच

परिपूर्णतमः साक्षाच्छ्रीकृष्णः केन हेतुना ।
आगतो भारते खण्डे द्वारवत्यां विराजते ॥२९
तस्य गोलोकनाथस्य गोलोकं धाम सुन्दरम् ।
कर्माण्यपरिमेयाणि ब्रूहि मह्यं महामुने ॥३०
यदा तीर्थाटनं कुर्वञ्छतजन्मतपः परः ।
तदा सत्सङ्गमेत्याऽऽशु श्रीकृष्णं प्राप्नुयान्नरः ॥३१

श्रीकृष्णदासस्य च दासदासः
कदा भवेयं मनसार्द्रचित्तः ।
यो दुर्लभो देववरैः परात्मा
स मे कथं गोचर आदिदेवः ॥३२

नारद उवाच

धन्यस्त्वं राजशार्दूल श्रीकृष्णेष्टो हरिप्रियः ।
तुभ्यञ्च दर्शनं दातुं भक्तेशोऽत्रागमिष्यति ॥३३
त्वां नृपं श्रुतदेवञ्च द्विजदेवो जनार्दनः ।
स्मरत्यलं द्वारकायामहोभाग्यं सतामिह ॥३४

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे श्रीकृष्णमाहात्म्यवर्णनं नाम
प्रथमोऽध्यायः ॥ १

नारद उवाच

जिह्वां लब्ध्वापि यः कृष्णं कीर्तनीयं न कीर्तयेत् ।
लब्ध्वापि मोक्षसोपानमनारोहति दुर्मतिः ॥ १

अथ ते सम्प्रवक्ष्यामि श्रीकृष्णागमनं भुवि ।
अस्मिन् वाराहकल्पे वै यद्भूतं तच्छृणु प्रभो ॥ २

पुरा दानवदैत्यानां नराणां खलभूभुजाम् ।
भूरिभारसमाक्रान्ता पृथ्वी गोरूपधारिणी ॥ ३

अनाथवद्रुदन्तीव वेदयन्ती निजव्यथाम् ।
कम्पयन्ती निजं गात्रं ब्रह्माणं शरणं गता ॥ ४

ब्रह्मा चाश्वास्य तां सद्यः सर्वैर्देवगणैर्वृतः ।
शङ्करेण समं प्रागाद् वैकुण्ठं मन्दिरं हरेः ॥ ५

नत्वा चतुर्भुजं विष्णुं स्वाभिप्रायं जगाद ह ।
अथोद्विग्नं देवगणं श्रीनाथः प्राह तं विधिम् ॥ ६

भगवानुवाच

कृष्णं स्वयं विगणिताण्डपतिं परेशं
साक्षादखण्डमतिदेवमतीवलीलम् ।
कार्यं कदापि न भविष्यति यं विना हि
गच्छाशु तस्य विशदं पदमव्ययं त्वम् ॥ ७

ब्रह्मोवाच

त्वत्तः परं न जानामि परिपूर्णतमं स्वयम् ।
यद्यस्त्यन्यस्तस्य साक्षाल्लोकं दर्शय मे प्रभो ॥ ८

नारद उवाच

इत्युक्तोऽपि हरिः पूर्णः सर्वैर्देवगणैः सह ।
पदवीं दर्शयामास ब्रह्माण्डशिखरोपरि ॥ ९

वामपादाङ्गुष्ठनखभिन्नब्रह्माण्डमस्तके ।
श्रीवामनस्य विवरे ब्रह्मद्रवसमाकुले ॥१०

जलयानेन मार्गेण बहिस्ते निर्ययुः सुराः ।
कलिङ्गबिम्बवच्चेदं ब्रह्माण्डं ददृशुस्त्वधः ॥११

इन्द्रायणफलानीव लुठन्त्यन्यानि वै जले ।
विलोक्य विस्मिताः सर्वे बभूवुश्चकिता इव ॥१२

कोटिशो योजनान्ते वै पुराणामष्टकं गताः ।
दिव्यप्राकाररत्नादिद्रुमवृन्दमनोहरम् ॥१३

तदूर्ध्वं ददृशुर्देवा विरजायास्तटं शुभम् ।
तरङ्गितक्षीरशुभ्रं सोपानैर्भास्वरं परम् ॥१४

तं दृष्ट्वा प्रचलन्तस्ते तत्पारं जग्मुरुत्सुकाः ।
असंख्यकोटिमार्तण्डज्योतिषां मण्डलं महत् ॥१५

दृष्ट्वा प्रताडिताक्षास्ते तेजसा धर्षिताः स्थिताः ।
नमस्कृत्वाथ तत्तेजो दध्यौ विष्ण्वाज्ञयाविधिः ॥१६

तज्ज्योतिर्मण्डलेऽपश्यन् साकारं धाम शान्तिमत् ।
यस्मिन् महाद्भुतं दीर्घं मृणालधवलं परम् ।
सहस्रवदनं शेषं दृष्ट्वा नेमुः सुरास्ततः ॥१७

तस्योत्सङ्गे महालोको गोलोको लोकवन्दितः ।
यत्र कालः कलयतामीश्वरो धामगानिनाम् ॥१८

राजन् न प्रभवेन्माया मनश्चित्तं मतिर्ह्यहम् ।
न विकारो विशत्येनं न महांश्च गुणाः कुतः ॥१९

तत्र कन्दर्पलावण्याः श्यामसुन्दरविग्रहाः ।
द्वारि गन्तुं चाभ्युदितान् न्यषेधन् कृष्णपार्षदाः ॥२०

देवा ऊचुः
लोकपाला वयं सर्वे ब्रह्मविष्णुमहेश्वराः ।
श्रीकृष्णदर्शनार्थाय शक्राद्या आगता इह ॥२१
नारद उवाच
तच्छ्रुत्वा तदभिप्रायं श्रीकृष्णाय सखीजनाः ।
ऊचुर्देवप्रतीहारा गत्वा चान्तःपुरं परम् ॥२२
तदा विनिर्गता काचिच्छतचन्द्रानना सखी ।
पीताम्बरा वेत्रहस्ता साऽपृच्छद्वाञ्छितं सुरान् ॥२३
चन्द्राननोवाच
कस्याण्डस्याधिपा देवा यूयं सर्वे समागताः ।
वदताशु गदिष्यामि तस्मै भगवते ह्यहम् ॥२४
देवा ऊचुः
अहो ह्यण्डान्युतान्यानि नास्माभिर्दर्शितानि च ।
एकमण्डं प्रजानीमोऽथेतरं नास्ति नः शुभे ॥२५
चन्द्राननोवाच
ब्रह्मद्रवे लुठन्तीह कोटिशो ह्यण्डराशयः ।
तेषु यूयं यथा देवास्तथाण्डेऽण्डे पृथक् पृथक् ॥२६
नामग्रामं न जानीथ कदा वात्र समागताः ।
जडबुद्ध्या प्रहृष्यध्वं गृहान्नापि विनिर्गताः ॥२७
ब्रह्माण्डमेकं जानन्ति यत्र जातास्तथा जनाः ।
मशकाश्च यथान्तःस्था औदुम्बरफलेषु वै ॥२८
नारद उवाच
उपहास्यं गता देवा इत्थं तूष्णीं स्थिताः पुनः ।
चकितानिव तान् दृष्ट्वा विष्णुर्वचनमब्रवीत् ॥२९
विष्णुरुवाच
यस्मिन्नण्डे पृश्निगर्भोऽवतारोऽभूत् सनातनः ।
त्रिविक्रमनखोद्भिन्ने तस्मिन्नण्डे स्थिता वयम् ॥३०

नारद उवाच

तच्छ्रुत्वा तश्च संश्लाघ्य शीघ्रमन्तःपुरं गता ।
पुनरागत्य देवेभ्योऽथाज्ञां दत्वा गता पुरम् ॥३१

अथ देवगणाः सर्वे गोलोकं ददृशुः परम् ।
यत्र गोवर्द्धनो नाम गिरिराजो विराजते ॥३२

वसन्तमालिनीभिश्च गोपीभिर्गोगणावृतः ।
कल्पवृक्षलतासङ्घैः रासमण्डलमण्डित. ॥३३

यत्र कृष्णानदी श्यामा तोलिकाकोटिमण्डिता ।
वैडूर्य्यकृतसोपाना स्वच्छन्दगतिरुत्तमा ॥३४

वृन्दावनं भ्राजमानं दिव्यद्रुमलताकुलम् ।
चित्रपक्षिमधुव्रातैर्वंशीवटविराजितम् ॥३५

पुलिने शीतले वायुर्मन्दगामी वहत्यलम् ।
सहस्रदलपद्मानां रजो विक्षेपयन् मुहुः ॥३६

मध्ये निजनिकुञ्जोऽस्ति द्वात्रिंशद्वनसंयुतः ।
प्राकारपरिखायुक्तोऽरुणाक्षयवटाजिरः ॥३७॥
सप्त द्वाः पद्मरागाढ्याश्रजिरकुड्यविभूषिताः ।
कोटीन्दुमण्डलाकारैर्वितानैर्गुलिकायुभि. ॥३८
पतत्पताकैर्दिव्याभैः पुष्पमन्दिरवर्त्मभिः ।
मत्तभ्रमरसङ्गीतोन्मत्तबर्हिपिकस्वनः ॥३९
बालार्ककुण्डलधराः शतचन्द्रप्रभाः स्त्रियः ।
स्वच्छन्दगतयो रत्नैः पश्यन्त्यः सुन्दरं मुखम् ॥४०
रत्नाजिरेषु धावन्त्यो हारकेयूरभूषिताः ।
क्वणन्नूपुरकिङ्किण्यश्चूडामणिविराजिताः ॥४१
कोटिशः कोटिशो गावो द्वारि द्वारि मनोहराः ।
श्वेतपर्वतसङ्काशा दिव्यभूषणभूषिताः ॥४२

पयस्विन्यस्तरुण्यश्च शीलरूपगुणैर्युताः ।
सवत्साः पीतपुच्छाश्च व्रजन्त्यो भव्यमूर्तिकाः ॥४३
घण्टामञ्जीरसंरावाः किङ्किणीजालमण्डिताः ।
हेमशृङ्ग्यो हेमतुल्यहारमालाः स्फुरत्प्रभाः ॥४४
पाटला हरितास्ताम्राः पीताः श्यामा विचित्रिताः ।
धूम्राः कोकिलवर्णाश्च यत्र गावस्त्वनेकशः ॥४५
समुद्रवद्दुग्धदाश्च तरुणीकरचिह्निताः ।
कुरङ्गवद्विलङ्घद्भिर्गोवत्सैर्मण्डिताः शुभाः ॥४६
इतस्ततश्चलन्तश्च गोगणेषु महावृषाः ।
दीर्घकन्धरशृङ्गाढ्या यत्र धर्मधुरन्धराः ॥४७
गोपाला वेत्रहस्ताश्च श्यामा वंशीधराः पराः ।
कृष्णलीलां प्रगायन्तो रागैर्मदनमोहनैः ॥४८
इत्थं निजनिकुञ्जे तान्नत्वा मध्ये गताः सुराः ।
ज्योतिषां मण्डले पद्मं सहस्रदलशोभितम् ॥ ४९
तदूर्ध्वं षोडशदलं ततोऽष्टदलपङ्कजम् ।
तस्योपरि स्फुरद्दीर्घसोपानत्रयमण्डितम् ॥ ५०
सिंहासनं परं दिव्यं कौस्तुभैः खचितं शुभैः ।
ददृशुर्देवतास्तत्र श्रीकृष्णं राधयायुतम् ॥ ५१
दिव्यैरष्टसखीसङ्घैर्मोहिन्यादिभिरन्वितम् ।
श्रीदामाद्यैः सेव्यमानमष्टगोपालमण्डलैः ॥ ५२
हंसाभैर्व्यजनान्दोलचामरैर्वज्रमुष्टिभिः ।
कोटिचन्द्रप्रतीकाशैः सेवितं छत्रकोटिभिः ॥ ५३

श्रीराधिकालङ्कृतवामबाहुं
स्वच्छन्दवक्रीकृतदक्षिणाङ्घ्रिम् ।
वंशीधरं सुन्दरमन्दहासं
भ्रूमण्डलामोहितकामराशिम् ॥ ५४

घनप्रभं पद्मदलायतेक्षणं
प्रलम्बबाहुं परिपीतवाससम् ।
वृन्दावनोन्मत्तमिलिन्दशब्दया
विराजितं श्रीवनमालया हरिम् ॥ ५५
काञ्चीकलाकङ्कणनूपुरद्युतिं
लसन्मनोहारि महोज्ज्वलस्मितम् ।
श्रीवत्सरत्नोत्तमकुन्तलश्रियं
किरीटहाराङ्गदकुण्डलत्विषम् ॥ ५६
दृष्ट्वा तमानन्दसमुद्रमग्नव-
त्प्रहर्षिताह्यश्रुकलाकुलेक्षणाः ।
ततः सुराः प्राञ्जलयो नतानना
नेमुर्मुरारिं पुरुषं परायणम् ॥ ५७

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे श्रीगोलोकधामवर्णनं नाम
द्वितीयोऽध्यायः ॥२

बहुलाश्व उवाच

मुने देवा महात्मानं कृष्णं दृष्ट्वा परात्परम्।
अग्रे किं चक्रिरे तत्र तन्मे ब्रूहि कृपां कुरु॥ १

नारद उवाच

सर्वेषां पश्यतां तेषां वैकुण्ठः श्रीहरिस्ततः।
उत्थायाष्टभुजः साक्षाल्लीनोऽभूत् कृष्णविग्रहे॥ २

तदैव चागतः पूर्णो नृसिंहश्चण्डविक्रमः।
कोटिसूर्यप्रतीकाशो लीनोऽभूत्कृष्णविग्रहे॥ ३

रथे लक्षहये शुभ्रे स्थितश्चागतवांस्ततः।
श्वेतद्वीपाधिपो भूमा सहस्रभुजमण्डितः॥ ४

श्रिया युक्तः स्वायुधाढ्यः पार्षदैः परिसेवितः।
स प्रलीनो बभूवाशु सोऽपि श्रीकृष्णविग्रहे॥ ५

तदैव चागतः साक्षाद्रामो राजीवलोचनः।
धनुर्बाणधरः सीताशोभितो भ्रातृभिर्वृतः॥ ६

दशकोट्यर्कसङ्काशे चामरान्दोलिते रथे।
असंख्यवानरेन्द्राढ्ये लक्षचक्रघनस्वने॥ ७

लक्षध्वजे लक्षहये शातकौम्भे स्थितस्ततः।
श्रीकृष्णविग्रहे पूर्णः सम्प्रलीनो बभूव ह॥ ८

तदैव चागतः साक्षाद्यज्ञो नारायणो हरिः।
प्रस्फुरत्प्रलयाटोपज्ज्वलदग्निशिखोपमः॥ ९

रथे ज्योतिर्मये दृश्यो दक्षिणाढ्यः सुरेश्वरः।
सोऽपि लीनो बभूवाशु श्रीकृष्णे श्यामविग्रहे॥ १०

तदा चागतवान् साक्षान्नरनारायणः प्रभुः ।
चतुर्भुजो विशालाक्षो मुनिवेषो घनद्युतिः ॥ ११
तडित्कोटिजटाजूटः प्रस्फुरद्दीप्तिमण्डलः ।
मुनीन्द्रमण्डलैर्दिव्यैर्मण्डितोऽखण्डितव्रतः ॥ १२
सर्वेषां पश्यतां तेषामाश्चर्यमनसां नृप ।
सोऽपि लीनो बभूवाशु श्रीकृष्णे श्यामसुन्दरे ॥ १३
परिपूर्णतमं साक्षाच्छ्रीकृष्णञ्च स्वयं प्रभुम् ।
ज्ञात्वा देवाः स्तुतिं चक्रुः परं विस्मयमागताः ॥१४

देवा ऊचुः

कृष्णाय पूर्णपुरुषाय परात्पराय
यज्ञेश्वराय परकारणकारणाय ।
राधावराय परिपूर्णतमाय साक्षाद्-
गोलोकधामधिषणाय नमः परस्मै ॥१५
योगेश्वराः किल वदन्ति महः परं त्वां
तत्रैव सात्वततमाः कृतविग्रहञ्च ।
अस्माभिरद्य विदितं पदयोर्द्वयं ते
तस्मै नमोऽस्तु महसां पतये परस्मै ॥१६
व्यङ्ग्येन वा न नहि लक्षणया कदापि
स्फोटेन यच्च कवयो न विशन्ति मुख्याः ।
निर्देश्यभावरहितं प्रकृतेः परं तं
त्वां ब्रह्म निर्गुणमज शरणं व्रजामः ॥१७
त्वां ब्रह्म केचिदवयन्ति परे च कालं
केचित् प्रसांख्यमपरे भुवि कर्मरूपम् ।
पूर्वे च योगमपरे किल कर्तृभाव-
मन्योक्तिभिर्न विदितं शरणं गताः स्म ॥१८

श्रेयस्करीं भगवतस्तव पादसेवां
हित्वाथ तीर्थयजनादितपश्चरन्ति ।
ज्ञाने नये च विदिता बहुविघ्नसङ्घैः
सन्ताडिताः किल भवन्ति न ते कृतार्थाः ॥१९
विज्ञाप्यमद्य किमु देव अशेषसाक्षी
यः सर्वभूतहृदयेषु विराजमानः ।
देवैर्नमद्भिरमलाशययुक्तदेहै-
स्तस्मै नमो भगवते पुरुषोत्तमाय ॥२०
यो राधिकाहृदयसुन्दरचन्द्रहारः
श्रीगोपिकानयनजीवनमूलरूपः ।
गोलोकधामधिषणध्वज आदिदेवः
स त्वं विपत्सु विबुधान् परिपाहि पाहि ॥२१
वृन्दावनेश गिरिराजपते व्रजेश
गोपालवेषकृतनित्यविहारलील ।
राधापते श्रुतिधराधिपतेऽध्वर त्वं
गोवर्द्धनोद्धरणदुर्द्धरधर्मधारिन् ॥२२

नारद उवाच

इत्युक्तो भगवान् साक्षाच्छ्रीकृष्णो गोकुलेश्वरः ।
प्रत्याह प्रणतान् देवान् मेघगम्भीरया गिरा ॥२३

भगवानुवाच

हे सुरज्येष्ठ हे शम्भो देवाः शृणुत मद्वचः ।
यादवेषूपजन्यध्वं स्वस्वस्त्रीभिर्मदाज्ञया ॥२४
अहञ्चावतरिष्यामि हरिष्यामि भुवो भरम् ।
करिष्यामि च वः कार्यं भविष्यामि यदोः कुले ॥२५
वेदा मे वचनं विप्रा मुखं गावस्तनुर्मम ।
अङ्गानि देवता यूयं साधवो ह्यसवो हृदि ॥२६

युगे युगे च बाध्येत यदा पाषण्डिभिर्जनैः।
धर्म्मः क्रतुर्दया साक्षात्तदात्मानं सृजाम्यहम् ॥२७

नारद उवाच

इत्युक्तवन्तं जगदीश्वरं हरिं
राधा पतिं प्राह वियोगविह्वला।
दावाग्निना दावलतेव मूर्च्छिता
सकम्परोमाञ्चितभावसंवृता ॥२८

राधोवाच

भुवो भरं हर्तुमलं भुवं व्रज
कृतं परं मे शपथं शृणुष्व तत्।
गते त्वयि प्राणपतौ च विग्रहं
कदाचिदत्रैव न धारयाम्यहम् ॥२९
यदाथ मे त्वं शपथं न मन्यसे
द्वितीयवारं प्रवदामि वाक्यम्।
प्राणश्च मे गन्तुमतीवविह्वलः
कर्पूरधूलीकणवद् गमिष्यति ॥३०

भगवानुवाच

त्वया सह गमिष्यामि मा शोकं कुरु राधिके।
हरिष्यामि भुवो भारं करिष्यामि वचस्तव ॥३१

राधिकोवाच

यत्र वृन्दावनं नास्ति न यत्र यमुना नदी।
यत्र गोवर्द्धनो नास्ति तत्र मे न मनः सुखम् ॥३२

नारद उवाच

वेदनागक्रोशभूमिं स्वधाम्नः श्रीहरिः स्वयम्।
गोवर्द्धनञ्च यमुनां प्रेषयामास भूपरि ॥३३

तदा ब्रह्मा देवगणैर्नत्वा नत्वा पुनः पुनः ।
परिपूर्णतमं साक्षाच्छ्रीकृष्णं समुवाच ह ॥३४

ब्रह्मोवाच

अहं कुत्र भविष्यामि कुत्र त्वञ्च भविष्यसि ।
एते कुत्र भविष्यन्ति कैर्गृहैः कैश्चनामभिः ॥३५

भगवानुवाच

वसुदेवस्य देवक्यां भविष्यामि परः स्वयम् ।
रोहिण्यां मत्कला शेषो भविष्यति न संशयः ॥३६
श्रीः साक्षाद्रुक्मिणी भैष्मी शिवा जाम्बवती तथा ।
सत्या च तुलसी भूमौ सत्यभामा वसुन्धरा ॥३७
दक्षिणा लक्ष्मणा चैव कालिन्दी विरजा तथा ।
भद्रा ह्रीर्मित्रविन्दा च जाह्नवी पापनाशिनी ॥३८
रुक्मिण्यां कामदेवश्च प्रद्युम्न इति विश्रुतः ।
भविष्यति न सन्देहस्तस्य त्वञ्च भविष्यसि ॥३९
नन्दो द्रोणो वसुः साक्षाद् यशोदा सा धरा स्मृता ।
वृषभानुः सुचन्द्रश्च तस्य भार्या कलावती ॥४०
भूमौ कीर्तिरिति ख्याता तस्यां राधा भविष्यति ।
सदा रासं करिष्यामि गोपीभिर्व्रजमण्डले ॥४१

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे आगमोद्योगवर्णनंनाम
तृतीयोऽध्यायः ॥३

भगवानुवाच

नन्दोपनन्दौ भुवने श्रीदामा सुबलः सखा।
स्तोकः कृष्णोऽर्जुनोंऽशुश्च नव नन्दगृहे विधे ॥ १
विशालर्षभतेजस्विदेवप्रस्थवरूथपाः।
भविष्यन्ति सखायो मे व्रजे षड् वृषभानुषु ॥ २

ब्रह्मोवाच

कस्य वै नन्दपदवी कस्य वै वृषभानुता।
वद देव पते साक्षादुपनन्दस्य लक्षणम् ॥ ३

भगवानुवाच

गाः पालयन्ति घोषेषु सदा गोवृत्तयोऽनिशम्।
ते गोपाला मया प्रोक्तास्त्वन्येषां लक्षणं शृणु ॥ ४
नन्दः प्रोक्तः स गोपालै र्नवलक्षगवां पतिः।
उपनन्दश्च कथितः पञ्चलक्षगवां पतिः ॥ ५
वृषभानुः स उक्तो यो दशलक्षगवां पतिः।
गवां कोटिर्गृहे यस्य नन्दराजः स एव हि ॥ ६
कोट्यर्धञ्च गवां यस्य वृषभानुवरस्तु सः।
एतादृशौ व्रजे द्वौ तु सुचन्द्रो द्रोण एव हि।
सर्वलक्षणलक्षण्यौ गोपराजौ भविष्यतः ॥ ७
शतचन्द्राननानाञ्च सुन्दरीणां सुवाससाम्।
गोपीनां मद्व्रजे रम्ये शतं यूथो भविष्यति ॥ ८

ब्रह्मोवाच

हे दीनबन्धो हे देव जगत्कारणकारण।
यूथस्य लक्षणं सर्वं तन्मे ब्रूहि परेश्वर ॥ ९

भगवानुवाच

अर्बुदं दशकोटीनां मुनिभिः कथितं विधे।
दशार्बुद यत्र भवेत् सोऽपि यूथः प्रकथ्यते॥ १०
गोलोकवासिन्यः काश्चित् काश्चिद्वै द्वारपालिकाः।
शृङ्गारप्रकराः काश्चित् काश्चिच्छय्योपकारकाः॥ ११
पार्षदाख्यास्तथा काश्चिच्छ्रीवृन्दावनपालिकाः।
गोवर्द्धननिवासिन्य. काश्चित्कुञ्जविधायकाः॥ १२
मे निकुञ्जनिवासिन्यो भविष्यन्ति व्रजे मम।
एवञ्च यमुनायूथो जाह्नवीयूथ एव च॥ १३
रमाया मधुमाधव्या विरजायास्तथैव च।
ललिताया विशाखाया मायायूथो भविष्यति॥ १४
एताह्यष्टसखीनाञ्च सखीनां किल षोडश।
द्वात्रिंशच्च सखीनान्तु यूथा भाव्या व्रजे विधे॥ १५
श्रुतिरूपा ऋषिरूपा मैथिलाः कौशलास्तथा।
अयोध्यापुरवासिन्यो यज्ञसीताः पुलिन्दकाः॥ १६
यासां मया वरो दत्तो पूर्वे पूर्वे युगे युगे।
तासां यूथा भविष्यन्ति गोपीनां मद्व्रजे शुभे॥ १७

ब्रह्मोवाच

एताः कथं व्रजे भाव्याः केन पुण्येन कैर्वरैः।
दुर्लभ हि पदं तद्वै योगिभि॰ पुरुषोत्तम॥ १८

भगवानुवाच

श्वेतद्वीपे च भूमानं श्रुतयस्तुष्टुवुः परम्।
उशतीभिर्गिराभिश्च प्रसन्नोऽभूत् सहस्रपात्॥ १९

हरिरुवाच

वरं वृणीत यूयं वै यन्मनोवाञ्छितं महत्।
येषां प्रसन्नोऽहं साक्षात्तेषां किं दुर्लभं भुवि॥ २०

श्रुतय ऊचुः

वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ।
आनन्दमात्रमितियद्वदन्तीह पुराविदः ।
तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ २१

भगवानुवाच

श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् ।
केवलानुभवानन्दमात्रमक्षरमव्ययम् ॥ २२
यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः ।
मनोरमनिकुञ्जाढ्य सर्वर्तुसुखसंयुतम् ॥ २३
यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः ।
रत्नधातुमयः श्रीमान् सुपक्षिगृहसङ्कुल. ॥ २४
यत्र निर्मलपानीया कालिन्दी सरितां वरा ।
रत्नबद्धोभयतटी हंसपद्मादिसङ्कुला ॥ २५
नानारासरसोन्मत्तं यत्र गोपीकदम्बकम् ।
तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः ॥ २६
दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः ।
दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम् ॥ २७

श्रुतय ऊचुः

कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः ।
कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् ॥२८
यथा गोलोकवासिन्यः कामिनीत्वेन गोपिकाः ।
भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥ २९

हरिरुवाच

दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः ।
मयानुमोदितः सम्यक् सत्यो भवितुमर्हति ॥ ३०

आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते ।
कल्पसारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥३१
पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले ।
वृन्दावने भविष्यामि प्रेयान् वो रासमण्डले ॥३२
जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम् ।
मयि सम्प्राप्य सर्वा हि कृतकृत्या भविष्यथ ॥३३

भगवानुवाच

ताश्च गोप्यो भविष्यन्ति पूर्वकल्पवरान्मम ।
अन्यासाञ्चैव गोपीनां लक्षणं शृणु तद्विधे ॥३४
सुराणां रक्षणार्थाय राक्षसानां वधाय च ।
त्रेतायां रामचन्द्रोऽभूद्वीरो दशरथात्मजः ॥३५
सीतास्वयंवरं गत्वा धनुर्भङ्गं चकार सः ।
उवाह जानकीं सीतां रामो राजीवलोचनः ॥३६
तं दृष्ट्वा मैथिलाः सर्वाः पुरन्ध्र्यो मुमुहुर्विधे ।
रहस्यूचुर्महात्मानं भर्ता नो भव हे रघो ॥३७
ता आह राघवेन्द्रश्च मा शोचं कुरुत स्त्रियः ।
द्वापरान्ते करिष्यामि भवतीनां मनोरथम् ॥३८
तीर्थं दानं तपः शौचं समाचरत तत्त्वतः ।
श्रद्धया परया भक्त्या व्रजे गोप्यो भविष्यथ ॥३६
इति ताभ्यो वरं दत्वा श्रीरामः करुणानिधिः ।
कोशलान् प्रययौ धन्वी तेजसा जितभार्गवः ॥४०
मार्गे च कौशला नार्यो रामं दृष्ट्वातिसुन्दरम् ।
मनसा वव्रिरे तं वै पतिं कन्दर्पमोहनम् ॥४१
मनसापि वरं रामो ददौ ताभ्यो ह्यशेषवित् ।
मनोरथं करिष्यामि व्रजे गोप्यो भविष्यथ ॥४२
आगतं सीतया सार्द्धं सैन्येन रघुनन्दनम् ।

अयोध्यापुरवासिन्यः श्रुत्वा द्रष्टुं समाययुः ॥४३
वीक्ष्य तं मोहमापन्ना मूर्च्छिताः प्रेमविह्वलाः ।
तेपुस्तपस्ताः सरयूतीरे रामधृतव्रताः ॥४४
आकाशवागभूत्तासां द्वापरान्ते मनोरथः ।
भविष्यति न सन्देहः कालिन्दीतीरजे वने ॥४५
पितुर्वाक्याद्यदा रामो दण्डकाख्यं वनं गतः ।
चचार सीतया सार्द्धं लक्ष्मणेन धनुष्मता ॥४६
गोपालोपासकाः सर्वे दण्डकारण्यवासिनः ।
ध्यायन्तः सततं मां वै रासार्थं ध्यानतत्पराः ॥४७
येषामाश्रममासाद्य धनुर्बाणधरो युवा ।
तेषां ध्याने गतो रामो जटामुकुटमण्डितः ॥४८
अन्याकृतिं ते तं वीक्ष्य परं विस्मितमानसाः ।
ध्यानादुत्थाय ददृशुः कोटिकन्दर्पसन्निभम् ॥४९
ऊचुस्तेऽयं नु गोपालो वंशीवेत्रे विना प्रभुः ।
इत्थं विचार्य मनसा नेमुश्चक्रुः स्तुतिं पराम् ॥५०
वरं वृणीत मुनयः श्रीरामस्तानुवाच ह ।
यथा सीता तथा सर्वे भूयाः स्म इति वादिनः ॥५१

राम उवाच

यथा हि लक्ष्मणो भ्राता तथा प्रार्थ्यो वरो यदि ।
अद्यैव सफलो भाव्यो भवद्भिर्मत्प्रसङ्गतः ॥५२
सीता यथेति वाक्येन दुर्घटो दुर्लभो वरः ।
एकपत्नीव्रतोऽहं वै मर्यादापुरुषोत्तमः ॥५३
तस्मात्तु मद्वरेणापि द्वापरान्ते भविष्यथ ।
मनोरथं करिष्यामि भवतां वाञ्छितं परम् ॥ ५४
इति दत्वा वरं रामस्ततः पञ्चवटीं गतः ।
पर्णशालां समासाद्य वनवासं चकार ह ॥ ५५

तद्दर्शनस्मररुजः पुलिन्द्यः प्रेमविह्वलाः ।
श्रीमत्पादरजो धृत्वा प्राणांस्त्यक्तु समुद्यताः ॥ ५६
ब्रह्मचारिवपुर्भूत्वा रामस्तत्र समागतः ।
उवाच प्राणसन्त्यागं मा कुर्य्यात स्त्रियो वृथा ॥ ५७
वृन्दावने द्वापरान्ते भविता वो मनोरथः ।
इत्युक्त्वा ब्रह्मचारी तु तत्रैवान्तरधीयत ॥ ५८
अथ रामो वानरेन्द्रै रावणादीन् निशाचरान् ।
जित्वा लङ्कामेत्य सीतां पुष्पकेण पुरं ययौ ॥ ५९
सीतां तत्याज राजेन्द्रो वने लोकापवादतः ।
अहो सतामपि भुवि भवन भूरि दुःखदम् ॥ ६०
यदा यदाऽकरोद्यज्ञं रामो राजीवलोचनः ।
तदा तदा स्वर्णमयीं सीतां कृत्वा विधानतः ॥ ६१
यज्ञसीतासमूहोऽभून्मन्दिरे राघवस्य च ।
ताश्चैतन्यघना भूत्वा रन्तुं रामं समागताः ॥ ६२
ता आह रघुवंशेन्द्रो नाहं गृह्णामि हे प्रियाः ।
तदोचुस्ता प्रेमपरा रामं दशरथात्मजम् ॥ ६३
कथञ्चास्मान्न गृह्णासि भजन्तीर्मैथिलीः सतीः ।
अर्धाङ्गीः यज्ञकालेषु सततं कार्यसाधिनीः ॥ ६४
धर्मिष्ठस्त्वं श्रुतिधरोऽधर्मवद्भाषसे कथम् ।
करं गृहीत्वा त्यजसि ततः पापमवाप्स्यसि ॥ ६५

राम उवाच

समीचीनं वचः सत्यं युष्माभिर्गदितञ्च मे ।
एकपत्नीव्रतोऽहं हि राजर्षिः सीतयैकया ॥ ६६
तस्माद्यूयं द्वापरान्ते पुण्ये वृन्दावने वने ।
भविष्यथ करिष्यामि युष्माकन्तु मनोरथम् ॥ ६७

भगवानुवाच

ता व्रजेऽपि भविष्यन्ति यज्ञसीताश्च गोपिकाः।
अन्यासाञ्चैव गोपीनां लक्षणं शृणु तद्विधे ॥ ६८

इति श्रीगर्गसंहितायां गोलोकखण्डे भगवद्ब्रह्म-
संवादे उद्योगप्रश्नवर्णनं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

भगवानुवाच

रमावैकुण्ठवासिन्यः श्वेतद्वीपसखीजनाः ।
ऊर्ध्ववैकुण्ठवासिन्यस्तथाऽजितपदाश्रिताः ॥ १
श्रीलोकाचलवासिन्यः श्रीसख्योऽपि समुद्रजाः ।
ता गोप्योऽपि भविष्यन्ति लक्ष्मीपतिवराद् व्रजे ॥ २
काश्चिद्दिव्या अदिव्याश्च तथा त्रिगुणवृत्तयः ।
भूमिगोप्यो भविष्यन्ति पुण्यैर्नानाविधैः कृतैः ॥ ३
यज्ञावतारं रुचिरं रुचिपुत्रं दिवस्पतिम् ।
मोहिताः प्रीतिभावेन वीक्ष्य देवजनस्त्रियः ॥ ४
ताश्च देवलवाक्येन तपस्तेपुर्हिमाचले ।
भक्त्या परमया ता मे गोप्यो भाव्या व्रजे विधे ॥ ५
अन्तर्हिते भगवति देवे धन्वन्तरौ भुवि ।
औषध्यो दुःखमापन्ना निष्फला भारतेऽभवन् ॥ ६
सिद्ध्यर्थन्तास्तपस्तेपुः स्त्रियो भूत्वा मनोहराः ।
चतुर्युगे व्यतीते तु प्रसन्नोऽभूद्धरिः परम् ॥ ७
वरं वृणीत चेत्युक्तं श्रुत्वा नार्यो महावने ।
तं दृष्ट्वा मोहमापन्ना ऊचुर्भर्ता भवात्र नः ॥ ८

हरिरुवाच

वृन्दावने द्वापरान्ते लता भूत्वा मनोहराः ।
भविष्यथ स्त्रियो रासे करिष्यामि वचश्च वः ॥ ९

भगवानुवाच

भक्तिभावसमायुक्ता भूरिभाग्या वराङ्गनाः ।
लतागोप्यो भविष्यन्ति वृन्दारण्ये पितामह ॥ १०

जालन्धर्यश्च या नार्य्यो वीक्ष्य वृन्दापतिं हरिम् ।
ऊचुर्वाऽयं हरिः साक्षादस्माकन्तु वरो भवेत् ॥ ११
आकाशवागभूत्तासां भजताशु रमापतिम् ।
यथा वृन्दा तथा यूयं वृन्दारण्ये भविष्यथ ॥ १२
समुद्रकन्याः श्रीमत्स्यं हरिं दृष्ट्वा च मोहिताः ।
ता हि गोप्यो भविष्यन्ति श्रीमत्स्यस्य वराद् व्रजे ॥ १३
आसीद्राजा पृथुः साक्षान्ममांशश्चण्डविक्रमः ।
जित्वा शत्रून्नृपश्रेष्ठो धरां कामान् दुदोह सः ॥ १४
बर्हिष्मतोभवास्तत्र पृथुं दृष्ट्वा पुरस्त्रियः ।
अत्रेः समीपमागत्य ता ऊचुर्मोहविह्वलाः ॥ १५
अयन्तु राजराजेन्द्रः पृथुः पृथुलविक्रमः ।
कथं वरो भवेन्नो वै तद्वद त्वं महामुने ॥ १६

अत्रिरुवाच

गोदोहं कुरुताश्वत्र पृथ्वीयं धारणामयी ।
सर्वं दास्यति वो दुर्गं मनोरथमहार्णवम् ॥ १७

[ भगवानुवाच ]

मनोरथं प्रदुदुहुर्मनःपात्रेण ताश्च गाम् ।
तस्माद्गोप्यो भविष्यन्ति वृन्दारण्ये पितामह ॥ १८
कामसेनामोहनार्थं दिव्या अप्सरसो वराः ।
नारायणस्य सहसा बभूवु र्गन्धमादने ॥ १९
भर्तृकामाश्च ता आह सिद्धो नारायणो मुनिः ।
मनोरथो वो भविता व्रजे गोप्यो भविष्यथ ॥ २०
स्त्रियः सुतलवासिन्यो वामनं वीक्ष्य मोहिताः ।
तपस्तप्त्वा भविष्यन्ति गोप्यो वृन्दावने विधे ॥ २१
नागेन्द्रकन्यकाः शेषं भेजुर्भर्त्तृया वरेच्छया ।
सङ्कर्षणस्य रासार्थं भविष्यन्ति व्रजे च ताः ॥ २२

कश्यपो वसुदेवश्च देवकी चादितिः परा।
शूरः प्राणो ध्रुवः सोऽपि देवकोऽवतरिष्यति ॥ २३
वसुश्चैवोद्धव. साक्षाद्दक्षोऽक्रूरो दयापरः।
हृदीको धनदश्चैव कृतवर्मा त्वपां पतिः ॥ २४
गद प्राचीनबर्हिश्च मरुतो ह्युग्रसेन उत्।
तस्य रक्षां करिष्यामि राज्यं दत्वा विधानतः ॥ २५
युयुधानश्चाम्बरीष प्रह्लादः सात्यकिस्तथा।
क्षीराब्धिः शन्तनुः साक्षाद्भीष्मो द्रोणो वसूत्तम. ॥ २६
शल्यश्चैव दिवोदासो धृतराष्ट्रो भगो रविः।
पाण्डुः पूषा सतां श्रेष्ठो धर्मो राजा युधिष्ठिर. ॥ २७
भीमो वायुर्बलिष्ठश्च मनुः स्वायम्भुवोऽर्जुनः।
शतरूपा सुभद्रा च सविता कर्ण एव हि ॥ २८
नकुलः सहदेवश्च स्मृतौ द्वावश्विनीसुतौ।
धाता वाह्लीकवीरश्च वह्निर्द्रोणः प्रतापवान् ॥ २९
दुर्योधनः कलेरंशोऽभिमन्यु सोम एव च।
द्रौणि साक्षाच्छिवस्यापि रूपं भूमौ भविष्यति ॥ ३०
इत्थं यदोः कौरवाणामन्येषां भूभुजां नृणाम्।
कुले कुले भवन्तश्च स्वांशै. स्त्रीभिर्मदाज्ञया ॥३१
ये येऽवतारा मे पूर्वं तेषां राज्यो रमांशका।
भविष्या राजराज्ञीषु सहस्राणि च षोडश ॥३२

नारद उवाच

इत्युक्त्वा श्रीहरिस्तत्र ब्रह्माणं कमलासनम्।
दिव्यरूपां भगवतीं योगमायामुवाच ह ॥३३

भगवानुवाच

देवक्याः सप्तमं गर्भं सन्निकृष्य महामते।
वसुदेवस्य भार्यायां कंसत्रासभयात् पुनः ॥३४

नन्दव्रजे स्थितायाश्च रोहिण्यां सन्निवेशय ।
नन्दपत्न्यां भव त्वं वै कृत्वेदं कर्म चाद्भुतम् ॥३५

नारद उवाच

श्रुत्वा ब्रह्मा देवगणै र्नत्वा कृष्णं परात्परम् ।
भूमिमाश्वास्य वाणीभिः स्वधाम निजमाययौ ॥३६
परिपूर्णतमं साक्षाच्छ्रीकृष्णं विद्धि मैथिल ।
कंसादीनां वधार्थाय प्राप्तोऽयं भूमिमण्डले ॥३७
रोममात्रं तनौ जिह्वा भवन्तीत्थं यदा नृप ।
तदापि श्रीहरेस्तस्य वर्ण्यते न गुणो महान् ॥३८
नभ. पतन्ति विहगा यथा ह्यात्मसमं नृप ।
तथा कृष्णगतिं दिव्यां वदन्तीह विपश्चितः ॥३९

इति श्रीगर्गसंहितायां गोलोकखण्डे भगवद्ब्रह्मसंवादे
भगवदागमोद्योगपूरणं नाम
पञ्चमोऽध्याय· ॥५

बहुलाश्व उवाच

कः कंसोऽयं पुरा दैत्यो महाबलपराक्रमः ।
तस्य जन्मानि कर्माणि ब्रूहि देवर्षिसत्तम ॥ १

नारद उवाच

समुद्रमथने पूर्वं कालनेमि र्महासुरः ।
युयुधे विष्णुना सार्द्धं युद्धे तेन हतो बलात् ॥ २
शुक्रेण जीवितस्तत्र सञ्जीवन्या स्वविद्यया ।
पुनर्विष्णुं योद्धुकाम उद्योगं मनसाऽकरोत् ॥ ३
तपस्तेपे तदा दैत्यो मन्दराचलसन्निधौ ।
नित्यं दूर्वारसं पीत्वा भजन् देवं पितामहम् ॥ ४
दिव्येषु शतवर्षेषु व्यतीतेषु पितामहः ।
अस्थिशेषं सवल्मीकं वरं ब्रूहीत्युवाच तम् ॥ ५

कालनेमिरुवाच

ब्रह्माण्डे ये स्थिता देवा विष्णुमूला महाबलाः ।
तेषां हस्तैर्न मे मृत्युः पूर्णानामपि मा भवेत् ॥ ६

ब्रह्मोवाच

दुर्लभोऽय वरो दैत्य यस्त्वया प्रार्थितः परः ।
कालान्तरे ते प्राप्तः स्यान्मद्वाक्यं न मृषा भवेत् ॥ ७

नारद उवाच

उग्रसेनस्य पत्न्यां कौ जन्म लेभेऽसुरः पुनः ।
कौमारेऽपि महामल्लैः सततं स युयोध ह ॥ ८
जरासन्धो मागधेन्द्रो दिग्जयार्थी विनिर्गतः ।
यमुनानिकटे तस्य शिबिरोऽभूदितस्ततः ॥ ९

द्विप कुवलयापीड. सहस्रद्विपसत्त्वभृत् ।
बभञ्ज शृङ्खलाबन्ध दुद्राव शिबिरान् महीम् ॥१०
निपातयन् स शिबिरान् मन्दिरान् भूजनांस्तटान् ।
रङ्गभूम्यामाजगाम यत्र कंसोऽपि युध्यति ॥११
पलायितेषु मल्लेषु कसस्तञ्च समागतम् ।
शुण्डादण्डे सङ्गृहीत्वा पातयामास भूतले ॥ १२
पुनर्गृहीत्वा हस्ताभ्यां भ्रामयित्वोग्रसेनज. ।
जरासन्धस्य सेनायां चिक्षेप दशयोजनम् ॥ १३
तदद्भुत बल दृष्ट्वा प्रसन्नो मागधेश्वर ।
अस्तिप्राप्ती ददौ कन्ये तस्मै कंसाय त द्विपम् ॥ १४
अश्वार्बुद हस्तिलक्षं रथानाञ्च त्रिलक्षकम् ।
अयुतञ्चैव दासीनां पारिबर्हं जरासुत. ॥ १५
द्वन्द्वयोधी तत कंसो भुजवीर्यमदोत्कट ।
माहिष्मतीं ययौ वीरोऽथैकाकी चण्डविक्रम ॥ १६
चाणूरो मुष्टिक कूट. शलस्तोशलकस्तथा ।
माहिष्मतीपतेः पुत्रा मल्ला युद्धजयैषिण ॥ १७
कंसस्तानाह साम्नापि दोर्युद्धं करवामहे ।
अह दासो भवेय वो भवन्तो जयिनो यदि ॥ १८
अहं जयी चेद्भवतो दासान् सर्वान् करोम्यलम् ।
सर्वेषां पश्यतां तेषां नागराणां महात्मनाम् ।
इति प्रतिज्ञां कृत्वाथ युयुधे तै जयैषिभिः ॥ १९
यदागत स चाणूरं गृहीत्वा यादवेश्वरः ।
भूपृष्ठे पोथयामास शब्दमुच्चैः समुच्चरन् ॥ २०
तदायान्तं मुष्टिकाख्यं मुष्टिभिर्युधि दुर्गमम् ।
एकेन मुष्टिना तं वै पातयामास भूतले ॥ २१

कूट समागत कंसो गृहीत्वा पादयोश्च तम् ।
पातयित्वा भूमिमध्ये चिक्षेप गगने बलात् ॥ २२
भुजमास्फोट्य धावन्त शलं नीत्वा भुजेन सः ।
पातयित्वा पुनर्नीत्वा भूमौ त विचकर्ष ह ॥ २३
अथ तोशलक कंसो गृहीत्वा भुजयो र्बलात् ।
निपात्य भूमावुत्थाप्य चिक्षेप दशयोजनम् ॥ २४
दासभावे च तान् कृत्वा तैः सार्द्धं यादवाधिप. ।
मद्वास्येन, जगामाशु प्रवर्षणगिरि वरम् ॥ २५
तस्मै निवेद्याभिप्रायं युयुधे वानरेण स' ।
द्विविदेनापि विंशत्या दिनैः कंसो ह्यविश्रमम् ॥ २६
द्विविदो गिरिमुत्पाट्य चिक्षेप तस्य मूर्द्धनि ।
कंसो गिरिं गृहीत्वा च तस्योपरि समाक्षिपत् ॥ २७
द्विविदो मुष्टिना कंसं घातयित्वा नभो गतः ।
धावन् कंसश्च तं नीत्वा पातयामास भूतले ॥ २८
मूर्च्छितस्तत्प्रहारेण परङ्कश्मलतां ययौ ।
क्षीणसत्त्वश्चूर्णितास्थिर्दासभावङ्गतस्तदा ॥ २९
तेनैवाथ गतः कस ऋष्यमूकवन ततः ।
तत्र केशी महादैत्यो हयरूपी घनस्वनः ॥ ३०
मुष्टिभिर्घातयित्वा तं वशीकृत्वारुरोह तम् ।
इत्थं कंसो महावीर्यो महेन्द्राख्यं गिरि ययौ ॥ ३१
शतवारश्चोज्जहार गिरिमुत्पाट्य दैत्यराट् ।
पुनस्तत्र स्थितं रामं क्रोधसंरक्तलोचनम् ॥ ३२
प्रलयार्कप्रभं दृष्ट्वा ननाम शिरसा मुनिम् ।
पुन. प्रदक्षिणीकृत्यो तदङ्घ्र्यो र्निपपात ह ॥ ३३
ततः शान्तो भार्गवोऽपि कंसं प्राह महोग्रदृक् ।
हे कीट कर्कटीडिम्भ तुच्छोऽसि मशको यथा ॥ ३४

अद्यैव त्वां हन्मि दुष्टक्षत्रियं वीरमानिनम् ।
मत्समीपे धनुरिदं लक्षभारसमं महत् ॥ ३५
इदञ्च विष्णुना दत्तं शम्भवे त्रैपुरे युधि ।
शम्भोः करादिह प्राप्तं क्षत्त्रियाणां वधाय च ॥ ३६
यदि चेदं तनोषि त्वं तदा च कुशलं भवेत् ।
चेदस्य कर्षणं न स्याद्घातयिष्यामि ते बलम् ॥ ३७
श्रुत्वा वचस्तदा दैत्यः कोदण्डं सप्ततालकम् ।
गृहीत्वा पश्यतस्तस्य सज्यं कृत्वाथ लीलया ॥ ३८
आकृष्य कर्णपर्यन्तं शतवारं ततान ह ।
प्रत्यञ्चास्फोटनेनैव टङ्कारोऽभूत्तडित्स्वनः ॥ ३९
ननाद तेन ब्रह्माण्डं सप्तलोकैर्बिलैः सह ।
विचेलुर्दिग्गजास्ताराऽपतन् भूखण्डमण्डलम् ॥ ४०
धनुः संस्थाप्य तत्कंसो नत्वा नत्वाह भार्गवम् ।
हे देव क्षत्त्रियो नास्मि दैत्योऽहं ते च किङ्करः ॥ ४१
तव दासस्य दासोऽहं पाहि मां पुरुषोत्तम ।
श्रुत्वा प्रसन्नः श्रीरामस्तस्मै प्रादाद्धनुश्च तत् ॥ ४२

जामदग्न्य उवाच

यत्कोदण्डं वैष्णवं तद्येन भङ्गीभविष्यति ।
परिपूर्णतमेनात्र सोऽपि त्वां घातयिष्यति ॥ ४३

नारद उवाच

अथ नत्वा मुनिं कंसो विचरन् स मदोत्कटः ।
न केऽपि युयुधुस्तेन राजानश्च बलिं ददुः ॥ ४४
समुद्रस्य तटे कंसो दैत्यं नाम्ना ह्यघासुरम् ।
सर्पाकारञ्च फूत्कारैर्लेलिहानं ददर्श ह ॥ ४५
आगच्छन्तं दशन्तञ्च गृहीत्वा तं निपात्य सः ।
चकार स्वगले हारं निर्भयो दैत्यराड् बली ॥ ४६

प्राच्यान्तु वङ्गदेशेषु दैत्योऽरिष्टो महावृषः ।
तेन सार्धं स युयुधे गजेनापि गजो यथा ॥ ४७
शृङ्गाभ्यां पर्वतं नीत्वा चिक्षेप कंसमूर्द्धनि ।
कंसो गिरिं सङ्गृहीत्वा प्राक्षिपत्तस्य मस्तके ॥ ४८
जघान मुष्टिनारिष्टं कंसो वै दैत्यपुङ्गवः ।
मूर्च्छितं तं विनिर्जित्य तेनोदीचीं दिशं गतः ॥ ४९
प्राग्ज्योतिषेश्वरं भौमं नरकाख्यं महाबलम् ।
उवाच कंसो युद्धार्थी युद्धं मे देहि दैत्यराट् ॥ ५०
अहं दासो भवेयं वो भवन्तो जयिनो यदि ।
अहं जयी चेद्भवतो दासान् सर्वान् करोम्यहम् ॥ ५१

नारद उवाच

पूर्वं प्रलम्बो युयुधे कंसेनापि महाबलः ।
मृगेन्द्रेण मृगेन्द्रो वा उद्भटेन यथोद्भटः ॥ ५२
मल्लयुद्धे गृहीत्वा तं कंसो भूमौ निपात्य च ।
पुनर्गृहीत्वा चिक्षेप प्राग्ज्योतिषपुरोदरे ॥ ५३
आगतो धेनुको नाम्ना कंसं जग्राह रोषतः ।
नोदयामास दूरेण बलं कृत्वाथ दारुणम् ॥ ५४
कंसस्तं नोदयामास धेनुकं शतयोजनम् ।
निपात्य चूर्णयामास तदङ्गं मुष्टिभिर्दृढैः ॥ ५५
तृणावर्त्तो भौमवाक्यात् कंसं नीत्वा नभो गतः ।
तत्रैव युयुधे दैत्य ऊर्ध्वं वै लक्षयोजनम् ॥ ५६
कंसोऽनन्तबलं कृत्वा दैत्यं नीत्वा तदाम्बरात् ।
भूम्यां सम्पातयामास वमन्तं रुधिरं मुखात् ॥ ५७
तुण्डेनाथ ग्रसन्तञ्च बकं दैत्यं महाबलम् ।
कंसो निपातयामास मुष्टिना वज्रघातिना ॥ ५८
उत्थाय दैत्यो बलवान् सितपक्षो घनस्वनः ।

क्रोधयुक्तः समुत्पत्य तीक्ष्णतुण्डोऽग्रसच्च तम् ॥ ५९
निगीर्णोऽपि स वज्राङ्गस्तद्गले रोधकृच्च यः ।
सद्यश्चच्छर्द तं कंसं क्षतकण्ठो महाबकः ॥ ६०
कंसो बकं सङ्गृहीत्वा पातयित्वा महीतले ।
कराभ्यां भ्रामयित्वा च युद्धे तं विचकर्ष ह ॥ ६१
तत्स्वसारं पूतनाख्यां योद्धुकामामवस्थिताम् ।
तामाह कंसः प्रहसन् वाक्यं मे शृणु पूतने ॥ ६२
स्त्रिया सार्द्धमहं युद्धं न करोमि कदाचन ।
बकासुरः स्यान्मे भ्राता त्वञ्च मे भगिनी भव ॥ ६३
ततोऽनन्तबलं कंसं वीक्ष्य भौमोऽपि धर्षितः ।
चकार सौहृदं कंसे साहाय्यार्थं सुरान् प्रति ॥ ६४

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे कंसबलवर्णनं नाम
षष्ठोऽध्यायः ॥६

नारद उवाच

अथ कंसः प्रलम्बाद्यैरन्यैः पूर्वजितैश्च तैः ।
शम्बरस्य पुरं प्रागात् स्वाभिप्रायं निवेदयन् ॥ १
शम्बरो ह्यतिवीर्योऽपि न युयोध स तेन वै ।
चकार सौहृदं कंसे सर्वैरतिबलैः सह ॥ २
त्रिशृङ्गशिखरे शेते व्योमा नामासुरो बली ।
कंसपादप्रबुद्धोऽभूत् क्रोधसंरक्तलोचनः ॥ ३
कंसं जघान चोत्थाय प्रबलैर्दृढमुष्टिभिः ।
तयोर्युद्धमभूद् घोरमितरेतरमुष्टिभिः ॥ ४
कंसस्य मुष्टिभिः सोऽपि निःसत्त्वोऽभूद् भ्रमातुरः ।
भृत्यं कृत्वाथ तं कंसः प्राप्तं मां प्रणनाम ह ॥ ५
हे देव युद्धकाङ्क्षास्ति क्व यामि त्वं वदाशु मे ।
प्रोवाच तं तदा गच्छ दैत्यं बाणं महाबलम् ॥ ६
प्रेरितश्चेति कंसाख्यो मया युद्धदिदृक्षुणा ।
भुजवीर्यमदोन्नद्धः शोणिताख्यं पुरं ययौ ॥ ७
बाणासुरस्तत्प्रतिज्ञां श्रुत्वा क्रुद्धो ह्यभूद्भृशम् ।
तताड लत्तां भूमध्ये जगर्ज घनवद्बली ॥ ८
आजानुभूमिगां लत्तां पातालान्तमुपागताम् ।
कृत्वा तमाह बाणस्तु पूर्वं चैनां समुद्धर ॥ ९
श्रुत्वा वचः कराभ्यां तामुज्जहार मदोत्कटः ।
प्रचण्डविक्रमः कंसः खरदण्डं गजो यथा ॥ १०
तयाचोद्धृतयोत्खाता लोकाः सप्ततला दृढाः ।
निपेतुर्गिरयोऽनेका विचेलुर्दृढदिग्गजाः ॥ ११

योद्धुं तमुद्यतं बाणं दृष्ट्वागत्य वृषध्वजः ।
सर्वान् सम्बोधयामास प्रोवाच बलिनन्दनम् ॥ १२
कृष्णं विनापरं चैनं भूमौ कोऽपि न जेष्यति ।
भार्गवेण वरं दत्तं धनुरस्मै च वैष्णवम् ॥ १३

नारद उवाच

इत्युक्त्वा सौहृदं ह्यं सद्यो वै कंसबाणयोः ।
चकार परया शान्त्या शिवः साक्षान्महेश्वरः ॥ १४
अथ कंसो दिक्प्रतीच्यां श्रुत्वा वत्सं महासुरम् ।
तेन सार्धं स युयुधे वत्सरूपेण दैत्यराट् ॥ १५
पुच्छे गृहीत्वा तं वत्सं पोथयामास भूतले ।
वशीकृत्वाथ तं शीघ्रं म्लेच्छदेशांस्ततो ययौ ॥ १६
मन्मुखात् कालयवनं श्रुत्वा दैत्यं महाबलम् ।
निर्ययौ सम्मुखे योद्धुं रक्तश्मश्रुर्गदाधरः ॥ १७
कंसो गदां गृहीत्वा, स्वां लक्षभारविनिर्मिताम् ।
प्राक्षिपद्यवनेन्द्राय सिंहनादमथाकरोत् ॥ १८
गदायुद्धमभूत्तत्र घोरं हि कंसकालयोः ।
विस्फुलिङ्गान् क्षरन्त्यौ द्वे गदे चूर्णीबभूवतुः ॥ १९
कंसः कालं सङ्गृहीत्वा पातयामास भूतले ।
पुनर्गृहीत्वा निष्पात्य मृततुल्यं चकार ह ॥ २०
बाणवर्षां प्रकुर्वन्तीं सेनां तां यवनस्य च ।
गदया पोथयामास कंसो दैत्याधिपो बली ॥ २१
गजांस्तुरङ्गान् सरथान् वीरान् भूमौ निपात्य च ।
जगर्ज घनवद्वीरो गदायुद्धे मृधाङ्गणे ॥ २२
ततश्च दुद्रुवुर्म्लेच्छाः त्यक्त्वा-स्वं स्वं रणं परम् ।
भीतान् पलायितान् म्लेच्छांश्च जघानाथ नीतिवित् ॥ २३

उच्चपादो दीर्घजानुः स्तम्भोरुर्लघिमा कटिः ।
कपाटवक्षा. पीनांसः पुष्टः प्रांशुर्बृहद्भुजः ॥ २४
पद्मनेत्रो बृहत्केशोऽरुणवर्णोऽसिताम्बरः ।
किरीटी कुण्डली हारी पद्ममाली लयार्करुक् ॥ २५
खड्गी निषङ्गी कवची मुद्गराढ्यो धनुर्धरः ।
मदोत्कटो ययौ जेतु देवान् कंसोऽमरावतीम् ॥ २६
चाणूरमुष्टिकारिष्टशलतोशलकेशिभि· ।
प्रलम्बेन बकेनापि द्विविदेन समावृत. ॥ २७
तृणावर्त्ताघकूटैश्च भौमबाणाख्यशम्बरैः ।
व्योमधेनुकवत्सैश्च रुरुधे सोऽमरावतीम् ॥ २८.
कसादीनागतान् दृष्ट्वा शक्रो देवाधिपः स्वराट् ।
सर्वैर्देवगणैः सार्धं योद्धुं क्रुद्धो विनिर्ययौ ॥ २९
तयो र्युद्धमभूद्घोरं तुमुलं रोमहर्षणम् ।
दिव्यैश्च शस्त्रसम्पातैर्बाणैस्तीक्ष्णै· स्फुरत्प्रभैः ॥ ३०
शस्त्रान्धकारे सञ्जाते रथारूढो महेश्वरः ।
चिक्षेप वज्र कंसाय शतधार तडिद्युति ॥ ३१
मुद्गरेणापि तद्वज्र तताडाशु महासुरः ।
पपात कुलिशं युद्धे छिन्नधारं बभूव ह ॥ ३२
त्यक्त्वा वज्र तदा वज्री खड्गं जग्राह रोषतः ।
कंसं मूर्ध्नि तताडाशु नादं कृत्वाथ भैरवम् ॥ ३३
स क्षतो नाभवत् कंसो मालाहत इव द्विपः ।
गृहीत्वा स गदां गुर्वीमष्टधातुमयीं दृढाम् ॥ ३४
लक्षभारसमां कंसश्चिक्षेपेन्द्राय दैत्यराट् ।
तां समापततीं वीक्ष्य जग्राहाशु पुरन्दरः ॥ ३५
ततश्चिक्षेप दैत्याय गदां नमुचिसूदनः ।
चचार युद्धे विदलन्नरीन् मातलिसारथिः ॥ ३६

कंसो गृहीत्वा परिघं तताडांसेऽसुरद्विषः ।
तत्प्रहारेण देवेन्द्रः क्षणं मूर्च्छामवाप ह ॥ ३७
कंसं मरुद्गणाः सर्वे गृध्रपक्षैः स्फुरत्प्रभैः ।
बाणौघैश्छादयामासुः प्रावृट्सूर्यमिवाम्बुदः ॥ ३८
दोःसहस्रयुतो वीरश्चापांष्टङ्कारयन् मुहुः ।
तदा तान् कालयामास बाणैर्बाणासुरो बली ॥ ३९
बाणाश्च वसवो रुद्रा आदित्या ऋभवः सुराः ।
जघ्नुर्नानाविधैः शस्त्रैः सर्वतोऽद्रिं यथा गजाः ॥ ४०
ततो भौमासुरः प्राप्तः प्रलम्बाद्यसुरैर्नदन् ।
तेन नादेन देवास्ते निपेतुर्मूर्च्छिता रणे ॥ ४१
उत्थायाशु तदा शक्रो गजमारुह्य रक्तदृक् ।
नोदयामास कंसाय मत्तमैरावतं गजम् ॥ ४२
अङ्कुशास्फालनात् क्रुद्धः पातयन्त पदैर्द्विपः ।
शुण्डादण्डस्य फूत्कारैर्मर्दयन्तमितस्ततः ॥ ४३
स्रवन्मदं चतुर्दन्तं हिमाद्रिमिव दुर्गमम् ।
नदन्तं शृङ्खलां शुण्डां चालयन्तं मुहुर्मुहुः ॥ ४४
घण्टाढ्यं किङ्किणीजालरत्नकम्बलमण्डितम् ।
गोमूत्रचयसिन्दूरकस्तूरीपत्रभृन् मुखम् ॥ ४५
दृढेन मुष्टिना कंसस्तं तताड महागजम् ।
द्वितीयमुष्टिना शक्रं स जघान रणाङ्गणे ॥ ४६
तस्य मुष्टिप्रहारेण दूरे शक्रः पपात ह ।
जानुभ्यां धरणीं स्पृष्ट्वा गजोऽपि विह्वलोऽभवत् ॥ ४७
पुनरुत्थाय नागेन्द्रो दन्तैश्चाहत्य दैत्यपम् ।
शुण्डादण्डेन चोद्धृत्वा चिक्षेप लक्षयोजनम् ॥ ४८
पतितोऽपि स वज्राङ्गः किञ्चिद्व्याकुलमानसः ।
स्फुरदोष्ठोऽतिरुष्टाङ्गो युद्धभूमिं समाययौ ॥ ४९

कंसो गृहीत्वा नागेन्द्रं सन्निपात्य रणाङ्गणे ।
निष्पीड्य शुण्डं तस्यापि दन्तांश्चूर्णीचकार ह ॥ ५०
अथ चैरावतो नागो दुद्रावाशु रणाङ्गणात् ।
निपातयन् महावीरान् देवधानीं पुरीं गतः ॥ ५१
गृहीत्वा वैष्णवं चापं सज्यं कृत्वाथ दैत्यराट् ।
देवान् विद्रावयामास बाणौघैश्च धनुःस्वनैः ॥ ५२

ततः सुरास्तेन निहन्यमाना
विदुद्रुवुर्दीनधियो दिशान्ते ।
केचिद्रणे मुक्तशिखा बभुवु
र्भीताः स्म इत्थं युधि वादिनस्ते ॥ ५३
केचित्तथा प्राञ्जलयोऽतिदीनवत्
सन्यस्तशस्त्रा युधि मुक्तकच्छका. ।
स्थातुं रणे कंसनृदेवसम्मुखे
गतेप्सिताः केचिदतीवविह्वलाः ॥ ५४
इत्थ स देवान् प्रगतान्निरीक्ष्य तान्
नीत्वा च सिंहासनमातपत्रवत् ।
सर्वैस्तदा दैत्यगणैर्जनाधिप.
स्वराजधानीं मथुरां समाययौ ॥ ५५

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे दिग्विजयवर्णन नाम
सप्तमोऽध्यायः ॥७

गर्ग उवाच

श्रुत्वा तदा शौनक भक्तियुक्त
श्रीमैथिलो ज्ञानभृतां वरिष्ठः ।
नत्वा पुनः प्राह मुनिं महान्तं
देवर्षिवर्यं हरिभक्तिनिष्ठ. ॥ १

बहुलाश्व उवाच

त्वया कुलं कौ विशदीकृतं मे
शुभं हरे र्यद् यशसाऽमलेन ।
श्रीकृष्णभक्तक्षणसङ्गमेन
जनोऽपि सत्स्याद्बहुना किमु स्वित् ॥ २
श्रीराधया पूर्णतमस्तु साक्षाद्
गत्वा व्रजं किं चरितं चकार ।
तद् ब्रूहि मे देव ऋषे ऋषीश
त्रितापदुःखात् परिपाहि मां त्वम् ॥ ३

नारद उवाच

धन्यं कुलं यन्निमिना नृपेण
श्रीकृष्णभक्तेन परात्परेण ।
पूर्णीकृत यत्र भवान् प्रजातः
शुक्तौ हि मुक्ताभवनं न चित्रम् ॥ ४
अथ प्रभोस्तस्य पवित्रलीलां
सुमङ्गलां संशृणुतां परस्य ।
अभूत् सतां यो भुवि रक्षणार्थं
न केवलं कंसवधाय कृष्णः ॥ ५

अथैव राधा वृषभानुपत्न्या-
मावेश्य रूपं महसः पराख्यम् ।
कलिन्दजाकूलनिकुञ्जदेशे
सुमन्दिरे सावततार राजन् ॥ ६

घनावृते व्योम्नि दिनस्य मध्ये
भाद्रे सिते नागतिथौ च सोमे ।
अवाकिरन् देवगणाः स्फुरद्भि-
स्तन्मन्दिरे नन्दनजैः प्रसूनैः ॥ ७

राधावतारेण तदा बभूवु-
र्नद्योऽमलाम्भाश्च दिशः प्रसेदुः ।
ववुश्च वाता अरविन्दरागैः
सुशीतलाः सुन्दरमन्दयानाः ॥ ८

सुतां शरच्चन्द्रशताभिरामां
दृष्ट्वाथ कीर्तिर्मुदमाप गोपी ।
शुभं विधायाशु ददौ द्विजेभ्यो
द्विलक्षमानन्दकरं गवांश्च ॥ ९

प्रेङ्खे खचिद्रत्नमयूखपूर्णे
सुवर्णयुक्ते कृतचन्दनाङ्गे ।
आन्दोलिता सा ववृधे सखीजनै-
र्दिने दिने चन्द्रकलेव भाभिः ॥ १०

यद्दर्शनं देववरैः सुदुर्लभं
यज्ञैर्नवाप्तं जनजन्मकोटिभिः ।
सविग्रहां तां वृषभानुमन्दिरे
ललन्ति लोका ललनाप्रलालनैः ॥ ११

श्रीरासरङ्गस्य विकासचन्द्रिका
दीपावलिर्या वृषभानुमन्दिरे ।
गोलोकचूडामणिकण्ठभूषणां
ध्यात्वा परां तां भुवि पर्यटाम्यहम् ॥ १२

बहुलाश्व उवाच

वृषभानो रहोभाग्यं यस्य राधा सुताऽभवत् ।
कलावत्या सुचन्द्रेण किं कृतं पूर्वजन्मनि ॥ १३

नारद उवाच

नृगपुत्रो महाभाग. सुचन्द्रो नृपतीश्वर. ।
चक्रवर्ती हरेरंशो बभूवातीव सुन्दरः ॥ १४
पितॄणां मानसी कन्यास्तिस्रोऽभूवन् मनोहराः ।
कलावती रत्नमाला मेनका नाम नामतः ॥ १५
कलावतीं सुचन्द्राय हरेरंशाय धीमते ।
वैदेहाय रत्नमालां मेनकां च हिमाद्रये ॥
पारिबर्हेण विधिना स्वेच्छाभिः पितरो ददुः ॥ १६
सीताऽभूद्रत्नमालायां मेनकायां च पार्वती ।
द्वयोश्चरित्रं विदित पुराणेषु महामते ॥ १७
सुचन्द्रोऽथ कलावत्या गोमतीतीरजे वने ।
दिव्यैर्द्वादशभिर्वर्षैस्तताप ब्रह्मणस्तपः ॥ १८
अथो विधिस्तमागत्य वरं ब्रूहीत्युवाच ह ।
श्रुत्वा वल्मीकदेशाच्च निर्ययौ दिव्यरूपधृक् ॥ १९
तं नत्वोवाच मे भूयाद्दिव्यं मोक्ष परात्परम् ।
तच्छ्रुत्वा दुःखिता साध्वी विधिं प्राह कलावती ॥ २०
पतिरेव हि नारीणां दैवत परमं स्मृतम् ।
यदि मोक्षमसौ याति तदा मे का गतिर्भवेत् ॥ २१

एतद्विना न जीवामि यदि मोक्षं प्रदास्यसि।
तुभ्यं शापं प्रदास्यामि पतिविक्षेपविह्वला॥ २२

ब्रह्मोवाच

त्वच्छापाद्भयभीतोऽहं मे वरोऽपि मृषा नहि।
तस्मात्त्वं प्राणपतिना सार्द्धं गच्छ त्रिविष्टपम्॥ २३
भुक्त्वा सुखानि कालेन युवां भूमौ भविष्यथः
गङ्गायमुनयोर्मध्ये द्वापरान्ते च भारते॥ २४
युवयो राधिका साक्षात् परिपूर्णतमप्रिया।
भविष्यति यदा पुत्री तदा मोक्षं गमिष्यथः॥ २५

नारद उवाच

इत्थं ब्रह्मवरेणाथ दिव्येनामोघरूपिणा।
कलावतीसुचन्द्रौ च भूमौ तौ द्वौ बभूवतुः॥ २६
कलावती कान्यकुब्जे भलन्दननृपस्य च।
जातिस्मरा ह्यभूद्दिव्या यज्ञकुण्डसमुद्भवा॥ २७
सुचन्द्रो वृषभान्वाख्य सुरभानुगृहेऽभवत्।
जातिस्मरो गोपवरः कामदेव इवापरः॥ २८
सम्बन्धं योजयामास नन्दराजो महामतिः।
तयोश्च जातिस्मरयोरिच्छतोरिच्छया द्वयोः॥ २९
वृषभानोः कलावत्या आख्यानं शृणुते नरः।
सर्वपापविनिर्मुक्तः कृष्णसायुज्यमाप्नुयात्॥ ३०

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे श्रीराधिकाजन्मवर्णनं नाम
अष्टमोऽध्याय॥ ८

नारद उवाच

तत्रैकदा श्रीमथुरापुरे वरे
पुरोहितस्सर्वयदूत्तमैः कृतः ।
शूरेच्छया गर्ग इति प्रमाणिकः
समाययौ सुन्दरराजमन्दिरम् ॥ १

हीराखचिद्धेमलसत्कपाटक
द्विपेन्द्रकर्णाहतभृङ्गनादितम् ।
इभस्रवन्निर्झरगण्डधारया
समार्द्रितंमण्डपखण्डमण्डितम् ॥ २

महोद्भटैर्वीरजनैः सकञ्चुकै
र्धनुर्धरैश्चर्मकृपाणपाणिभिः ।
रथद्विपाश्वध्वजिनीबलादिभिः
सुरक्षितं मण्डपमङ्गलादिभिः ॥ ३

ददर्श गर्गो नृपदेवमाहुक
श्वाफल्किना देवककंससेवितम् ।
श्रीशक्रसिंहासन उन्नते परे
स्थितं वृतं छत्रवितानचामरैः ॥ ४

दृष्ट्वा मुनिं तं सहसासनाशया-
दुत्थाय राजा प्रणनाम यादवैः ।
संस्थाप्य सम्पूज्य सुभद्रपीठके
स्तुत्वा परिक्रम्य नतः स्थितोऽभवत् ॥ ५

दत्त्वाशिषं गर्गमुनिर्नृपाय वै
पप्रच्छ सर्वं कुशलं नृपादिषु ।

श्रीदेवक प्राह महामना ऋषि
मेहौजसं नीतिविदं यदूत्तमम् ।। ६

गर्ग उवाच

शौरि विना भुवि नृपेषु वरस्तु नास्ति
चिन्त्यो मया बहुदिनै· किल यत्र तत्र ।
तस्मान्नृदेव वसुदेववराय देहि
श्रीदेवकी तव सुतां विधिनोद्वहस्व ।। ७

नारद उवाच

कृत्वा तदैव पुरि निश्चयनागवल्ली
श्रीदेवक· सकलधर्मभृतां वरिष्ठ. ।
गर्गेच्छया तु वसुदेववराय पुत्री
कृत्वाथ मङ्गलमलप्रददौ विवाहे ॥ ८

कृतोद्वहः शौरिरतीवसुन्दरं
रथं प्रयाणे समलङ्कृतं हयैः ।
सार्धं तया देवकराजकन्यया
समारुहत् काञ्चनरत्नशोभया ।। ६

स्वसुः प्रियं कर्तुमतीव कंसो
जग्राह रश्मींश्चलतां हयानाम् ।
उवाह वाहांश्चतुरङ्गिणीभि-
र्वृत· कृपास्नेहपरोऽथ शौरौ ॥ १०

दासीसहस्रं त्वयुतं गजानां
सत्पारिबर्हं नियुतं हयानाम् ।
लक्षं रथानाञ्च गवां द्विलक्षं
प्रादाद्दुहित्रे नृपदेवको वै ।। ११

भेरीमृदङ्गोद्धरगोमुखानां
धुन्धुर्य्यवीणानकवेणुकानाम् ।
महत्स्वनोऽभूच्चलतां यदूनां
प्रयाणकाले पथि मङ्गलश्च ॥ १२

आकाशवागाह तदैव कंस
त्वामष्टमो हि प्रसवोऽस्य सास्याः ।
हन्ता न जानासि च यां रथस्थां
रश्मीन् गृहीत्वा वहसेऽबुधस्त्वम् ॥ १३

कुसङ्गनिष्ठोऽतिखलो हि कंसो
हन्तुं स्वसारं धिषणां चकार ।
कचे गृहीत्वा शितखड्गपाणि
र्गतत्रपो निर्दय उग्रकर्मा ॥ १४

वादित्रकारा रहिता बभूवु-
रग्रेस्थिता. स्युश्चकिता हि पश्चात् ।
सर्वेषु वा श्वेतमुखेषु सत्सु
शौरिस्तमाहाशु सतां वरिष्ठः ॥१५

वसुदेव उवाच

भोजेन्द्र भोजकुलकीर्त्तिकरस्त्वमेव
भौमादिमागधबकासुरवत्सबाणैः ।
श्लाघ्या गुणास्तव युधि प्रतियोद्धुकामैः
स त्वं कथं नु भगिनीमसिनात्र हन्यात् ॥ १६

ज्ञात्वा स्त्रियं किल बकीं प्रतियोद्धुकामां
युद्धं कृतं न भवता यशसो निवृत्या ।
सा तु त्वयापि भगिनीव कृता प्रशान्त्यै
साक्षादियन्तु भगिनी किमु ते विचारात् ॥ १७

उद्वाहपर्वणि गता च तवानुजा च
बाला सुतेव कृपणा शुभदा सदैषा।
योग्योऽसि नात्र मथुराधिप हन्तुमेतां
त्वं दीनदुःखहरणे कृतचित्तवृत्तिः ॥ १८

नारद उवाच

नामन्यतेत्थं प्रतिबोधितोऽपि
कुसङ्गनिष्ठोऽतिखलो हि कंसः।
तदा हरेः कालगतिं विचार्य
शौरिः प्रसन्नः पुनराह कंसम् ॥ १९

वसुदेव उवाच

नास्यास्तु ते देव भयं कदाचिद्
यद् देववाण्या कथितं च तच्छृणु।
पुत्रान् ददामीति यतो भयं स्यान्
मा ते व्यथास्याः प्रसवप्रजातात् ॥ २०

नारद उवाच

श्रुत्वा स निश्चित्य वचोऽथ शौरेः
कंसः प्रशस्याशु गृहङ्गतोऽभूत्।
शौरिस्तदा देवकराजपुत्र्या
भयावृतः सन् गृहमाजगाम ॥ २१

इति श्रीगर्गसंहितायां गोलोकखण्डे
वसुदेवविवाहवर्णनं नाम
नवमोऽध्यायः ॥ ९

नारद उवाच

भीतः पलायते नायं योद्धारः कंसनोदिताः।
अयुतं शस्त्रसंयुक्ता रुरुधुः शौरिमन्दिरम् ॥ १

शौरिः कालेन देवक्यामष्टौ पुत्रानजीजनत्।
अनुवर्षं चाथ कन्यामेकां आर्यां सनातनीम् ॥ २

कीर्तिमन्तं सुतं ह्यादौ जातमानकदुन्दुभिः।
नीत्वा कंससभामेत्य ददौ तस्मै परार्थवित् ॥ ३

सत्यवाक्यस्थितं शौरिं दृष्ट्वा कंसो घृणीत्वभूत्।
दुःखं साधु न सहते सत्ये कस्य क्षमा नहि ॥ ४

कंस उवाच

एष बालो यातु गृहमेतस्मान्नहि मे भयम्।
युवयोरष्टमं गर्भं हनिष्यामि न संशयः ॥ ५

नारद उवाच

इत्युक्तो वसुदेवस्तु सपुत्रो गृहमागतः।
सत्यं नामन्यत मनाग् वाक्यं तस्य दुरात्मनः ॥ ६

तदाम्बरादागतं मां नत्वा पूज्योग्रसेनजः।
पप्रच्छ देवाभिप्रायं प्रावोचं तं निबोध मे ॥ ७

नन्दाद्या वसवः सर्वे वृषभान्वादयः सुराः।
गोप्यो वेदऋचाद्याश्च सन्ति भूमौ नृपेश्वर ॥ ८

वसुदेवाद्यो देवा मथुरायाञ्च वृष्णयः।
देवक्याद्याः स्त्रियः सर्वा देवताः सन्ति निश्चयः ॥ ९

सप्तवारप्रसंख्यानादष्टमाः सर्व एव हि।
ते हन्तुः सख्ययार्थं वै अङ्कानां वामतो गतिः ॥ १०

नारद उवाच

इत्युक्त्वा त मयि गते कृते दैत्यवधोद्यमे।
कंसः कोपावृतः सद्यो यदून् हन्तु मनो दधे ॥११
वसुदेव देवकीञ्च बद्ध्वाथ निगडैर्दृढैः।
ममर्द त शिलापृष्ठे देवकीगर्भजं शिशुम् ॥१२
जातिस्मरो विष्णुभयाज्जात जातं जघान ह।
इति दुष्टविभावाच्च भूमौ भूतं न संशयम् ॥१३
उग्रसेनस्तदा क्रुद्धो यादवेन्द्रो नृपेश्वरः।
वारयामास कंसाख्यं वसुदेवसहायकृत् ॥१४
कंसस्य दुरभिप्राय दृष्ट्वोत्तस्थुर्महाभटाः।
उग्रसेनानुगा रक्षां चक्रुस्ते खड्गपाणयः ॥१५
उग्रसेनानुगान् दृष्ट्वा कंसवीराः समुत्थिताः।
तै. सार्द्धमभवद्युद्ध सभामण्डपमध्यतः ॥१६
द्वारदेशेऽपि वीराणां युद्ध जातं परस्परम्।
खड्गप्रहारैर्युतं जनानां निधन गतम् ॥१७
कसो गृहीत्वाथ गदां पितु. सेनां ममर्द ह।
कंसस्य गदया स्पृष्टाः केचिच्छिन्नललाटकाः ॥१८
भिन्नपादा भिन्नमुखाश्छिन्नांसाश्छिन्नबाहवः।
अधोमुखा ऊर्ध्वमुखाः सशस्त्राः पतिताः क्षणात् ॥१९
वमन्तो रुधिरं वीरा मूर्च्छिता निधनं गताः।
सभामण्डपमारक्तं दृश्यते क्षतजस्रवात् ॥२०
इत्थं महोत्कटः कंसः सांनपात्योद्भटान् रिपून्।
क्रोधाढ्यो राजराजेन्द्र जग्राह पितरं खलः ॥२१
नृपासनात् सङ्गृहीत्वा बद्ध्वा पाशैश्च तं खलः।
तन्मित्रैश्च नृपैः सार्द्धं कारागारे रुरोध ह ॥२२

मधूनां शूरसेनानां देशानां सर्वसम्पदाम् ।
सिंहासने चोपविश्य स्वयं राज्यं चकार ह ।। २३
पीडिता यादवाः सर्वे सम्बन्धस्य मिषैस्त्वरम् ।
चतुर्दिशोऽन्तरं देशान् विविशुः कालवेदिनः ।। २४
देवक्याः सप्तमे गर्भे हर्षशोकविवर्धने ।
व्रजं प्रणीते रोहिण्यामनन्ते योगमायया ॥ २५
अहो गर्भः क्व विगत इत्यूचुर्माथुरा जनाः ।। २६

अथ व्रजे पञ्चदिनेषु भाद्रे
तिथौ च षष्ठ्याञ्च सिते बुधे च ।
उच्चैर्ग्रहैः पञ्चभिरावृते च
लग्ने तुलाख्ये दिनमध्यदेशे ।। २७
सुरेषु वर्षत्सु सुपुष्पवर्षं
घनेषु मुञ्चत्सु च वारिबिन्दून् ।
बभूव देवो वसुदेवपत्न्यां
विभासयन् नन्दगृहं स्वभासा ।।२८
नन्दोऽपि कुर्वञ्छिशुजातकर्म
ददौ द्विजेभ्यो नियुतं गवाञ्च ।
गोपान् समाहूय सुगायकानां
रावैर्महामङ्गलमातनोति ।।२९
द्वैपायनो देवलदेवरात
वसिष्ठवाचस्पतिभिर्मया च ।
आगत्य तत्रैव समास्थितोऽभूत्
पाद्यादिभिर्नन्दकृतैः प्रसन्नः ।। ३०

नन्द उवाच

सुन्दरो बालकः कोऽयं न दृश्यो यत्समः क्वचित् ।
कथं पञ्चदिनाज्जातस्तन्मे ब्रूहि महामुने ।। ३१

व्यास उवाच

अहो भाग्यन्तु ते नन्द शिशुः शेषः सनातनः ।
देवक्यां वसुदेवस्य जातोऽयं मथुरापुरे ॥ ३२
कृष्णेच्छया तदुदरात् प्रणीतो रोहिणीं शुभाम् ।
नन्दराज त्वया दृश्यो दुर्लभो योगिनामपि ॥३३
तद्दर्शनार्थं प्राप्तोऽहं वेदव्यासो महामुनिः ।
तस्मात्त्वं दर्शयास्माकं शिशुरूपं परात्परम् ॥ ३४

नारद उवाच

अथ नन्दः शिशुं शेषं दर्शयामास विस्मितः ।
दृष्ट्वा प्रेङ्खस्थितं प्राह नत्वा सत्यवतीसुतः ॥ ३५

व्यास उवाच

देवाधिदेव भगवन् कामपाल नमोऽस्तु ते ।
नमोऽनन्ताय शेषाय साक्षाद्रामाय ते नमः ॥ ३६
धराधराय पूर्णाय स्वधाम्ने सीरपाणये ।
सहस्रशिरसे नित्यं नमः सङ्कर्षणाय ते ॥ ३७
रेवतीरमण त्वं वै बलदेवोऽच्युताग्रजः ।
हलायुधः प्रलम्बघ्नः पाहि मां पुरुषोत्तम ॥ ३८
बलाय बलभद्राय तालाङ्काय नमो नमः ।
नीलाम्बराय गौराय रौहिणेयाय ते नमः ॥ ३९
धेनुकारिर्मुष्टिकारिः कूटारिर्बल्वलान्तकः ।
रुक्म्यरिः कूपकर्णारिः कुम्भाण्डारिस्त्वमेव हि ॥ ४०
कालिन्दीभेदनोऽसि त्वं हस्तिनापुरकर्षकः ।
द्विविदारिर्यादवेन्द्रो व्रजमण्डलमण्डनः ॥ ४१
कंसभ्रातृप्रहन्तासि तीर्थयात्राकरः प्रभुः ।
दुर्योधनगुरुः साक्षात् पाहि पाहि प्रभो जगत ॥ ४२

जय जयाच्युत देव परात्पर
स्वयमनन्त दिगन्तगतं यशः ।
सुरमुनीन्द्र फणीन्द्रवराय ते
मुसलिने बलिने हलिने नमः ॥ ४३

इह पठेत् सततं स्तवनन्तु यः
स तु हरेः परमं पदमाव्रजेत् ।
जगति सर्वबलं त्वरिमर्दनं
भवति तस्य जयः सजनं धनम ॥ ४४

नारद उवाच

बलं परिक्रम्य शतं प्रणम्य तै
र्द्वैपायनो देव पराशरात्मजः ।
विशालबुद्धिर्मुनिबादरायणः
सरस्वती सत्यवतीसुतो ययौ ॥ ४५

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे बलभद्रजन्मवर्णनं नाम
दशमोऽध्यायः ॥१०

नारद उवाच

परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ।
विवेश वसुदेवस्य मनः पूर्वं परात्परः ॥ १
सूर्येन्दुवह्निसङ्काशो वसुदेवो महामनाः ।
बभूवात्यन्तमहसा साक्षाद्यज्ञ इवापरः ॥ २
देवक्यामागते कृष्णे सर्वेषामभयङ्करे ।
रराज तेन सा गेहे घने सौदामिनी यथा ॥ ३
तेजोवतीञ्च तां वीक्ष्य कंसः प्राह भयातुरः ।
प्राप्तोऽयं प्राणहन्ता मे पूर्वमेषा न चेदृशी ॥ ४
जातमात्रं हनिष्यामीत्युक्त्वास्ते भयविह्वलः ।
पश्यन् सर्वत्र च हरिं पूर्वशत्रुं विचिन्तयन् ॥ ५
अहो वैरानुबन्धेन साक्षात् कृष्णोऽपि दृश्यते ।
तस्माद्वैरं प्रकुर्वन्ति कृष्णप्राप्त्यर्थमासुराः ॥ ६
अथ ब्रह्मादयो देवा मुनीन्द्रैरस्मदादिभिः ।
शौरिगेहोपरि प्राप्ताः स्तवं चक्रुः प्रणम्य तम् ॥ ७

देवा ऊचुः

यो जागरादिषु परं परमं ह्यहेतु-
र्हेतुः स्विदस्य विचरन्ति गुणाश्च येन ।
नैतद्विशन्ति महदिन्द्रियदेवसङ्घा-
स्तस्मै नमोऽग्निमिव विस्तृतविस्फुलिङ्गाः ॥ ८
नैवेशितुं प्रभुरयं बलिनां बलीयान्
मायेति शब्दमुत नो विषयीकरोति ।
तं ब्रह्म पूर्णममृतं परमं प्रशान्तं
शुद्धं परात्परतरं शरणं गताः स्मः ॥ ९

अंशांशकांशककलाद्यवतारवृन्दै-
रावेशपूर्णसहितैश्च परस्य यस्य ।
सर्गादयः किल भवन्ति तमेव कृष्णं
पूर्णात्परन्तु परिपूर्णतमं नताः स्मः ॥ १०
मन्वन्तरेषु च युगेषु गतागतेषु
कल्पेषु चांशकलया स्ववपुर्विभासि ।
अद्यैव धाम परिपूर्णतमं तनोषि
धर्मं विधाय भुवि मङ्गलमातनोषि ॥ ११
यद्दुर्लभं विशदयोगिभिरप्यगम्यं
गम्यं द्रवद्भिरमलाशयभक्तियोगैः ।
आनन्दकन्दचरतस्तव मन्दयान-
पादारविन्दमकरन्दरजो दधामः ॥ १२
पूर्वं तथात्र कमनीयवपुर्मयं त्वां
कन्दर्पकोटिशतमोहनमद्भुतञ्च ।
गोलोकधामधिषणद्युतिमादधानं
राधापतिं धरणिधुर्यधनं दधामः ॥ १३

नारद उवाच

नत्वा हरिं तदा देवा ब्रह्माद्या मुनिभिः सह ।
गायन्तस्तं प्रशंसन्तः स्वधामानि ययुर्मुदा ॥ १४
अथ मैथिल राजेन्द्र जन्मकाले हरेः सति ।
अम्बरं निर्मलं जातं निर्मलाश्च दिशो दश ॥ १५
उज्ज्वलास्तारका जाताः प्रसन्नं भूमिमण्डलम् ।
नदा नद्यः समुद्राश्च प्रसन्नापः सरोवराः ॥ १६
सहस्रदलपद्मानि शतपत्राणि सर्वतः ।
विकचानि मरुत्स्पर्शैः पतद्गन्धिरजांसि च ॥ १७

तेषु नेदुर्मधुकरा नदन्तश्चित्रपक्षिणः ।
शीतला मन्दयानाश्च गन्धाक्ता वायवो ववुः ॥ १८

ऋद्धा जनपदा ग्रामा नगरा मङ्गलायनाः ।
देवा विप्रा नगा गावो बभूवुः सुखसंवृताः ॥ १९

देवदुन्दुभयो नेदुर्जयध्वनिसमाकुलाः ।
यत्र तत्र महाराज सर्वेषां मङ्गलं परम् ॥ २०

विद्याधराश्च गन्धर्वाः सिद्धकिन्नरचारणाः ।
जगुः सनायका देवास्तुष्टुवुः स्तुतिभिः परम् ॥ २१

ननृतुर्दिवि गन्धर्व्यो विद्याधर्य्यो मुदान्विताः ।
पारिजातकमन्दारमालतीसुमनांसि च ॥ २२

मुमुचुर्देवमुख्याश्च गर्जन्तश्च घना जलम् ।
भाद्रे बुधे कृष्णपक्षे धात्रर्क्षे हर्षणे वृषे ।
ववेऽष्टम्यामर्द्धरात्रे नक्षत्रेशमहोदये ॥ २३

अन्धकारावृते काले देवक्यां शौरिमन्दिरे ।
आविरासीद्धरिः साक्षादरण्यामध्वरेऽग्निवत् ॥ २४

स्फुरदर्क्षविचित्रहारिणं
विलसत्कौस्तुभरत्नधारिणम् ।
परिधिद्युतिनूपुराङ्गदं
धृतबालार्ककिरीटकुण्डलम् ॥ २५

चलदद्भुतवह्निकङ्कणं
तडिदूर्जिगुणमेखलाञ्चितम् ।
मधुपध्वनिपद्ममालिनं
नवजाम्बूनददिव्यवाससम् ॥ २६

सतडिद्घनदिव्यसौभगं
चलनीलालकवृन्दभून्मुखम् ।
चलदंशु तमोहरं परं
शुभदं सुन्दरमम्बुजेक्षणम् ।।२७
कृतपत्रविचित्रमण्डलं
सततं कोटिमनोजमोहनम् ।
परिपूर्णतमं परात्परं
कलवेणुध्वनिवाद्यतत्परम् ।।२८
तमवेक्ष्य सुतं यदूत्तमो
हरिजन्मोत्सवफुल्ललोचनः ।
अथ विप्रजनेभ्य आशु वै
नियुतं सन्मनसा गवां ददौ ।।२९
हरिमानकदुन्दुभिस्तत
स्तनयन्तं प्रणिपत्य विस्मितः ।
अकरोदुदितप्रभूद्यो
गतभीः सूतिगृहे कृताञ्जलिः ।।३०

वसुदेव उवाच

एको यः प्रकृतिगुणैरनेकधासि
हर्ता त्वं जनक उतास्य पालकस्त्वम् ।
निर्लिप्तः स्फटिक इवाद्यदेहवर्णै
स्तस्मै श्रीभुवनपते नमामि तुभ्यम् ।।३१
एधस्सु ह्यनल इव प्रवर्तमानो
योऽन्तस्थो बहिरपि चाम्बरं यथा हि ।
आधारो धरणिरिवास्य सर्वसाक्षी
तस्मै ते नम इति सर्वगो नभस्वान् ।।३२

भूभारोद्धटहरणार्थमेव जातो
गोदेवद्विजनिजभक्तवत्सलोऽसि ।
गेहे मे भुवि पुरुषोत्तमोत्तमस्त्वं
कंसान्मां भुवनपते प्रपाहि पापात् ॥३३

नारद उवाच

परिपूर्णतमं साक्षाच्छ्रीकृष्णं श्यामसुन्दरम् ।
ज्ञात्वा नत्वाथ तं प्राह देवकी सर्वदेवता ॥३४

देवक्युवाच

हे कृष्ण हे विगणिताण्डपते परेश
गोलोकधामधिषण ध्वज आदिदेव ।
पूर्णेश पूर्ण परिपूर्णतम प्रभो मां
त्वं पाहि पाहि परमेश्वर कंसपापात् ॥३५

नारद उवाच

तच्छ्रुत्वा भगवान् कृष्णः परिपूर्णतमः स्वयम् ।
सस्मितो देवकीं शौरिं प्राह सद्वृजिनार्दनः ॥३६

भगवानुवाच

इयन्तु पृश्निः पतिदेवता च
त्वं पूर्वसर्गे सुतपाः प्रजार्थी ।
ब्रह्माज्ञया दिव्यतपो युवाभ्यां
कृतं परं निर्जलभोजनाभ्याम् ॥३७
काले तु मन्वन्तरजे व्यतीते
तपः परं तपतोः सुप्रजार्थे ।
तदा प्रसन्नो युवयोरभूवं
वरं परं ब्रूत मया तदोक्तम् ॥३८

श्रुत्वा युवाभ्यां कथितं तदेव
भूयात सुतस्त्वत्सदृशः किलावयोः।
तथास्तु चोक्त्वाथ गते मयि प्रजा-
पती ह्यभूत स्वकृतेन दम्पती ॥३९
न मत्समः कोऽपि सुतो जगत्यलं
विचार्य तद्धामभवं परेश्वर.।
श्रीपृश्निगर्भो भुवि विश्रुतः पुन
र्द्वितीयकालेऽहमुपेन्द्रवामन. ॥४०
तथाभव ह्यद्यतने परात्परो
नीत्वाथ मां प्रापय नन्दमन्दिरम्।
अतो न भूयाद्भयमौग्रसेनत.
सुतां समादाय सुखी भविष्यथ ॥४१

नारद उवाच

तूष्णीं भूत्वा हरिस्तत्र तद्रूपं पश्यतोस्तयो.।
दृश्यं ह्यप्रकटं कृत्वा बालोऽभूत् कौ यथा नटः ॥४२
प्रेङ्खे धृत्वाथ तं शौरिर्यावद् गन्तुं समुद्यतः।
तावद् व्रजे नन्दपत्न्यां योगमायाजनि स्वत· ॥४३
तया शयाने विश्वस्मिन् रक्षकेषु स्वपत्सु च।
द्वारा उद्घाटिताः सर्वाः प्रस्फुटच्छृङ्खलार्गलाः ॥ ४४
निर्गते वसुदेवे च मूर्ध्नि श्रीकृष्णशोभिते।
सूर्योदये यथा सद्यस्तमोनाशोऽभवत्स्वतः ॥४५
घनेषु व्योम्नि वर्षत्सु सहस्रवदनः स्वराट्।
निवारयन् दीर्घफणैरासारं शौरिमन्वगात् ॥ ४६
ऊर्म्यावर्ताकुलावेगैः सिंहसर्पादिवाहिनी।
सद्यो मार्गं ददौ तस्मै कालिन्दी सरितां वरा ॥ ४७

नन्दव्रजं समेत्यासौ प्रसुप्तं सर्वत. परम् ।
शिशुं यशोदाशयने निधायाशु ददर्श ताम् ॥ ४८
तत्सुतां समुपादाय पुनर्गेहाजगाम सः ।
तीर्त्वा श्रीयमुनां शौरिः स्वागारे पूर्ववत्स्थितः ॥ ४९
सुतं सुतां वा जातं न ज्ञात्वा गोपी यशोमती ।
परिश्रान्ता स्वशयने सुष्वापानन्दनिद्रया ॥ ५०
अथ बालध्वनिं श्रुत्वा रक्षकाः समुपस्थिताः ।
ऊचुः कंसाय वीराय गत्वा तद्राजमन्दिरम् ॥ ५१
सूतीगृहं त्वरं प्रागात् कंसो वै भयकातरः ।
स्वसाथ भ्रातरं प्राह रुदती दीनवत्सली ॥ ५२

देवक्युवाच

सुतामेकां देहि मे त्वं पुत्रेषु प्रमृतेषु च ।
स्त्रियं हन्तुं न योग्योऽसि भ्रातस्त्वं दीनवत्सलः ॥ ५३
तेऽनुजाहं हतसुता कारागारे निपातिता ।
दातुमर्हसि कल्याण कल्याणीं तनुजाञ्च मे ॥ ५४

नारद उवाच

अश्रुमुख्या मोहितया समाच्छाद्यात्मजां बहु ।
प्रार्थितोऽङ्काद्विनिर्भर्त्स्य तां स आचिच्छिदे खलः ॥ ५५
कुसङ्गनिरतः पापः खलो यदुकुलाधमः ।
स्वसुः सुतां शिलापृष्ठे गृहीत्वाङ्घ्र्योर्न्यपातयत् ॥ ५६
कंसहस्तात् समुत्पत्य त्वरं सा चाम्बरं गता ।
शतचक्रे रथे दिव्ये सहस्रहयसेविते ॥ ५७
चामरान्दोलिते शुभ्रे स्थितादृश्यत दिव्यदृक् ।
सायुधाष्टभुजा माया पार्षदैः परिसेविता ।
शतसूर्यप्रतीकाशा कंसमाह घनस्वना ॥ ५८

योगमायोवाच

परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ॥
जातः क्व वा स ते हन्ता वृथा दीनान् दुनोषि वै ॥ ५९

नारद उवाच

इत्युक्त्वा तं ततो देवी गता विन्ध्याचले गिरौ ।
योगमाया भगवती बहुनामा बभूव ह ॥ ६०
अथ कंसो विस्मितोऽभूच्छ्रुत्वा मायावचः परम् ।
देवकीं वसुदेवञ्च मोचयामास बन्धनात् ॥ ६१

कंस उवाच

पापोऽहं पापकर्माहं खलो यदुकुलाधमः ।
युष्मत्पुत्रप्रहन्ताहं क्षमध्वं मत्कृतं भुवि ॥ ६२
हे स्वसः शृणु हे शौरे मन्ये कालकृतं त्विदम् ।
येन विश्वश्चाल्यमानो वायुनेव घनावलिः ॥ ६३
विस्रब्धोऽहं देववाक्यैर्देवास्तेऽपि मृषा गिरः ।
न जानामि क्व मे शत्रुर्जातः कौ कथितोऽमुया ॥ ६४

नारद उवाच

इत्थं कंसस्तदङ्घ्र्योश्च पतितोऽश्रुमुखो रुदन् ।
चकार सेवां परमां सौहृदं दर्शयंस्तयोः ॥ ६५
अहो श्रीकृष्णचन्द्रस्य परिपूर्णतमस्य भोः ।
दानदक्षैः कटाक्षैश्च किं न स्याद्भूमिमण्डले ॥ ६६
प्रातःकाले तदा कंसः प्रलम्बादीन् महासुरान् ।
समाहूय खलस्तेभ्योऽवदद्दुक्तञ्च मायया ॥ ६७

कंस उवाच

जातो मे ह्यन्तकृद्भूमौ कथितो योगमायया ।
अनिर्दशान्निर्दशांश्च शिशून् यूयं हनिष्यथ ॥ ६८

दैत्या ऊचुः

सज्यस्य धनुषो युद्धे भवता द्वन्द्वयोधिना ।
टङ्कारेणोद्गता देवा मन्यसे तैः कथं भयम् ॥ ६९
गोविप्रसाधुश्रुतयो देवा धर्मादयः परे ।
ते विष्णोस्तनवो ह्येषां नाशे दैत्यबलं स्मृतम् ॥ ७०
जातो यदि महाविष्णुस्ते शत्रुर्यो महीतले ।
अयं हि तद्वधोपायो गवादीनां विहिंसनम् ॥ ७१

नारद उवाच

इत्थं महोत्कटा दुष्टा दैतेयाः कंसनोदिताः ।
ददुर्दुःखं गवादिभ्यो जघ्नुर्जातांश्च बालकान् ॥ ७२
आसमुद्राद्भूमितले विशन्तश्च गृहे गृहे ।
कामरूपधरा दैत्याश्चेरुः सर्वं इतस्ततः ॥ ७३
उत्पथा उद्भटा दैत्यास्तत्रापि कंसनोदिताः ।
कपिः सुरापोऽलिहतो भूतग्रस्त इवाभवन् ॥ ७४

वैदेह मैथिल नरेन्द्र उपेन्द्रभक्त
धर्मिष्ठमुख्य सतपो जनक प्रतापिन् ।
एतत् सताञ्च भुवि हेलनमङ्गराजन्
सर्वं छिनत्ति बहुलाश्व चतुःपरार्थान् ॥ ७५

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे श्रीकृष्णजन्मवर्णनं नाम
एकादशोऽध्यायः ॥ ११

नारद उवाच

अथ पुत्रोत्सवं जातं श्रुत्वा नन्द उषःक्षणे ।
ब्राह्मणांश्च समाहूय कारयामास मङ्गलम् ॥ १
सविधि जातकं कृत्वा नन्दराजो महामनाः ।
विप्रेभ्यो दक्षिणाभिश्च दशलक्षं गवां ददौ ॥ २
क्रोशमात्रं रत्नसानून् सुवर्णशिखरान् गिरीन् ।
सरसान् सप्तधान्यानां ददौ विप्रेभ्य आनतः ॥ ३
मृदङ्गवीणाशङ्खाद्या नेदुर्दुन्दुभयो मुहुः ।
गायकाश्च जगुर्द्वारि ननृतुर्वारयोषितः ॥ ४
पताकैर्हैमकलशैर्वितानैस्तोरणैः शुभैः ।
अनेकवर्णैश्चित्रैश्च बभौ श्रीनन्दमन्दिरम् ॥ ५
रथ्या वीथ्यश्च देहल्यो भित्तिप्राङ्गणवेदिकाः ।
तोलिकामण्डपसभा रेजुर्गन्धिजलाम्बरैः ॥ ६
गावः सुवर्णशृङ्ग्यश्च हेममालालसद्गलाः ।
घण्टामञ्जीरभङ्कारा रक्तकम्बलमण्डिताः ॥ ७
पीतपुच्छाः सवत्साश्च तरुणीकरचिह्निताः ।
हरिद्राकुङ्कुमाक्ताश्च चित्रधातुविचित्रिताः ॥ ८
बर्हिपुच्छैर्गन्धजलैर्वृषा धर्मधुरन्धराः ।
इतस्ततो विरेजुः श्रीनन्दद्वारि मनोहराः ॥ ९
गोवत्सा हेममालाढ्या मुक्ताजालविराजिताः ।
इतस्ततो विलङ्घन्तो मञ्जीरचरणाः सिताः ॥ १०
श्रुत्वा पुत्रोत्सवं तस्य वृषभानुवरस्तथा ।
कलावत्या गजारूढो नन्दमन्दिरमाययौ ॥ ११
नन्दा नवोपनन्दाश्च तथा षड् वृषभानवः ।
नानोपायनसंयुक्ताः सर्वे तेऽपि समाययुः ॥ १२

उष्णीषोपरि मालाढ्याः पीतकञ्चुकशोभिताः ।
बर्हगुञ्जाबद्धकेशा वनमालाविभूषिताः ॥ १३
वंशीधरा वेत्रहस्ताः सुपत्रतिलकार्चिताः ।
बद्धवर्णपरिकरा गोपास्तेऽपि समाययुः ॥ १४
नृत्यन्तः परिगायन्तो धुन्वन्तो वसनानि च ।
नानोपायनसंयुक्ताः श्मश्रुलाः शिशवः परे ॥१५
हैयङ्गवीनदुग्धानां दध्याज्यानां बलिं बहु ।
नीत्वा वृद्धा यष्टिहस्ता नन्दमन्दिरमाययुः ॥१६
पुत्रोत्सवं व्रजेशस्य कथयन्तः परस्परम् ।
प्रेमविह्वलभावैः स्वैरानन्दाश्रुसमाकुलाः ॥१७
जाते पुत्रोत्सवे नन्दः स्वानन्दाश्रुकुलेक्षणः ।
पूजयामास तान् सर्वांस्तिलकाद्यैर्विधानतः ॥१८

गोपा ऊचुः

हे व्रजेश्वर हे नन्द जातः पुत्रोत्सवस्तव ।
अनपत्यस्येच्छतोऽलमतः किं मङ्गलं परम् ॥१९
दैवेन दर्शितश्चेदं दिनं नो बहुभिर्दिनैः ।
कृतकृत्याश्च भूयास्मो दृष्ट्वा श्रीनन्दनन्दनम् ॥२०
हे मोहनेति दूरात्तमङ्कं नीत्वा गदिष्यसि ।
यदा लालनभावेन भविता नस्तदासुखम् ॥२१

नन्द उवाच

भवतामाशिषः पुण्याज्जातं सौख्यमिदं शुभम् ।
आज्ञावर्ती ह्यहं गोपा गोपानां व्रजवासिनाम् ॥२२

नारद उवाच

श्रीनन्दराजसुतसम्भवमद्भुतञ्च
श्रुत्वा विसृज्य गृहकर्म तदैव गोप्यः ।
तूर्णं ययुः सबलयो व्रजराजगेहा-
नुद्यत्प्रमोदपरिपूरितहृन्मनोज्ञाः ॥२३

आनन्दमन्दिरपुरात् स्वगृहाद् व्रजन्त्यः
सर्वा इतस्तत उत त्वरया व्रजन्त्यः ।
यानश्लथद्वसनभूषणकेशबन्धा
रेजुर्नरेन्द्रपथि भूपरि मुक्तमुक्ताः ॥२४
झाङ्कारनूपुरनवाङ्गदहेमचीर-
मञ्जीरहारमणिकुण्डलमेखलाभिः ।
श्रीकण्ठसूत्रभुजकङ्कणबिन्दुकीभिः
पूर्णेन्दुमण्डलनवद्युतिभिर्विरेजुः ॥२५
श्रीराजिकालवणरात्रिविशेषचूर्णैं
र्गोधूमसर्षपयवैः करलालनैश्च ।
उत्तार्य बालकमुखोपरि चाशिषस्ताः
सर्वा ददुर्नृप जगुर्जगदुर्यशोदाम् ॥२६

गोप्य ऊचु

साधु साधु यशोदे ते दिष्ट्या दिष्ट्या व्रजेश्वरि ।
धन्या धन्या परा कुक्षिर्ययायं जनितः सुतः ॥२७
इच्छा युक्तं कृतं ते वै देवेन बहुकालतः ।
रक्ष बालं पद्मनेत्र सुस्मितं श्यामसुन्दरम् ॥२८

यशोदोवाच

भवदीयदयाशीर्भिर्जातं सौख्य परञ्च मे ।
भवतीनामपि पर दिष्ट्या भूयादतः परम् ॥२९
हे रोहिणी महाबुद्धे पूजनन्तु व्रजौकसाम् ।
आगतानां सत्कुलानां यथेष्टं हीप्सितं कुरु ॥३०

नारद उवाच

रोहिणी राजकन्यापि तत्करौ दानशीलिनौ ।
तत्रापि नोदितादाने बभूवातिमहामनाः ॥३१

गौरवर्णा दिव्यवासा रत्नाभरणभूषिता ।
व्यचरद्रोहिणी साक्षात् पूजयन्ती व्रजौकसः ॥३२
परिपूर्णतमे साक्षाच्छ्रीकृष्णे व्रजमागते ।
नदत्सु नरतूर्येषु जयध्वनिरभून्महान् ॥३३
दधिक्षीरघृतैर्गोपा गोप्यो हैयङ्गवैर्नवैः ।
सिषिचुर्हर्षितास्तत्र जगुरुच्चैः परस्परम् ॥३४
बहिरन्तःपुरे जाते सर्वतो दधिकर्दमे ।
वृद्धाश्च स्थूलदेहाश्च पेतुर्हास्यं कृतं परैः ॥३५
सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः ।
बन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥३६
तेभ्यो नन्दो महाराज सहस्रं गाः पृथक् पृथक् ।
वासोऽलङ्काररत्नानि हयेभानखिलान् ददौ ॥३७
बन्दिभ्यो मागधेभ्यश्च सर्वेभ्यो बहुलं धनम् ।
ववर्ष घनवद्गोपो नन्दराजो व्रजेश्वरः ॥३८
निधिः सिद्धिश्च वृद्धिश्च भुक्तिर्मुक्तिगृ हे गृहे ।
वीथ्यां वीथ्यां लुठन्तीव तदिच्छा कस्यचिन्नहि ॥३९
सनत्कुमारकपिलशुकव्यासादिभिः सह ।
हंसदत्तपुलस्त्याद्यैर्मया ब्रह्मा जगाम ह ॥४०
हंसारूढो हेमवर्णो मुकुटी कुण्डली स्फुरन् ।
चतुर्मुखो वेदकर्ता द्योतयन् मण्डलं दिशाम् ॥४१
तथा तमनु भूताढ्यो वृषारूढो महेश्वरः ।
रथारूढो रविः साक्षाद्गजारूढः पुरन्दरः ॥४२
वायुश्च खञ्जनारूढो यमो महिषवाहनः ।
धनदः पुष्पकारूढो मृगारूढः क्षपेश्वरः ॥४३
अजारूढो वीतिहोत्रो वरुणो मकरस्थितः ।
मयूरस्थः कार्त्तिकेयो भारती हंसवाहिनी ॥४४

लक्ष्मी च गरुडारूढा दुर्गाख्या सिंहवाहिनी ।
गोरूपधारिणी पृथ्वी विमानस्था समाययौ ॥४५
दोलारूढा दिव्यवर्णा मुख्याः षोडशमातृकाः ।
षष्ठी च शिबिकारूढा खड्गिणी यष्टिधारिणी ॥४६
मङ्गलो मेषमारूढो भासारूढो बुधः स्मृतः ।
गीष्पतिः कृष्णसारस्थः शुक्रो गवयवाहनः ॥४७
शनिश्च मकरारूढ उष्ट्रस्थः सिंहिकासुतः ।
श्येनारूढस्तथाकेतुः शिशुमारेऽभिजित् स्थितः ॥४८
सर्वेषामग्रतः प्राप्तो मूषकस्थो गणेश्वरः ।
कोटिबालार्कसङ्काश आययौ नन्दमन्दिरम् ॥४९
कोलाहलसमायुक्तं गोपगोपीगणाकुलम् ।
नन्दमन्दिरमभ्येत्य क्षणं स्थित्वा ययुः सुराः ॥५०
परिपूर्णतमं साक्षाच्छ्रीकृष्णं बालरूपिणम् ।
नत्वा दृष्ट्वा तदा देवाश्चक्रुस्तस्य स्तुतिं पराम् ॥५१
वीक्ष्य कृष्णं तदा देवा ब्रह्माद्या ऋषिभिः सह ।
स्वधामानि ययुः सर्वे हर्षिताः प्रेमविह्वलाः ॥५२

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे नन्दमहोत्सववर्णनं नाम
द्वादशोऽध्यायः ॥१२

नारद उवाच

शौर्यनामयपृच्छार्थं करं दातुं नृपस्य च ।
पुत्रोत्सवं कथयितुं नन्दे श्रीमथुरां गते ॥१
कंसेन प्रेषिता दुष्टा पूतना बालघातिनी ।
पुरेषु ग्रामघोषेषु चरन्ती घर्घरस्वना ॥२
अथ गोकुलमासाद्य गोपगोपीगणाकुलम् ।
रूपं दधार सा दिव्यं वपुः षोडशवार्षिकम् ॥३
न केऽपि रुरुधुर्गोपाः सुन्दरीं ताश्च गोपिकाः ।
शचीं वाणीं रमां रम्भां रतिञ्च क्षिपतीमिव ॥४
रोहिण्याश्च यशोदायां धर्षितायां स्फुरद्रुचा ।
अङ्कमादाय तं बालं लालयन्ती पुनः पुनः ॥५
ददौ शिशोर्महाघोरा कालकूटावृतं स्तनम् ।
प्राणैः सार्द्धं पपौ दुग्धं कटुरोषावृतो हरिः ॥६
मुञ्च मुञ्च वदन्तीत्थं धावती पीडितस्तना ।
नीत्वा बहिर्गता तं वै गतमाया बभूव ह ॥ ७
पतन्नेत्रा स्वेदगात्रा रुदन्ती पतिता भुवि ।
ननाद तेन ब्रह्माण्डं सप्तलोकैर्बिलैः सह ॥ ८
चचाल वसुधा द्वीपैस्तदद्भुतमिवाभवत् ।
षट्क्रोशं सा दृढान् दीर्घान् वृक्षान् पृष्ठतले गतान् ॥ ६
चूर्णीचकार वपुषा वज्राङ्गेण नृपेश्वर ।
वदन्तस्ते गोपगणा वीक्ष्य घोरं वपुर्महत् ॥ १०
अस्या अङ्कलिगो बालो न जीवति कदाचन ।
तस्या उरसि सानन्दं क्रीडन्तं सुस्मितं शिशुम् ॥ ११
दुग्धं पीत्वा जृम्भमाणं तं दृष्ट्वा जगृहुः स्त्रियः ।
यशोदया च रोहिण्या निधायोरसि विस्मिताः ॥ १२

सर्वतो बालकं नीत्वा रक्षां चक्रुर्विधानतः ।
कालिन्दीपुण्यमृत्तोयैर्गोपुच्छभ्रामणादिभिः ॥ १३
गोमूत्रगोरजोभिश्च स्नापयित्वा त्विदं जगुः ॥ १४

गोप्य ऊचुः

श्रीकृष्णस्ते शिरः पातु वैकुण्ठः कण्ठमेव हि ।
श्वेतद्वीपपतिः कर्णौ नासिकां यज्ञरूपधृक् ॥ १५
नृसिंहो नेत्रयुग्मञ्च जिह्वां दशरथात्मजः ।
अधरावववतां ते तु नरनारायणावृषी ॥ १६
कपोलौ पातु ते साक्षात् सनकाद्याः कला हरेः ।
भालं ते श्वेतवाराहो नारदो भ्रूतलेऽवतु ॥ १७
चिबुकं कपिलः पातु दत्तात्रेय उरोऽवतु ।
स्कन्धौ द्वावृषभः पातु करौ मत्स्यः प्रपातु ते ॥ १८
दोर्दण्डं सततं रक्षेत् पृथुः पृथुलविक्रमः ।
उदरं कमठः पातु नाभिं धन्वन्तरिश्च ते ॥ १९
मोहिनी गुह्यदेशञ्च कटिं ते वामनोऽवतु ।
पृष्ठं परशुरामश्च तवोरू बादरायणः ॥ २०
बलो जानुद्वयं पातु जङ्घे बुद्धः प्रपातु ते ।
पादौ पातु सगुल्फौ च कल्किर्धर्मपतिः प्रभुः ॥ २१
सर्वरक्षाकरं दिव्यं श्रीकृष्णकवचं परम् ।
इदं भगवता दत्तं ब्रह्मणे नाभिपङ्कजे ॥ २२
ब्रह्मणा शम्भवे दत्तं शम्भुर्दुर्वाससे ददौ ।
दुर्वासाः श्रीयशोमत्यै प्रादाच्छ्रीनन्दमन्दिरे ॥ २३
अनेन रक्षां कृत्वास्य गोपीभिः श्रीयशोमती ।
पाययित्वा स्तनं दानं विप्रेभ्यः प्रददौ महत् ॥ २४
तदा नन्दादयो गोपा आगता मथुरापुरात् ।
दृष्ट्वा घोरां पूतनाख्यां बभूवुर्भयविह्वलाः ॥ २५

गर्ग उवाच

इत्येवं कथित दिव्य श्रीकृष्णचरित परम्।
यः शृणोति नरो भक्त्या स कृतार्थो न संशयः ॥ १

शौनक उवाच

सुधाखण्डात्पर मिष्टं श्रीकृष्णचरित शुभम्।
श्रुत्वा त्वन्मुखतः साक्षात् कृतार्थाः स्मो वयं मुने ॥ २
श्रीकृष्णभक्तः शान्तात्मा बहुलाश्वः सतां वरः।
अतो मुनिं किं पप्रच्छ तन्मे ब्रूहि तपोधन ॥ ३

गर्ग उवाच

अथ राजा मैथिलेन्द्रो हर्षितः प्रेमविह्वलः।
नारदं प्राह धर्मात्मा परिपूर्णतमं स्मरन् ॥ ४

बहुलाश्व उवाच

धन्योऽहञ्च कृतार्थोऽहं भवता भूरिकर्मणा।
सङ्गो भगवदीयानां दुर्लभो दुर्घटोऽस्ति हि ॥ ५
श्रीकृष्णस्त्वर्भकः साक्षादद्भुतो भक्तवत्सलः।
अग्रे चकार किं चित्रं चरित्रं वद मे मुने ॥ ६

नारद उवाच

साधु पृष्टं त्वया राजन् भवता कृष्णधर्मिणा।
सङ्गमः खलु साधूनां सर्वेषां वितनोति शम् ॥ ७
एकदा कृष्णजन्मर्क्षे यशोदा नन्दगेहिनी।
गोपीगोपान् समाहूय मङ्गलं चाकरोद् द्विजैः ॥ ८

रक्ताम्बरं कनकभूषणभूषिताङ्गं
बालं प्रगृह्य कलिताञ्जनपद्मनेत्रम्।
श्यामं स्फुरद्धरिनखावृतचन्द्रहारं
देवान् प्रणम्य सुधनं प्रददौ द्विजेभ्यः ॥ ९

प्रेङ्खे निधाय निजमात्मजमाशु गोपी
सम्पूज्य मङ्गलदिने व्रजगोपिकास्ताः ।
नैवाशृणोत् सुरुदितस्य सुतस्य नादं
गोपेषु मङ्गलगृहेषु गतागतेषु ॥ १०

तत्रैव कंसखलनोदित उत्कचाख्यो
दैत्यः प्रभञ्जनतनुः शकटं य एत्य ।
बालस्य मूर्ध्नि परिपातयितुं प्रवृत्तः
कृष्णोऽपि तं किल तताड पदारुणेन ॥ ११

चूर्णे गतेऽथ शकटे पतिते च दैत्ये
त्यक्त्वा प्रभञ्जनतनुं विमलो बभूव ।
नत्वा हरिं शतहयेन रथेन युक्तो
गोलोकधाम निजलोकमलं जगाम ॥ १२

नन्दादयो व्रजजना व्रजगोपिकाश्च
सर्वे समेत्य युगपत् पृथुकांस्तदाहुः ।
एष स्वयश्च पतितः शकटः कथं हि
जानीथ हे व्रजसुताः सुगताश्च यूयम् ॥ १३

बाला ऊचुः

प्रेङ्खस्थोऽयं क्षिपन् पादौ रुदन् दुग्धार्थमेव हि ।
तताड पादं शकटे तेनेदं पतितं खलु ॥ १४

नारद उवाच

श्रद्धां न चक्रुर्बालोक्ते गोपा गोप्यश्च विस्मिताः ।
त्रैमासिकः क्व बालोऽयं क्व चैतद्भारभृत्त्वनः ॥ १५
बालमङ्के संगृहीत्वा यशोदा ग्रहशङ्किता ।
कारयामास विधिवद् यज्ञं विप्रैः सुतर्पितैः ॥ १६

बहुलाश्व उवाच

कोऽयं पूर्वन्तु कुशली दैत्य उत्कचनामभाक्।
अहो कृष्णपदस्पर्शाद् गतो मोक्षं महामुने ॥ १७

नारद उवाच

हिरण्याक्षसुतो दैत्य उत्कचो नाम मैथिल।
लोमशस्याश्रमे गच्छन् वृक्षांश्चूर्णीचकार ह ॥ १८
तं दृष्ट्वा स्थूलदेहाढ्यमुत्कचाख्यं महाबलम्।
शशाप रोषयुग् विप्रो विदेहो भव दुर्मते ॥ १९
सर्पकञ्चुकवद्देहोऽपतत् कर्मविपाकतः।
सद्यस्तच्चरणोपान्ते पतित्वा प्राह दैत्यराट् ॥ २०

उत्कच उवाच

हे मुने हे कृपासिन्धो कृपां कुरु ममोपरि।
त्वत्प्रभाव न जानामि वरं मे देहि हे प्रभो ॥ २१

नारद उवाच

तदा प्रसन्नः स मुनिर्दृष्टं येन शतं विधेः।
सतां रोषोऽपि वरदो वरो मोक्षार्थदः किमु ॥ २२

लोमश उवाच

वातदेहस्तु ते भूयाद् व्यतीते चाक्षुषेऽन्तरे
वैवस्वतान्तरे मुक्तिर्भविता च पदा हरेः ॥ २३

नारद उवाच

तस्मादुत्कचदैत्यस्तु मुक्तो लोमशतेजसा।
तेभ्यस्तेभ्यो नमो ये वै समर्था वरशापयोः ॥ २४
उत्सङ्गे क्रीडितं बालं लालयन्त्येकदा नृप।
गिरिभारं न सेहे तु वोढुं श्रीनन्दगेहिनी ॥ २५
अहो गिरिसमो बालः कथं स्यादिति विस्मिता।
भूमौ निधाय तं सद्यो नेदं कस्मै जगाद ह ॥ २६

कंसप्रणोदितो दैत्यस्तृणावर्तो महाबल. ।
जहार बालं क्रीडन्तं वातावर्तेन सुन्दरम् ॥ २७
रजोऽन्धकारोऽभूत्तत्र घोरशब्दश्च गोकुले ।
रजस्वलानि चक्षूंषि बभूवुर्घटिकाद्वयम् ॥ २८
ततो यशोदा नापश्यत् पुत्रं तं मन्दिराजिरे ।
मोहिता रुदती घोषान् पश्यन्ती गृहशेखरान् ॥ २९
अदृष्टे च तदा पुत्रे पतिता भुवि मूर्च्छिता ।
उच्चैः रुरोद करुणं मृतवत्सा यथा हि गौः ॥ ३०
रुरुदुश्च तदा गोप्यः प्रेमस्नेहसमाकुलाः ।
अश्रुमुख्यो नन्दसूनुं पश्यन्त्यस्ता इतस्ततः ॥ ३१
तृणावर्तो नभः प्राप्त ऊर्ध्वं वै लक्षयोजनम् ।
स्कन्धे सुमेरुवद् बालं मन्यमान. प्रपीडितः ॥ ३२
अथ कृष्णं पातयितुं दैत्यस्तत्र समुद्यतः ।
गलं जग्राह तस्यापि परिपूर्णतमः स्वयम् ॥ ३३
मुञ्च मुञ्चेति गदिते दैत्ये कृष्णोऽद्भुतोऽर्भकः ।
गलग्राहेण महता व्यसुन् दैत्यञ्चकार ह ॥ ३४
तज्ज्योतिः श्रीघनश्यामे लीन सौदामिनी यथा ।
दैत्योऽम्बरान्निपतितः शिशुना सह भूतले ॥ ३५
विशीर्णावयवस्यापि पतितस्य स्वनेन वै ।
विनेदुश्च दिशः सर्वाः कम्पितं भूमिमण्डलम् ॥ ३६
तद्धृदिस्थं शिशुं तूर्णं रुदन्त्यो गोपिकास्ततः ।
ददृशुर्युगपत् सर्वा नीत्वा मात्रे ददुर्जगुः ॥ ३७

गोप्य ऊचुः

न योग्यासि यशोदे त्वं बालं लालयितुं मनाक् ।
न घृणा ते क्वचिद् दृष्टा क्रुद्धासि कथितेन वै ॥ ३८

प्राप्तेऽन्धकारे स्वारोहात् कोऽपि बालं जहाति हि ।
त्वया निर्घृणया भूमौ धृतो बालो महाभये ॥ ३९

यशोदोवाच

न जानासि कथं बाले भारभूतो गिरीन्द्रवत् ।
तस्मान्मया कृतो भूमौ चक्रवाते समागते ॥ ४०

गोप्य ऊचु.

मा मृषा वद कल्याणि हे यशोदे गतव्यथे ।
अयं दुग्धमुखो बालो लघुः कुसुमतूलवत् ॥ ४१

नारद उवाच

तदा गोप्योऽथ गोपाश्च नन्दाद्या आगते शिशौ ।
अतीव मोदं सम्प्रापुर्वदन्तः कुशलं जनैः ॥ ४२
यशोदा बालकं नीत्वा पाययित्वा स्तनं मुहु. ।
आघ्रायोरसि वस्त्रेण रोहिणी प्राह मोहिता ॥ ४३

यशोदोवाच

एको दैवेन दत्तोऽयं न पुत्रा बहवश्च मे ।
तस्यापि बहवोऽरिष्टा आगच्छन्ति क्षणे क्षणे ॥ ४४
अद्य मृत्युमुखान्मुक्तो भविष्यं किमतः परम् ।
किं करोमि क्व गच्छामि कुत्र वासो भवेदनु ॥ ४५
वज्रसाराश्च ये दैत्या निर्दया घोरदर्शनाः ।
वैरं कुर्वन्ति मे बाले दैव दैव कुतः सुखम् ॥ ४६
धनं धान्यं गृहं सौधो रत्नानि विविधानि च ।
सर्वं जातं सुखं मे वै भूयान्मे कुशली शिशुः ॥ ४७
हरेरर्चां दानमिष्टं पूर्तं देवालयं शतम् ।
करिष्यामि तदा बालोऽरिष्टेभ्यो विजयी यदा ॥ ४८
एकबालेन मे सौख्यमन्धयष्टिरिव प्रभुः ।
बालं नीत्वा गमिष्यामि देशे रोहिणि निर्भये ॥ ४९

नारद उवाच

तदैव विप्रा विद्वांस आगता नन्दमन्दिरे ।
यशोदया च नन्देन पूजिता आसनस्थिताः ।। ५०

ब्राह्मणा ऊचुः

मा शोकं कुरु हे नन्द हे यशोदे व्रजेश्वरि ।
करिष्यामः शिशो रक्षां चिरजीवी भवेदयम् ॥ ५१

नारद उवाच

इत्युक्त्वा द्विजमुख्यास्ते कुशाग्रैर्नवपल्लवैः ।।
पवित्रकलशैस्तोयैर्ऋग्यजुःसामजैः स्तवैः ।। ५२
परैः स्वस्त्ययनैर्यज्ञं कारयित्वा विधानतः ।
अग्निं सम्पूज्य विधिवद्रक्षां विदधिरे शिशोः ।। ५३

ब्राह्मणा ऊचु.

दामोदरः पातु पादौ जानुनी विष्टरश्रवाः ।
ऊरू पातु हरिर्नाभिं परिपूर्णतमः स्वयम् ॥ ५४
कटिं राधापतिः पातु पीतवासास्तवोदरम् ।
हृदयं पद्मनाभश्च भुजौ गोवर्द्धनोद्धरः ॥ ५५
मुखञ्च मथुरानाथो द्वारकेशः शिरोऽवतु ।
पृष्ठं पात्वसुरध्वंसी सर्वतो भगवान् स्वयम् ।। ५६
श्लोकत्रयमिदं स्तोत्रं यः पठेन्मानव. सदा ।
महासौख्यं भवेत्तस्य न भयं विद्यते क्वचित् ॥ ५७

नारद उवाच

नन्दस्तेभ्यो गवां लक्षं सुवर्णं दशलक्षकम् ।
सहस्रं नवरत्नानां वस्त्रलक्षं ददौ परम् ।। ५८
गतेषु द्विजमुख्येषु नन्दो गोपान्निमन्त्र्य च ।
भोजयामास सम्पूज्य वस्त्रं भूषैर्मनोहरैः ॥ ५९

बहुलाश्व उवाच

तृणावर्तः पूर्वकाले कोऽय सुकृतकृन्नरः ।
परिपूर्णतमे साक्षाच्छ्रीकृष्णे लीनतां गतः ॥६०

नारद उवाच

पाण्डुदेशोद्भवो राजा सहस्राक्षः प्रतापवान् ।
हरिभक्तो धर्मनिष्ठो यज्ञकृद्दानतत्परः ॥६१
रेवातटे महादिव्ये लतावेत्रसमाकुले ।
नारीणाञ्च सहस्रेण रमयन् विचचार ह ॥६२
दुर्वाससं मुनिं साक्षादागत न ननाम सः ।
तदा मुनिर्ददौ शाप राक्षसो भव दुर्मते ॥६३
पुनस्तदङ्घ्र्योः पतिते नृपे प्रादाद्वरं मुनिः ।
श्रीकृष्णविग्रहस्पर्शान्मुक्तिस्ते भविता नृप ॥६४

नारद उवाच

सोऽपि दुर्वाससः शापात्तृणावर्तोऽभवद्भुवि ।
श्रीकृष्णविग्रहस्पर्शात् परं मोक्षमवाप ह ॥६५

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे शकटासुरतृणावर्तमोक्षोनाम
चतुर्दशोऽध्यायः ॥१४

नारद उवाच

प्रेङ्खे हरित्कनकरत्नमये शयानं
श्यामं शिशुं जनमनोहरमन्दहासम् ।
दृष्ट्यार्तिहारि मषिबिन्दुधरं यशोदा
स्वाङ्के चकार धृतकज्जलपद्मनेत्रम् ॥ १
पादं पिबन्तमतिचञ्चलमङ्गनाङ्गं
वक्रैर्विनीलनवकोमलकेशबन्धैः ।
श्रीमन्नृकेशरिनखस्फुरदर्द्धचन्द्रं
तं लालयन्त्यतिघृणा मुदमाप गोपी ॥ २
बालस्य पीतपयसो नृप जृम्भतो वै
तत्त्वानि चास्यवदने सकले विराजन् ।
माता सुरेन्द्रियमुखैः प्रयुतश्च सर्वं
दृष्ट्वा परं भयमवाप निमीलिताक्षी ॥३
राजन् परस्य परिपूर्णतमस्य साक्षात्
कृष्णस्य विश्वमखिलं कपटेन या हि ।
नष्टस्मृतिः पुनरभूत् स्वसुते घृणार्ता
किं वर्णयामि सुतपो बहु नन्दपत्न्याः ॥ ४

बहुलाश्व उवाच

नन्दो यशोदया सार्द्धं किं चकार तपो महत् ।
येन श्रीकृष्णचन्द्रोऽपि पुत्रीभूतो बभूव ह ॥ ५

नारद उवाच

अष्टानां वै वसूनाञ्च द्रोणो मुख्यो धरापतिः ।
अनपत्यो विष्णुभक्तो देवराज्यं चकार ह ॥ ६
एकदा पुत्रकाङ्क्षी च ब्रह्मणा नोदितो नृप ।
मन्दराद्रिं गतस्तप्तुं धरया भार्यया सह ॥ ७

कन्दमूलफलाहारौ ततः पर्णाशनौ ततः ।
जलभक्षौ ततस्तौ तु निर्जलौ निर्जने स्थितौ ॥ ८
वर्षाणामर्बुदे याते तपस्तप्तवतोर्द्वयोः ।
ब्रह्मा प्रसन्नस्तावेत्य वरं ब्रूहीत्युवाच ह ॥ ६
वल्मीकान्निर्गतो द्रोणो धरया भार्यया सह ।
नत्वा विधिञ्च सम्पूज्य हर्षितः प्राह तं प्रभुम् ॥१०

द्रोण उवाच

परिपूर्णतमे कृष्णे पुत्रीभूते जनार्दने ।
भक्तिः स्यादावयो र्यां वै वदन्ति प्रेमलक्षणाम् ॥११
ययाञ्जसा तरन्तीह दुस्तरं भवसागरम् ।
नान्यं वरं वाञ्छित स्यादावयोस्तपतांविधे ॥१२

ब्रह्मोवाच

युवाभ्यां याचितं यन्मे दुर्घट दुर्लभं परम् ।
तथापि भूयात् सफलं युवयोरन्यजन्मनि ॥१३

नारद उवाच

द्रोणो नन्दोऽभवद्भूमौ यशोदा सा धरा स्मृता ।
कृष्णो ब्रह्मवचः कर्तुं प्राप्तो घोषे पितुः पुरात् ॥१४
सुधाखण्डात् परं मिष्ट श्रीकृष्णचरितं शुभम् ।
गन्धमादनशृङ्गे वै नारायणमुखाच्छ्रुतम् ॥१५
कृपया च कृतार्थोऽहं नरनारायणस्य च ।
मया तुभ्यञ्च कथित किं भूयः श्रोतुमिच्छसि ॥१६

बहुलाश्व उवाच

नन्दगेहे हरिः साक्षाच्छिशुरूपः सनातनः ।
किं चकार वलेनापि तन्मे ब्रूहि महामुने ॥१७

नारद उवाच

एकदा शिष्यसहितो गर्गाचार्यो महामुनिः ।
शौरिणा प्रेषितः साक्षादाययौ नन्दमन्दिरम् ॥१८

नन्दः सम्पूज्य विधिवत् पाद्याद्यैर्मुनिसत्तमम् ।
ततः प्रदक्षिणीकृत्य साष्टाङ्गं प्रणनाम ह ॥१९

नन्द उवाच

अद्य नः पितरो देवाः सन्तुष्टा अग्नयश्च नः ।
पवित्रं मन्दिरं जातं युष्मच्चरणरेणुभिः ॥२०

मत्पुत्रनामकरणं कुरु द्विज महामुने ।
पुण्यैस्तीर्थैश्च दुष्प्राप्यं भवदागमनं प्रभो ॥२१

गर्ग उवाच

त्वत्पुत्रनामकरण करिष्यामि न संशयः ।
पूर्ववार्तां गदिष्यामि गच्छ नन्द रहः स्थलम् ॥२२

नारद उवाच

उत्थाप्य गर्गो नन्देन बालाभ्यां च यशोदया ।
एकान्ते गोव्रजे गत्वा तयोर्नाम चकार ह ॥२३

सम्पूज्य गणनाथादीन् ग्रहान् सशोध्य यत्नतः ।
नन्दं प्राह प्रसन्नाङ्गो गर्गाचार्यो महामुनिः ॥२४

गर्ग उवाच ।

रोहिणीनन्दनस्यास्य नामोच्चारं शृणुष्व तत् ।
रमन्ते योगिनो ह्यस्मिन् सर्वत्र रमतीति वा ॥२५

गुणैश्च रमयन् भक्तांस्तेन रामं विदुः परे ।
गर्भसङ्कर्षणादस्य सङ्कर्षण इति स्मृतः ॥२६

सर्वावशेषाद् यं शेषं बलाधिक्याद्बलं विदुः ।
त्वत्पुत्रस्यापि नामानि शृणु नन्द यतेद्यतः ॥२७

अघघ्नानि पवित्राणि जगतां मङ्गलानि च ।
ककारः कमलाकान्त ऋकारो राम इत्यपि ॥२८
षकारः षड्गुणपतिः श्वेतद्वीपनिवासकृत् ॥
णकारो नारसिंहोऽयमकारोह्यक्षरोऽग्निभुक् ॥२६
विसर्गश्च तथाह्य तौ नरनारायणावृषी ।
सम्प्रलीनाश्च षट्पूर्णा यस्मिञ्छुद्धे महात्मनि ॥ ३०
परिपूर्णतमे साक्षात्तेन कृष्णः प्रकीर्तितः ।
शुक्लो रक्तस्तथा पीतो वर्णोऽस्यानुयुगं धृतः ॥ ३१
द्वापरान्ते कलेरादौ बालोऽयं कृष्णतां गतः ।
तस्मात् कृष्ण इति ख्यातो नाम्नायं नन्दनन्दनः ॥ ३२
वसुशब्दाच्चेन्द्रियाणि तद्देवश्चित्तमेव हि ।
तस्मिन् यश्चेष्टते सोऽपि वासुदेव इति स्मृतः ॥ ३३
वृषभानुसुता राधा या जाता कीर्तिमन्दिरे ।
तस्याः पतिरयं साक्षात्तेन राधापतिः स्मृतः ॥ ३४
परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ।
असङ्ख्यब्रह्माण्डपतिर्गोलोके धाम्नि राजते ॥ ३५
सोऽयं तव शिशुर्जातो भारावतरणाय च ।
कंसादीनां वधार्थाय भक्तानां रक्षणाय च ॥ ३६
अनन्तान्यस्य नामानि वेदगुह्यानि सत्पते ।
लीलाभिश्च भविष्यन्ति तत्कर्मसु न विस्मयः ॥ ३७
अहो भाग्यन्तु ते नन्द साक्षाच्छ्रीपुरुषोत्तमः ।
त्वद्गृहे वर्तमानोऽयं शिशुरूपः परात्परः ॥ ३८

नारद उवाच

इत्युक्त्वाथ गते गर्गे स्वात्मानं पूर्णमाशिषाम् ।
मेने प्रमुदितः पत्न्या नन्दराजो महामतिः ॥ ३९

अथ गर्गो ज्ञानिवरो ज्ञानदो मुनिसत्तम. ।
कालिन्दीतीरशोभाढ्यं वृषभानुपुरं गतः ॥ ४०
छत्रेण शोभित विप्रं द्वितीयमिव वासवम् ।
दण्डेन राजित साक्षाद्धर्मराजमिव स्थितम् ॥ ४१
तेजसा द्योतितदिशं साक्षात् सूर्यमिवापरम् ।
पुस्तकीमेखलायुक्तं द्वितीयमिव पद्मजम् ॥ ४२
शोभितं शुक्लवासोभिर्देव विष्णुमिव स्थितम् ।
तं दृष्ट्वा मुनिशार्दूलं सहसोत्थाय सादरम् ॥ ४३
प्रणम्य शिरसा सद्यः सम्मुखोऽभूत् कृताञ्जलिः ।
मुनिञ्च पीठके स्थाप्य पाद्यार्घैरुपचारवित् ॥ ४४
पूजयामास विधिवच्छ्रीगर्गं ज्ञानिनां वरम् ।
ततः प्रदक्षिणीकृत्य वृषभानुवरो महान् ॥ ४५

वृषभानुरुवाच

सतां पर्य्यटनं धन्यं गृहीणां शान्तये स्मृतम् ।
नृणामन्तस्तमोहारी साधुरेव न भास्करः ॥ ४६
तीर्थीभूता वयं गोपा जातास्त्वद्दर्शनात् प्रभो ।
तीर्थानि तीर्थीकुर्वन्ति त्वादृशाः साधवः क्षितौ ॥ ४७
हे मुने राधिका नाम कन्या मे मङ्गलायना ।
कस्मै वराय दातव्या वद त्वं मे सुनिश्चितम् ॥ ४८
त्वं पर्य्यटन्नर्क इव त्रिलोकी दिव्यदर्शनः ।
वदानया समो यो वै तस्मै दास्यामि कन्यकाम् ॥ ४९

नारद उवाच

हस्तं गृहीत्वा श्रीगर्गो वृषभानोर्मुदा मुनिः ।
जगाम यमुनातीरं निर्जनं सुन्दरस्थलम् ॥ ५०
कालिन्दीजलकल्लोलकोलाहलसमाकुलम् ।
तत्रोपविश्य गोपेशं मुनीन्द्रः प्राह धर्मवित् ॥ ५१

गर्ग उवाच

हे गोप गुप्तमाख्यानं कथनीयं न च त्वया ।
परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ॥ ५२
असङ्ख्यब्रह्माण्डपतिर्गोलोकेशः परात्परः ।
तस्मात् परो वरो नास्ति जातो नन्दगृहे शिशुः ॥ ५३

वृषभानुरुवाच

अहो भाग्यमहो भाग्यं नन्दस्यापि महामुने ।
श्रीकृष्णस्यावतारस्य सर्वं त्वं वद कारणम् ॥ ५४

गर्ग उवाच

भुवो भारावताराय कंसादीनां वधाय च ।
ब्रह्मणा प्रार्थितः कृष्णो बभूव जगती तले ॥ ५५
श्रीकृष्णपट्टराज्ञी या गोलोके राधिकाभिधा ।
त्वद्गृहे सापि सञ्जाता त्वं न जानासि तां पराम् ॥ ५६

नारद उवाच

तदा प्रहर्षितो गोपो वृषभानुः सविस्मितः ।
कलावतीं समाहूय तया सार्द्धं विचार्य च ॥ ५७
राधाकृष्णानुभावञ्च ज्ञात्वा गोपवरः परः ।
आनन्दाश्रुकलां मुञ्चन् पुनराह महामुनिम् ॥ ५८

वृषभानुरुवाच

तस्मै दास्यामि हे ब्रह्मन् कन्यां कमललोचनाम् ।
त्वया पन्था दर्शितो मे त्वं कारय तदुद्वहम् ॥ ५९

गर्ग उवाच

अहं न कारयिष्यामि विवाहमनयोर्नृप ।
तयोर्विवाहो भविता भाण्डीरे यमुनातटे ॥ ६०
वृन्दावनसमीपे च निर्जने सुन्दरस्थले ।
परमेष्ठी समागत्य विवाहं कारयिष्यति ॥ ६१

तस्माद्राधां गोपवर विद्धयर्धाङ्गीं परस्य च ।
लोकचूडामणेः साक्षाद्राज्ञीं गोलोकमन्दिरे ॥ ६२
यूयं सर्वेऽपि गोपाला गोलोकादागता भुवि ।
तथा गोपीगणा गावो गोलोके राधिकेच्छया ॥ ६३

यद्दर्शनं दुर्लभमेव दुर्घटं
वेदैश्च यज्ञैर्नरजन्मभिः किमु ।
सविग्रहां तां तव मन्दिराजिरे
लक्षन्ति गुप्तां बहुगोपगोपिका ॥ ६४

नारद उवाच

तदातिविस्मितौ राजन् दम्पती हर्षितौ परम् ।
राधाकृष्णप्रभावं तं श्रुत्वा श्रीगर्गमूचतुः ॥ ६५

दम्पती ऊचतुः

राधाशब्दस्य हे ब्रह्मन् व्याख्यानं वद तत्त्वतः ।
त्वत्तो न संशयच्छेत्ता कोऽपि भूमौ महामुने ॥ ६६

गर्ग उवाच

सामवेदस्य भावार्थो गन्धमादनपर्वते ।
शिष्येणापि मया तत्र नारायणमुखाच्छ्रुतः ॥ ६७
रमया तु रकारः स्यादाकारस्त्वादिगोपिका ।
धकारो धरया च स्यादाकारो विरजा नदी ॥ ६८
श्रीकृष्णस्य परस्यापि चतुर्द्धा तेजसोऽभवत् ।
लीला भूः श्रीश्च विरजा चतस्रः पत्न्य एव हि ॥ ६९
सम्प्रलीनाश्च ताः सर्वा राधायां कुञ्जमन्दिरे ।
परिपूर्णतमां राधां तस्मादाहुर्मनीषिणः ॥ ७०
राधाकृष्णेति हे गोप ये जपन्ति पुनःपुनः ।
चतुःपदार्थं किं तेषां साक्षात् कृष्णोऽपि लभ्यते ॥ ७१

नारद उवाच

तदातिविस्मितो राजन् वृषभानुः प्रियायुतः ।
राधाकृष्णप्रभावं तं ज्ञात्वानन्दमयो ह्यभूत् ॥ ७२
इत्थं गर्गो ज्ञानिवरः पूजितो वृषभानुना ।
जगाम स्वगृहं साक्षान्मुनीन्द्रः सर्ववित् कविः ॥ ७३

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्वसंवादे
नन्दपत्न्याविश्वरूपदर्शनश्रीकृष्णनामकरणं नाम
पञ्चदशोऽध्यायः ॥ १५

नारद उवाच

गाश्चारयन् नन्दनमङ्कदेशे
संलालयन् दूरतरं सकाशात् ।
कलिन्दजातीरसमीरकम्पितं
नन्दोऽथ भाण्डीरवनं जगाम ॥ १

कृष्णेच्छया वेगतरोऽथवातो
घनैरभून्मेदुरमम्बरञ्च ।
तमालनीपद्रुमपल्लवैश्च
पतद्भिरेजद्भिरतीव भाः कौ ॥ २

तदान्धकारे महति प्रजाते
बालेरुदत्यङ्कगतेऽतिभीते ।
नन्दो भयं प्राप शिशुं स बिभ्र-
द्धरिं परेशं शरणं जगाम ॥ ३

तदैव कोट्यर्कसमूहदीप्ति-
रागच्छती बाललतेव साशु ।
बभूव राजन् वृषभानुपुत्री
ददर्श राधां किल नन्दराजः ॥ ४

कोटीन्दुबिम्बद्युतिमादधानां
नीलाम्बरां सुन्दरगौरवर्णाम् ।
मञ्जीरधीरध्वनिनूपुराणा-
माबिभ्रतीं शब्दमतीव मञ्जुम् ॥ ५

काञ्चीकलाकङ्कणशब्दमिश्रां
हाराङ्गुलीयाङ्गदविस्फुरन्तीम् ।
श्रीनासिकामौक्तिकहेमविन्दुं
श्रीकण्ठचूडामणिकुण्डलाढ्याम् ॥ ६

तत्तेजसा धर्षित आशु नन्दो
नत्वाथ तामाह कृताञ्जलिः सन्।
अयन्तु साक्षात् पुरुषोत्तमस्त्वं
प्रियास्य मुख्यासि सदैव राधे ॥ ७
गुप्तं त्विदं गर्गमुखेन वेद्मि
गृहाण राधे निजनाथमङ्कात्।
एनं गृहं प्रापय मेघभीत
वदामि चेत्थं प्रकृतेर्गुणाढ्यः ॥८
नमामि तुभ्य भुवि रक्ष मां त्वं
कृष्णप्रियासि प्रकृतेः परा त्वम्।
श्रुत्वा वचस्तस्य तदैव राधा
चन्द्रावली गोपपतिं तमाह ॥ ९

राधोवाच

वरं परं ब्रूहि महामते त्वं
यथेप्सितं सर्वजनैर्दुरापम्।
अहं प्रसन्ना तव भक्तिभावान्
मद्दर्शनं दुर्लभमेव नन्द ॥१०

नन्द उवाच

यदि प्रसन्नासि तदा भवेन्मे
भक्तिर्दृढा कौ युवयोः पदाब्जे।
सताञ्च भक्तिस्तव भक्तिभाजां
सङ्गः सदा मेऽथ युगे युगे च ॥ ११

नारद उवाच

तथास्तु चोक्त्वाथ हरिं कराभ्यां
जग्राह राधा निजनाथमङ्कात्।
गतेऽथ नन्दे प्रणते व्रजेशे
तदा हि भाण्डीरवनं जगाम ॥१२

गोलोकलोकाच्च पुरा समागता
भूमिर्निजं स्वं वपुरादधाना।
या पद्मरागादिखचित्सुवर्णा
बभूव सा तत्क्षणमेव सर्वा ॥१३

वृन्दावनं दिव्यवपुर्दधार
वृक्षैर्वरैः कामदुघैस्सहैव ।
कलिन्दपुत्री च सुवर्णसौधैः
श्रीरत्नसोपानमयी बभूव ॥१४

गोवर्द्धनो रत्नशिलामयोऽभूत्
सुवर्णशृङ्गैः परितः स्फुरद्भिः।
मत्तालिभिर्निर्झरसुन्दरीभि
र्दरीभिरुच्चाङ्गकरीव राजन् ॥ १५

तदा निकुञ्जोऽपि निजं वपुर्दधत्
सभायुतं प्राङ्गणदिव्यमण्डपम् ।
वसन्तमाधुर्यधरं मधुव्रतै-
र्मयूरपारावतकोकिलध्वनि ॥१६

सुवर्णरत्नादिखचित्पटैर्वृतं
पतत्पताकावलिभिर्विराजितम्।
सरः स्फुरद्भिर्भ्रमरावलीढितै
र्विराजितं काञ्चनपङ्कजैः शुभैः ॥१७

तदैव साक्षात् पुरुषोत्तमोत्तमो
बभूव कैशोरवपुर्घनप्रभः ।
पीताम्बरः कौस्तुभरत्नभूषणो
वंशीधरो मन्मथराशिमोहनः ॥१८

भुजेन सङ्गृह्य हसन् प्रियां हरि-
र्जगाम मध्ये सुविवाहमण्डपम् ।
विवाहसम्भारयुतं समेखलं
सुदर्भ सद्वारि घटादिमण्डपम् ।।१९

तत्रैव सिंहासन उन्नते वरे
परस्परं सम्मिलितौ विरेजतुः ।
परं ब्रुवन्तौ मधुरञ्च दम्पती
स्फुरत्प्रभौ खे च तडिद्घनाविव ॥२०

तदाम्बराद्देववरो विधिः प्रभुः
समागतस्तस्य परस्य सम्मुखे ।
नत्वा तदङ्घ्री उशती गिराभिः
कृताञ्जलिश्चारु चतुर्मुखो जगौ ॥२१

ब्रह्मोवाच

अनादिमाद्यं पुरुषोत्तमोत्तमं
श्रीकृष्णचन्द्रं निजभक्तवत्सलम् ।
स्वयन्त्वसङ्ख्याण्डपतिं परात्परं
राधापतिं त्वां शरणं व्रजाम्यहम् ।।२२

गोलोकनाथस्त्वमतीवलीलो
लीलावतीयं निजलोकलीला ।
वैकुण्ठनाथोऽसि यदा त्वमेव
लक्ष्मीस्तदेयं वृषभानुजा हि ॥ २३

त्वं रामचन्द्रो जनकात्मजेयम्
भूमौ हरिस्त्वं कमलालयेयम् ।
यज्ञावतारोऽसि यदा तदेयं
श्रीदक्षिणास्ति प्रतिपत्निमुख्या ।।२४

त्वं नारसिंहोऽसि रमा तदेयं
नारायणस्त्वं हि नरेणयुक्तः ।
तदा त्वियं शान्तिरतीव साक्षात्
श्रीरेव या चैव तवानुरूपा ॥२५

त्वं ब्रह्म चेयं प्रकृतिस्तटस्था
कालो यदेमाञ्च विदुः प्रधानम् ।
महान् यदा त्वं जगदङ्कुरोऽसि
राधा तदेयं सगुणा च माया ॥२६

यदान्तरात्मा विततश्चतुर्भि-
स्तदा त्वियं लक्षणरूपवृत्तिः ।
यदा विराड्देहधरस्त्वमेव
तदाखिलं वा भुवि धारणेयम् ॥ २७

श्यामञ्च गौरं विदितं द्विधा मह-
स्तवैव साक्षात् पुरुषोत्तमोत्तम ।
गोलोकधामाधिपतिं परात्परं
राधापतिं त्वां शरणं व्रजाम्यहम् ॥२८

सदा पठेद् यो युगलस्तवं परं
गोलोकधामप्रवरं प्रयाति सः ।
इहैव सौन्दर्यसमृद्धिसिद्धयो
भवन्ति तस्यापि निसर्गतः पुनः ॥२९

सदा युवां प्रीतियुतौ च दम्पती
परात्परौ तावनुरूपरूपितौ ।
तथापि लोकव्यवहारसङ्ग्रहात्
विधिं विवाहस्य तु कारयाम्यहम् ॥३०

नारद उवाच

तदा स उत्थाय विधिर्हुताशनं
प्रज्वाल्य कुण्डे स्थितयोस्तयोः पुरः ।
श्रुतेः करग्राहविधिं विधानतो
विधाय धाता समवस्थितोऽभवत् ॥३१

स कारयामास हरिञ्च राधिकां
प्रदक्षिणाः सप्त हिरण्यरेतसः ।
ततश्च तौ तं प्रणमय्य वेदवित्
तौ पाठयामास च सप्त मन्त्रकम् ॥३२

ततो हरेर्वक्षसि राधिकाया
करञ्च संस्थाप्य हरेः करं पुनः ।
श्रीराधिकाया. किल पृष्ठदेशके
संस्थाप्य मन्त्रांश्च विधिः प्रपाठयत् ॥३३

राधा कराभ्यां प्रददौ च मालिकां
किञ्जल्किनीं कृष्णगलेऽलिनादिनीम् ।
हरेः कराभ्यां वृषभानुजागले
ततश्च वह्निं प्रणमय्य वेदवित् ॥३४

संवासयामास सुपीठयोश्च तौ
कृताञ्जली मौनयुतौ पितामहः ।
तौ पाठयामास तु पञ्च मन्त्रकं
समर्प्य राधाञ्च पितेव कन्यकाम् ॥३५

पुष्पाणि देवा ववृषुस्तदा नृप
विद्याधरीभिर्ननृतुः सुराङ्गनाः ।
गन्धर्वविद्याधरचारणाः किल
सकिन्नराः कृष्णसुमङ्गलं जगुः ॥३६

मृदङ्गवीणामुरजास्तु वेणवः
शङ्खानकादुन्दुभयः सतालकाः ।
नेदुर्मुहुर्देववरैर्दिविस्थितै-
र्जयेत्यभून्मङ्गलशब्दमुच्चकैः ॥३७

उवाच तत्रैव विधिं हरिः स्वयं
यथेप्सितां त्वं वद विप्र दक्षिणाम् ।
तदा हरिं प्राह विधिः प्रभो मे
देहि त्वदङ्घ्र्योर्निजभक्तिदक्षिणाम् ॥३८

तथास्तु वाक्यं वदतो विधिर्हरेः
श्रीराधिकायाश्च पदद्वयं शुभम्
नत्वा कराभ्यां शिरसा पुनःपुन-
र्जगाम गेहं प्रणतः प्रहर्षितः ॥ ३९

ततो निकुञ्जेषु चतुर्विधान्न
दिव्यं मनोज्ञं प्रियया प्रदत्तम् ।
जघास कृष्णः प्रहसन् परात्मा
कृष्णेन दत्तं क्रमुकञ्च राधा ॥ ४०

ततः करेणापि करं प्रियायाः
हरिर्गृहीत्वा प्रचलन्निकुञ्जे ।
जगाम जल्पन् मधुरं प्रपश्यन्
वृन्दावनं श्रीयमुनां लताश्च ॥ ४१

श्रीमल्लताकुञ्जनिकुञ्जमध्ये
निलीयमानं प्रहसन्तमेव ।
विलोक्य शाखान्तरितञ्च राधा
जग्राह पीताम्बरमाव्रजन्ती ॥ ४२

दुद्राव राधा हरिहस्तपद्माज्
मञ्जारमञ्जैः प्रतिकुर्वती कौ ।
निलीयमाना यमुनानिकुञ्जे
पुनर्व्रजन्ती हरिहस्तमात्रात् ॥ ४३

यथा तमालः कलधौतवल्ल्या
घनो यथा चञ्चलया चकास्ति ।
नीलाद्रिराजो निकषाश्मखन्या
श्रीराधयायन्तु तथा रमण्या ॥ ४४

श्रीरासरङ्गे जनवर्जिते परे
रेमे हरी रासरसेन राधया ।
वृन्दावने भृङ्गमयूरकोकिलै-
र्वृते चरत्येव रतीश्वरः परः ॥४५

श्रीराधया कृष्णहरिः परात्मा
ननर्त गोवर्द्धनकन्दरासु ।
मत्तालिषु प्रस्रवणैः सरोभि-
र्विराजितासु द्युतिमल्लतासु ॥४६

चकार कृष्णो यमुनां समेत्य
वारां विहारं वृषभानुपुत्र्या ।
राधाकराल्लक्षदलं हि पद्मं
धावन् गृहीत्वा यमुनाजलेषु ॥ ४७

राधा हरेः पीतपटञ्च वंशीं
वेत्रं गृहीत्वा सहसा हसन्ती ।
देहीति वंशीं वदतो हरेश्च
जगाद राधा कमलं नु देहि ॥४८

तस्यै ददौ देववरोऽथ पद्म
राधा ददौ पीतपटञ्च वंशीम् ।
वेत्रञ्च तस्मै हरये तयोः पुन-
र्बभूव लीला यमुनातटेषु ॥ ४६

ततश्च भाण्डीरवने प्रियाया-
श्चकार शृङ्गारमलं मनोज्ञम् ।
पत्रावलीयावककज्जलाद्यैः
पुष्पैः सुरत्नैर्व्रजगोपरत्नः ॥ ५०

हरेश्च शृङ्गारमल प्रकर्त्तु
समुद्यता तत्र यदा हि राधा ।
तदैव कृष्णस्तु बभूव बालो
विहाय कैशोरवपुः स्वयं हि ॥५१

नन्देन दत्तं शिशुमेव यादृश
भूमौ लुठन्त प्ररुदन्तमाययौ ।
हरि विलोक्याशु रुरोद राधिका
तनोषि मायां नु कथं हरे मयि ॥ ५२

इत्थं रुदन्ती सहसा विषण्णा-
माकाशवागाह तदैव राधाम् ।
शोचं नु राधे इह मा कुरु त्वं
मनोरथस्ते भविता हि पश्चात् ॥ ५३

श्रुत्वाथ राधा हि हरिं गृहीत्वा
गत्वाथ गेहे व्रजनन्दपत्न्याः ।
दत्वा च बालं किल नन्दपत्न्या
उवाच दत्त पथि ते च भर्त्रा ॥ ५४

उवाच राधां नृप नन्दगेहिनी
धन्यासि राधे वृषभानुकन्यके ।
त्वया शिशुर्मे परिरक्षितो भयान्
मेघावृते व्योम्नि भयातुरो वने ॥ ५५

सम्पूजिता श्लाघितसद्गुणा सा
सुनन्दिता श्रीवृषभानुपुत्री ।
तदाह्यनुज्ञाप्य यशोमतीं सा
शनैः स्वगेहं निजमाजगाम ॥ ५६

इत्थं हरेर्गुप्तकथा च वर्णिता
राधाविवाहस्य सुमङ्गलावृता ।
श्रुता च यैर्वा पठिता च पाठिता
तान् पापवृन्दा न कदा स्पृशन्ति ॥ ५७

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे श्रीराधिकाविवाहवर्णन नाम
षोडशोऽध्यायः ॥ १६

नारद उवाच

अथ बालौ रामकृष्णौ गौरश्यामौ मनोहरौ ।
लीलया चक्रतुरलं सुन्दरं नन्दमन्दिरम् ॥ १
रिङ्गमाणौ च जानुभ्यां पाणिभ्यां सह मैथिल ।
व्रजताल्पेन कालेन ब्रुवन्तौ मधुरं व्रजे ॥ २
यशोदया च रोहिण्या लालितौ पोषितौ शिशू ।
कदापि निर्गतावङ्कात् क्वचिदङ्कं समाश्रितौ ॥ ३
मञ्जीरकिङ्किणीराव कुर्वन्तौ ताවितस्ततः ।
त्रिलोकीं मोहयन्तौ द्वौ मायाबालकविग्रहौ ॥ ४

क्रीडन्तमादाय शिशुं यशोदा-
जिरे लुठन्तं व्रजबालकैश्च ।
तद्धूलिलेपावृतधूसराङ्गं
चक्रे ह्यलं प्रोक्षणमादरेण ॥ ५
जानुद्वयाभ्यां प्रसभं कराभ्यां
पुनर्व्रजन् प्राङ्गणमेत्य कृष्णः ।
मात्रङ्कदेशे पुनराव्रजन् सन्
बभौ व्रजे केसरिबाललीलः ॥ ६
तं सर्वतो हैमनचित्रयुक्त
पीताम्बरं कञ्चुकमादधानम् ।
स्फुरत्प्रभं रत्नमयञ्च मौलिं
दृष्ट्वा सुतं प्राप मुदं यशोदा ॥ ७
बालं मुकुन्दमतिसुन्दरबालकेलिं
दृष्ट्वा परं मुदमवापुरतीव गोप्यः ।
श्रीनन्दराजगृहमेत्य गृहं विहाय
सर्वास्तु विस्मृतगृहाः सुखविग्रहास्ताः ॥ ८

श्रीनन्दराजगृहकृत्रिमसिंहरूपं
दृष्ट्वा व्रजन् प्रतिरवन् नृप भीरुवद् यः ।
नीत्वा च तन्निजसुतं गृहमाव्रजन्तीं
गोप्यो व्रजे सघृणया ह्यवदन् यशोदाम् ॥ ६

गोप्य ऊचुः

क्रीडार्थं चपल ह्यं न मा बहिः कार्याङ्गणात् ।
बालकेलिं दुग्धमुखं काकपक्षधरं शुभे ॥ १०
ऊर्ध्वदन्तद्वयं जातं पूर्वमातुलदोषदम् ।
अस्यापि मातुलो नास्ति ते सुतस्य यशोमति ॥ ११
तस्माद्दानन्तु कर्तव्यं विघ्नानां नाशहेतवे ।
गोविप्रसुरसाधूनां छन्दसां पूजन तथा ॥ १२

नारद उवाच

तदा यशोदारोहिण्यौ सुतकल्याणहेतवे ।
वस्त्ररत्नवान्नानां दानं नित्यञ्च चक्रतुः ॥ १३
अथ व्रजे रामकृष्णौ बालसिंहावलोकनौ ।
पद्भ्यां चलन्तौ घोषेषु वर्द्धमानौ बभूवतुः ॥ १४
श्रीदामसुबलाद्यैश्च वयस्यैरुपनन्दजैः ।
यमुनासैकते शुभ्रे लुठन्तौ सकुतूहलौ ॥ १५
कालिन्द्युपवने श्यामैस्तमालैः सघनैर्वृते ।
कदम्बकुञ्जशोभाढ्ये चरन्तौ रामकेशवौ ॥ १६
जनयन् गोपगोपीनामानन्दं बाललीलया ।
वयस्यैश्चोरयामास नवनीतं घृतं हरिः ॥ १७
एकदा ह्युपनन्दस्य पत्नी नाम्ना प्रभावती ।
श्रीनन्दमन्दिरं प्राप्ता यशोदां प्राह गोपिका ॥ १८

प्रभावत्युवाच

नवनीतं घृतं दुग्धं दधि तक्रं यशोमति ।
आवयोर्भेदरहितं त्वत्प्रसादाच्च मेऽभवत् ।। १९
नाहं वदामि बालेन स्तेय कुत्रापि शिक्षितम् ।
शिक्षां करोषि न सुते नवनीतमुषि स्वतः ।। २०
यदा मया कृता शिक्षा तदा धृष्टस्तवाङ्गजः ।
गालिप्रदानं कृत्वायं द्रवति प्राङ्गणान् मम ॥ २१
व्रजाधीशस्य पुत्रोऽयं भूत्वा स्तेयं समाचरेत् ।
न मया कथितं किञ्चिद् यशोदे तव गौरवात् ॥ २२

नारद उवाच

श्रुत्वा प्रभावती वाक्यं यशोदा नन्दगेहिनी ।
बालं निर्भर्त्स्य तामाह साम्ना प्रेमपरायणा ।। २३

यशोदोवाच

गवां कोटिर्गृहे मेऽस्ति गोरसैराद्रिताचला ।
न जाने दधिमुड् बालो नास्ति सोऽत्र कदाचन ।। २४
अनेन मुषितं गव्यं तत्समं त्व गृहाण मे ।
ते शिशोर्मे शिशोर्भेदो नास्ति किञ्चित् प्रभावति ॥ २५
नवनीतमुखञ्चैनं मे बालं ह्यानयिष्यसि ।
तदा शिक्षां करिष्यामि भर्त्सनं बन्धनं तथा ।। २६

नारद उवाच

श्रुत्वा वाक्यं तदा गोपी प्रसन्ना गृहमागता ।
एकदा दधिचौर्यार्थं कृष्णस्तस्या गृहं गतः ।। २७
वयस्यैर्बालकैः सार्द्धं पार्श्वकुड्ये गृहस्य च ।
हस्ताद्धस्तं सङ्गृहीत्वा शनैः कृष्णो विवेश ह ।। २८
शिक्यस्थं गोरसं दृष्ट्वा हस्ताग्राह्यं हरिः स्वयम् ।
उलूखलं पीठकञ्च गोपान् स्थाप्यारुरोह तम् ॥ २९

तदापि प्रांशुना लभ्य गोरसं शिक्यसंस्थितम् ।
श्रीदाम्ना सुबलेनापि दण्डेनापि तताड च ॥ ३०
भग्नभाण्डात् सर्वगव्यं वहद्भूमौ मनोहरम् ।
जघास सबलो मर्कैर्बालकैः सह माधवः ॥ ३१
भग्नभाण्डस्वनं श्रुत्वा प्राप्ता गोपी प्रभावती ।
पलायितेषु बालेषु जग्राह श्रीकरं हरेः ॥ ३२
नीत्वा मृषाश्रु भीरुश्च गच्छन्ती नन्दमन्दिरम् ।
अग्रे नन्दं स्थितं दृष्ट्वा मुखे वस्त्रं चकार ह ॥ ३३
हरिर्विचिन्तयन्नित्थं माता दण्डं प्रदास्यति ।
दधार तद्बालरूपं स्वच्छन्दगतिरीश्वरः ॥ ३४
सा यशोदां समेत्याशु प्राह गोपी रुषान्विता ।
भाण्डं भग्नं कृतं सर्वं मुषितं दध्यनेन वै ॥ ३५
यशोदा तत्सुतं वीक्ष्य हसन्ती प्राह गोपिकाम् ।
वस्त्रान्तञ्च मुखाद् गोपी दूरीकृत्य वदांहसः ॥ ३६
अपवादो यदा देयो निर्वासं कुरु मे पुरात् ।
युष्मत्पुत्रकृतं चौर्यमस्मत्पुत्रकृतं भवेत् ॥ ३७
जनलज्जा समायुक्ता दूरीकृत्य मुखाम्बरम् ।
सापि प्राह निजं बालं वीक्ष्य विस्मितमानसा ॥ ३८
निष्पदस्त्वं कुतः प्राप्तो वज्रसारोऽस्ति मे करे ।
वदन्तीत्थञ्च तं नीत्वा निर्गता नन्दमन्दिरात् ॥ ३९
यशोदा रोहिणी नन्दो रामो गोपाश्च गोपिकाः ।
जहसुः कथयन्तस्ते दृष्टान्यायो व्रजे महान् ॥ ४०
भगवांस्तु बहिर्वीथ्यां भूत्वा श्रीनन्दनन्दनः ।
प्रहसन् गोपिकां प्राह धृष्टाङ्गश्चञ्चलेक्षणः ॥ ४१

भगवानुवाच

पुनर्मां यदि गृह्णासि कदाचित्त्वं हि गोपिके ।
ते भर्तृरूपन्तु तदा भविष्यामि न संशयः ॥ ४२

नारद उवाच

श्रुत्वा सा विस्मिता गोपी गता गेहेऽथ मैथिल ।
तदा सर्वा व्रजे गोप्यो न गृह्णन्ति हरिं ह्रिया ॥ ४३

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे दधिस्तेयवर्णनं नाम
सप्तदशोऽध्यायः ॥ १७

नारद उवाच

गोपीगृहेषु विचरन्नवनीतचौरः
श्यामो मनोहरवपुर्नवकञ्जनेत्रः ।
श्रीबालचन्द्र इव वृद्धिगतो नराणां
चित्तं हरन्निव बलेन चकार शोभाम् ॥ १
श्रीनन्दनन्दनमतीव चलं गृहीत्वा
गेहं निधाय मुमुहुर्नवनन्दगोपाः ।
सत्कन्दुकैश्च सततं परिपालयन्तो
गायन्त ऊर्जितसुखा न जगत् स्मरन्तः ॥ २

राजोवाच

नवोपनन्दनामानि वद देव ऋषे मम ।
अहोभाग्यन्तु येषां वै ते पूर्वं क इहागताः ॥ ३
तथा षड् वृषभानूनां कर्माणि मङ्गलानि च ।

नारद उवाच

गयश्च विमलः श्रीशः श्रीधरो मङ्गलायनः ॥ ४
मङ्गलो रङ्गवल्लीशो रङ्गोजिर्देवनायकः ।
नवनन्दाश्च कथिता बभूवुर्गोकुले व्रजे ॥ ५
वीतहोत्रोऽग्निभुक् शाम्बः श्रीकरो गोपतिः श्रुतः ।
व्रजेशः पावनः शान्त उपनन्दाः प्रकीर्तिताः ॥ ६
नीतिविन् मार्गदः शुक्लः पतङ्गो दिव्यवाहनः ।
गोपेष्टश्च व्रजे राजन् जाताः षड् वृषभानवः ॥ ७
गोलोके कृष्णचन्द्रस्य निकुञ्जद्वारमाश्रिताः ।
वेत्रहस्ताः श्यामलाङ्गा नवनन्दाश्च ते स्मृताः ॥ ८

निकुञ्जे कोटिशो गावस्तासां पालनतत्पराः ।
वंशीमयूरपक्षाढ्या उपनन्दाश्च ते स्मृताः ॥ ६
निकुञ्जदुर्गरक्षायां दण्डपाशधराः स्थिताः ।
षड्द्वारमास्थिताः षड् वै कथिता वृषभानवः ॥ १०
श्रीकृष्णस्येच्छया सर्वे गोलोकादागता भुवि ।
तेषां प्रभावं वक्तुं हि न समर्थश्चतुर्मुखः ॥ ११
अहं किमु वदिष्यामि तेषां भाग्यं महोदयम् ।
येषामारोहमास्थाय बालकेलिर्बभौ हरिः ॥ १२
एकदा यमुनातीरे मृत् कृष्णेनावलीढिता ।
यशोदां बालकाः प्राहुरत्ति बालो मृद तव ॥ १३
बलभद्रे च वदति तदा सा नन्दगेहिनी ।
करे गृहीत्वा स्वसुतं भीरुनेत्रमुवाच ह ॥ १४

यशोदोवाच

कस्मान्मृदं भक्षितवान् रसाज्ञो
भवान् वयस्याश्च वदन्ति साक्षात् ।
ज्यायान् बलोऽयं वदति प्रसिद्ध
मा एवमर्थं न जहाति नेष्टम् ॥ १५

भगवानुवाच

सर्वे मृषावादरता व्रजार्भका
मातर्मया क्वापि न मृत् प्रभक्षिता ।
यदा समीचीनमनेन वाक्पथं
तदा मुख पश्य मदीयमञ्जसा ॥ १६

नारद उवाच

अथ गोपी बालकस्य पश्यन्ती सुन्दरं मुखम् ।
प्रसारितञ्च ददृशे ब्रह्माण्डं रचितं गुणैः ॥ १७

सप्तद्वीपान् सप्तसिन्धून् सखण्डान् सगिरीन् दधान् ।
आब्रह्मलोकाल्लोकांस्त्रीन् स्वात्मभिः सव्रजैः सह ॥ १८
दृष्ट्वा निमीलिताक्षी सा भूत्वा श्रीयमुनातटे ।
बालोऽयं मे हरिः साक्षादिति ज्ञानमयी ह्यभूत् ॥ १९
तदा जहास श्रीकृष्णो मोहयन्निव मायया ।
यशोदा वैभवं दृष्ट्वा न सस्मार गतस्मृतिः ॥ २०

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे ब्रह्माण्डदर्शनं नाम
अष्टादशोऽध्यायः ॥१८

नारद उवाच

एकदा गोकुले गोप्यो ममन्थुर्दधि सर्वतः ।
गृहे गृहे प्रगायन्त्यो गोपालचरितं परम् ॥ १
यशोदापि समुत्थाय प्रातः श्रीनन्दमन्दिरे ।
भाण्डे गव्यं विनिक्षिप्य ममन्थ दधि सुन्दरी ॥ २
मञ्जीररावं संकुर्वन् बालः श्रीनन्दनन्दनः ।
ननर्त्त नवनीतार्थं गव्यादानकुतूहलात् ॥३
बालकेलिर्बभौ नृत्यन् मातुः पार्श्वमनुभ्रमन् ।
सुनादिकिङ्किणीसङ्घझङ्कार कारयन् मुहुः ॥४

हैयङ्गवीनं सततं नवीनं
याचन् स मातुर्मधुरं ब्रुवन् सः ।
आदाय हस्तेऽश्मसुतं रुषा सुधी-
र्बिभेद कृष्णो दधिमन्थपात्रम् ॥५
पलायमानं स्वसुतं यशोदा
प्रधावती प्राप न हस्तमात्रात् ।
योगीश्वराणामपि यो दुरापः
कथं स मातुर्ग्रहणे प्रयाति ॥ ६
तथापि भक्तेषु च भक्तवश्यता
प्रदर्शिता श्रीहरिणा नृपेश्वर ।
बालं गृहीत्वा स्वगृहे यशोमती
बबन्ध रज्ज्वाथ रुषा ह्युलूखले ॥ ७
आदाय यद्यद्बहुदाम तत्तत्
स्वल्पं प्रभूतं स्वसुते यदो वै ।
गुणैर्न बद्धः प्रकृतेः परो य
कथं स बद्धो भवतीह दाम्ना ॥ ८

यदा यशोदा गतबन्धनेच्छा
स्विन्ना निषण्णा नृप खिन्नमानसा ।
आसीत्तदायं कृपया स्वबन्धे
स्वच्छन्दयानः स्ववशोऽपि कृष्णः ॥९

एष प्रसादो न हि वीतकर्मणां
न ज्ञानिनां कर्मधियां कुतः पुनः ।
मातुर्यथाभून्नृप एष तस्मान्
मुक्तिं व्यधाद्भक्तिमलं न माधवः ॥१०

तदैव गोप्यस्तु समागतास्त्वरं
दृष्ट्वाथ भग्नं दधिमन्थभाजनम् ।
उलूखले बद्धमतीव दामभि-
र्भीतं शिशुं वीक्ष्य जगुर्घृणातुराः ॥११

गोप्य ऊचुः

अस्मद्गृहेषु पात्राणि भिनत्ति सततं शिशुः ।
तदप्येवं नो वदामः कारुण्यान्नन्दगेहिनि ॥१२

गतव्यथे ह्यकरुणे यशोदे हे व्रजेश्वरि ।
यष्ट्या निर्भर्त्सितो बालस्त्वया बद्धो घटक्षयात् ॥१३

नारद उवाच

इत्युक्तायां यशोदायां व्यग्रायां गृहकर्मसु ।
कर्षन्नुलूखलं कृष्णो बालैः श्रीयमुनां ययौ ॥१४

तत्तटे च महावृक्षौ पुराणौ यमलार्जुनौ ।
तयोर्मध्ये गतः कृष्णो हसन् दामोदरः प्रभुः ॥१५

चकर्ष सहसा कृष्णस्तिर्यग्गतमुलूखलम् ।
कर्षणेन समूलौ द्वौ पेततुर्भूमिमण्डले ॥१६

पतनेनापि शब्दोऽभूत् प्रचण्डो वज्रपातवत् ।
विनिर्गतौ च वृक्षाभ्यां देवौ द्वावेधसोऽग्निवत् ॥१७
दामोदरं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ।
कृताञ्जली हरिं नत्वा तौ तु तत्सम्मुखे स्थितौ ॥१८

देवावूचतुः

आवां मुक्तौ ब्रह्मदण्डात् सद्यस्तेऽच्युतदर्शनात् ।
माभूत्ते निजभक्तानां हेलन ह्यावयोर्हरे ॥१९
करुणानिधये तुभ्यं जगन्मङ्गलशीलिने ।
दामोदराय कृष्णाय गोविन्दाय नमोनमः ॥२०

नारद उवाच

इति नत्वा हरिं तौ द्वौ उदीचीञ्च दिश गतौ ।
तदैव ह्यागताः सर्वे नन्दाद्या भयकातराः ॥२१
कथं वृक्षौ प्रपतितौ विना वातं व्रजार्भकाः ।
वदताशु तदा बाला ऊचुः सर्वे व्रजौकसः ॥२२

बाला ऊचुः

अनेन पातितौ वृक्षौ ताभ्यां द्वौ पुरुषौ स्थितौ ।
एनं नत्वा गतावद्य तावुदीच्यां स्फुरत्प्रभौ ॥२३

नारद उवाच

इति श्रुत्वा वचस्तेषां न ते श्रद्दधिरे ततः ।
मुमोच नन्दः स्वं बालं दाम्ना बद्धमुलूखले ॥२४
संलालयन् स्वाङ्कदेशे समाघ्राय शिशुं नृप ।
निर्भर्त्स्य भामिनीं नन्दो विप्रेभ्यो गोशतं ददौ ॥२५

बहुलाश्व उवाच

काविमौ पुरुषौ दिव्यौ वद देवर्षिसत्तम ।
केन दोषेण वृक्षत्वं प्रापितौ यमलार्जुनौ ॥२६

नारद उवाच

नलकूबरमणिग्रीवौ राजराजसुतौ परौ ।
जग्मतुर्नन्दनवनं मन्दाकिन्यास्तटे स्थितौ ॥२७
अप्सरोभिर्गीयमानौ चेरतुर्गतवाससौ ।
वारुणीमदिरामत्तौ युवानौ द्रव्यदर्पितौ ॥२८
कदाचिद्देवलो नाम मुनीन्द्रो वेदपारगः ।
नग्नौ दृष्ट्वा च तावाह दुष्टशीलौ गतस्मृती ॥२९

देवल उवाच

युवां वृक्षसमौ दृष्टौ निर्लज्जौ द्रव्यदर्पितौ ।
तस्माद् वृक्षौ तु भूयास्तां वर्षाणां शतकं भुवि ॥३०
द्वापरान्ते भारते च माथुरे व्रजमण्डले ।
कलिन्दनन्दिनीतीरे महावनसमीपतः ॥३१
परिपूर्णतमं साक्षात्कृष्णं दामोदरं हरिम् ।
गोलोकनाथं तं दृष्ट्वा पूर्वरूपौ भविष्यथः ॥३२

नारद उवाच

एवं देवलशापेन वृक्षत्वं प्रापितौ नृप ।
नलकूबरमणिग्रीवौ श्रीकृष्णेन विमोचितौ ॥३३

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे यमलार्जुनभङ्गो नाम
एकोनविंशोऽध्यायः ॥१९

तपस्तताप वर्षाणां शतकोटीः प्रभु भजन् ।
नैमित्तिकाख्ये प्रलये प्राप्ते विश्वभयङ्करे ॥ ११
आगच्छन्तः समुद्रास्ते स्नावयन्तो धरातलम् ।
वहंस्तेषु च दुर्वासा न प्रापान्तं जलस्य च ॥ १२
व्यतीते युगसाहस्रे मग्नोऽभूद्विगतस्मृतिः ।
पुनर्जलेषु विचरन्नण्डमन्यं ददर्श ह ॥ १३
तच्छिद्रे च प्रविष्टोऽसौ दिव्यां सृष्टिं गतस्ततः ।
तदण्डमूर्ध्नि लोकेषु विवरेषु च सञ्चरन् ॥ १४
एकं छिद्रं तत्र वीक्ष्य प्रविश्य च हरिं स्मरन् ।
बहिर्विनिर्गतो ह्यण्डाद्ददर्शाशु महाजलम ॥ १५
तस्मिन् जले तु लक्ष्यन्ते कोटिशो ह्यण्डराशयः ।
ततो मुनिर्जलं पश्यन् ददर्श विरजां नदीम् ॥ १६
तत्पार प्रगतः साक्षाद्गोलोक प्राविशन् मुनि ।
वृन्दावन गोवर्द्धनं यमुनापुलिनं शुभम् ॥ १७
दृष्ट्वा प्रसन्नः स मुनिर्निकुञ्जं प्राविशंस्ततः ।
गोपगोपीगणवृतं गवां कोटिभिरन्वितम् ॥ १८
असङ्ख्यकोटिमार्तण्डज्योतिषां मण्डले ततः ।
दिव्ये लक्षदले पद्मे स्थितं राधापतिं हरिम् ॥ १९
परिपूर्णतमं साक्षाच्छ्रीकृष्णं पुरुषोत्तमम् ।
असङ्ख्यब्रह्माण्डपतिं गोलोकेशं ददर्श ह ॥ २०
श्रीकृष्णस्यापि हसतः प्रविष्टस्तन्मुखे मुनि. ।
पुनर्विनिर्गतोऽपश्यद्बालं श्रीनन्दनन्दनम् ॥ २१
कालिन्दीनिकटे पुण्ये सैकते रमणस्थले ।
बालकैः सहितं कृष्णं विचरन्तं महावने ॥ २२
तदा मुनिश्च दुर्वासा ज्ञात्वा कृष्णं परात्परम् ॥
श्रीनन्दनन्दनं नत्वा नत्वा प्राह कृताञ्जलिः ॥ २३

मुनिरुवाच

बालं नवीनशतपत्रविशालनेत्रं
बिम्बाधरं सघनमेघरुचिं मनोज्ञम् ।
मन्दस्मितं मधुरसुन्दरमन्दयानं
श्रीनन्दनन्दनमहं मनसा नमामि ॥ २४
मञ्जीरनूपुररणन्नवरत्नकाञ्ची-
श्रीहारकेयुरनखप्रतियन्त्रसङ्घम् ।
दृष्ट्यार्तिहारिमषिबिन्दुविराजमानं
वन्दे कलिन्दतनुजातटबालकेलिम् ॥ २५
पूर्णेन्दुसुन्दरमुखोपरिकुञ्चिताग्राः
केशा नवीनघननीलविभाः स्फुरन्ति ।
राजन्त आनतशिरः कुतुकस्य यस्य
नन्दात्मजाय सबलाय नमोऽस्तु तस्मै ॥ २६
श्रीनन्दनन्दनस्तोत्रं प्रातरुत्थाय यः पठेत् ।
तन्नेत्रगोचरो याति सानन्दं नन्दनन्दनः ॥ २७

नारद उवाच

इति प्रणम्य श्रीकृष्णं दुर्वासा मुनिसत्तमः ।
तं ध्यायन् प्रजपन् प्रागाद् बदर्य्याश्रममुत्तमम् ॥ २८

गर्ग उवाच

इत्थं देवर्षिवर्य्येण नारदेन महात्मना ।
कथितं कृष्णचरितं बहुलाश्वाय धीमते ॥ २९
मया ते कथितं ब्रह्मन् यशः कलिमलापहम् ।
चतुःपदार्थदं दिव्यं किं भूयः श्रोतुमिच्छसि ॥ ३०

शौनक उवाच

बहुलाश्वो मैथिलेन्द्रः किं पप्रच्छ महामुनिम् ।
नारदं ज्ञानदं शान्तं मे तद् ब्रूहि कृपाकर ॥ ३१

गर्ग उवाच

नारदं ज्ञानदं नत्वा ज्ञानदो मैथिलो नृपः ।
पुनः पप्रच्छ कृष्णस्य चरितं मङ्गलायनम् ॥ ३२

बहुलाश्व उवाच

श्रीकृष्णो भगवान् साक्षात् परमानन्दविग्रहः ।
अग्रे चकार किं चित्र चरित्रं वद मे प्रभो ॥ ३३
पूर्वावतारैश्चरितं श्रुतं वै मङ्गलायनम् ।
अपरं किन्तु कृष्णस्य विचित्रं चरितं परम् ॥ ३४

नारद उवाच

साधु साधु त्वया पृष्टं चरित्रं मङ्गलं हरेः ।
तत्तेऽहं वर्णयिष्यामि वृन्दारण्येऽपि यद्यश ॥ ३५
इदं गोलोकखण्डञ्च गुह्य परमनुत्तमम् ।
श्रीकृष्णेन प्रकथितं गोलोके रासमण्डले ॥ ३६
निकुञ्जे राधिकायैव राधा मह्य ददाविदम् ।
मया तुभ्यं श्रावितञ्च दत्त सर्वार्थदं परम् ॥ ३७
इदं पठित्वा विप्रस्तु सर्वशास्त्रार्थगो भवेत् ।
श्रुत्वेदं चक्रवर्ती स्यात् क्षत्रियश्चण्डविक्रमः ॥ ३८
वैश्यो निधिपतिर्भूयाच्छूद्रो मुच्येत पातकात् ।
निष्कामो योऽपि जगति जीवन्मुक्तः स जायते ॥ ३९
यो नित्यं पठते सम्यग् भक्तिभावसमन्वितः ।
स गच्छेत् कृष्णचन्द्रस्य गोलोकं प्रकृतेः परम् ॥ ४०

इति श्रीगर्गसंहितायां गोलोकखण्डे नारदबहुलाश्व-
संवादे भगवज्जठरगतदुर्वाससोब्रह्माण्डगोलोक-
दर्शनपूर्वकश्रीनन्दनन्दनस्तोत्रकरणं नाम
विंशोऽध्यायः ॥२०

इति प्रथमोगोलोकखण्डः समाप्तः ॥

# गर्गसंहितायां गोलोकखण्डे पाठान्तरादिप्रदर्शनम् ।

अत्र क = राजकीयसंस्कृतमहाविद्यालयसरस्वतीभवनस्थं १५६०८ संख्यकं पुस्तकम् ।

ख = रा० स० महाविद्यालयसरस्वतीभवनस्थं १५३६५ संख्यकं पु० ।

ग = रा० स० म० सरस्वतीभवनस्थं १४६८३ संख्यकं पु० ।

घ = रा० स० म० सरस्वतीभवनस्थं १६२३२ संख्यकं पु० ।

मु० = खेमराज श्रीकृष्णदासेन मुम्बई वेंकटेश्वरप्रेसतः प्रकाशितं पु० ।

अग्रे श्लोकपरिचयात्मिकासु संख्यासु प्रथमा अध्यायबोधिका, अनन्तरा च श्लोकसंख्याबोधिका । यथा १।३ इत्यस्य प्रथमाध्यायस्य तृतीयश्लोकोऽर्थः वेदितव्यः ।

१।१ नास्ति ख० पु०।

१।२ ०मुनिसेवितं०इति मु० पु० । ०चलद्व्यतिपद० इति मु० पु० ।

१।५ ०पाद्याद्यैरुप० इति मु०पु० ।

१।७ ०रवतारो भवत्यलम् ॥ इति मु० पु० ।

१।८ सर्वेषु पुस्तकेषु श्रीशब्देन सहैव गर्ग इत्यादि शब्दा दृश्यन्ते । अत्र च मुद्रण-सौकर्यार्थं श्रीशब्दं विनैव 'गर्ग उवाच' इत्यादीनां निवेशः कृतोऽस्माभिः ।

१।१२ योऽनादिरात्मा० इति ख० मु० पु० ।

ब्रूहि महामते ॥ इति मु०पु ।

१।१३ तनुं धत्ते हरिः० इति मु० पु० ।

१।१४ ०मुमुहुस्ते न संशयः ॥ इति मु० पु० ।

१।१५ ०रवतारो भवत्यलम् । इति मु० पु० । ०रक्षणार्थं हि कृपया० इति मु० पु० । नास्ति ग० पु० । नारद उवाच इत्यपि नास्ति ग० पु० ।

१।१६ अंशांशोंऽशस्तथा० इति मु० पु० ।

१।१७ अंशांशस्तु मरीच्यादिरंशा

ब्रह्मादय स्मृताः। इति ख० ग० पु०।

०ब्रह्मादयस्तथा। इति मु० पु०।

१।२० ०कुर्वन्तः सदाशास्ते० इति मु० पु०।

१।२१ येभ्योऽप्यन्तर्गतो विष्णुर्व्यापकत्वाद्विनिर्गतः। इति क० पु०।

नानावेशावतारांश्च० इति मु० पु०।

१।२२ धर्मं विज्ञाय कृत्वा यः० इति मु० पु०।

०कृत्वा यं० इति ख० पु०।

१।२३ ०दृश्यन्ते वरमानवः। इति, ०वीर्य्याणि यत्तु पूर्णाः प्रकथ्यते। इतिच ख० पु०।

१।२४ ०वदन्ति परे साक्षात्० इति मु० पु०।

१।२५ ०जना.सोऽयं० इति मु०पु०।

१।२७ ०सदानन्दमयं कृपाकरं गुणाकरं तं शरणं व्रजाम्यहम्॥ इति ख० मु० पु०।

१।२८ ०राजा रोमाञ्ची प्रेमविह्वलः। इति मु० पु०।

०राजा रोमाञ्चोद्धर्षविह्वलः। इति क० ग० पु०।

प्रामृश्य नेत्रे० इति मु० पु०।

१।३० ०ब्रूहि ब्रह्मन् बृहन्मुने। इति मु० पु०।

१।३१ ०जन्म तप परम्। इति क० ख० ग० पु०।

१।३३ ०श्रीकृष्णोष्टो० इति मु०पु०।

२।१ ०मोक्षनिःश्रेणी स न रोहति० इति ख० पु०।

०मोक्षनिःश्रेणी स नारोहति० इति मु० पु०।

२।३ ०दानवदेवाना नराणा खलु० इति ख० पु०।

२।५ ब्रह्माथाश्वास्य० इति मु० पु०।

२।७ श्रीनाथभगवानुवाच इति ख० पु०।

२।८ यदि योऽन्यस्तस्य० इति ख० मु० पु०।

०दर्शय नः प्रभो॥ इति मु० पु०।

२।११ कुलिङ्गबिम्ब इति ख० पु०।

२।१३ ०योजनोर्ध्वं वै० इति ख० मु० पु०।

२।१४ तरङ्गितं क्षौमशुभ्रं० इति

मु० पु० ।
तरङ्गितक्षौमशुभ्रं ०इति ख० पु० ।
२।१५ ०तत्पुर जग्मु० इति मु० पु० ।
२।१७ ०पश्यत्साकारं० इति मु० पु० ।
तस्मिन्महा० इति मु०पु० ।
२।१६ ०विशत्येव० इति मु० पु० ।
२।२२ ०श्रीकृष्णस्य सखीजनान्। इति क०ग० पु० ।
२।२४ वदताशु गमिष्यामि० इति मु० पु० ।
२।२५ अहो अण्डान्यु० इति ख० मु० पु० ।
०प्रजानीमोऽथोऽपरं नास्ति० इति मु० पु० ।
२।२६ ब्रह्मदेव लुठन्तीह० इति मु० पु० ।
२।२७ ०कदा नात्र समागताः। इति ख० मु० पु० ।
जड़वच्च प्रपश्यन्ति०इति क० ग० पु० ।
२।२८ ब्रह्माण्डमेकं जानीथ० इति क० ग० पु० ।
२।३१ ०भ्योऽप्याज्ञां० इति मु० पु० ।
०दत्त्वा गता पुरे। इति क० ख० ग० पु० ।
२।३२ तत्र गोवर्द्धनो० इति मु० पु० ।
२।३३ वसन्तमानिनीभि० इति मु० पु० ।
२।३४ यत्र कृष्णानदी० इति मु० पु० ।
२।३६ पुलिने शीतले० इति मु० पु० ।
२।३८ सप्तधा पद्मरागा० इति ख० मु० पु० ।
०गुलिकाद्युतिः। इति मु० पु० ।
२।३६ जातभ्रमर० इति मु० पु० ।
०सङ्गीतो मत्त० इति ख० मु० पु० ।
२।४४ ०हेमतुल्या हारमाला० इति क० ग० पु० ।
२।४५ ०स्त्वनेकधा॥ इति मु० पु० ।
धूम्राः.. स्त्वनेकशः॥ इति नास्ति ख० पु० ।
२।४६ समुद्र.. ..चिह्निताः॥ इति नास्ति ख० पु० ।

भगवानुवाच

रम्भोरु नन्दनगरे नन्दगेहस्य चोत्तरे ।
गोकुले वसतिर्मेऽस्ति नाम्नाऽहं गोपदेवता ॥ ३१
त्वद्रूपगुणमाधुर्यं श्रुतं मे ललितामुखात् ।
तद्द्रष्टुं चञ्चलापाङ्गि त्वद्गृहेऽहं समागता ॥ ३२
श्रीमल्लवङ्गलतिकास्फुटमोदनीनां
गुञ्जानिकुञ्जमधुपध्वनिकुञ्जपुञ्जम् ।
दृष्टं श्रुतं नववनं तव कञ्जनेत्रे
दिव्यं पुरन्दरपुरेऽपि न यत्समानम् ॥ ३३

नारद उवाच

एवं तयोर्मेलनन्तु बभूव मिथिलेश्वर ।
प्रीतिं परस्परं कृत्वा वने तत्र विरेजतुः ॥ ३४
हसन्त्यौ ते च गायन्त्यौ पुष्पकन्दुकलीलया ।
पश्यन्त्यौ वनवृक्षांश्च चेरतुर्मैथिलेश्वर ॥ ३५
कलाकौशल्यसम्पन्नां राधां कमललोचनाम् ।
गिरा मधुरया राजन् प्राहेदं गोपदेवता ॥ ३६

गोपदेवतोवाच

दूरे वै नन्दनगरं सन्ध्या जाता व्रजेश्वरि ।
प्रभाते चागमिष्यामि त्वत् सकाशं न संशयः ॥ ३७

नारद उवाच

श्रुत्वा वचस्तत् परुषं व्रजेश्वरी
निक्षिप्य सद्यो नयनाम्बुसन्ततिम् ।
रोमाञ्चहर्षोद्गमभावसंवृता
रम्भेव भूमौ पतिता मरुद्धता ॥ ३८

शङ्कागतास्तत्र सखीगणाभृशं
त्वरं व्रजन्त्यो व्यजनैर्व्यवस्थिताः ।
श्रीखण्डपुष्पद्रवचर्चितांशुकां
जगाद राधां नृप गोपदेवता ॥ ३९

गोपदेवतोवाच

प्रभाते चागमिष्यामि मा शोकं कुरु राधिके ।
गोश्च भ्रातुर्गोरसस्य शपथो मे न चेदिदम् ॥ ४०

नारद उवाच

एवमुक्त्वा हरी राधां समाश्वास्य नृपेश्वर ।
मायायुवतिवेषोऽसौ ययौ श्रीनन्दगोकुलम् ॥ ४१

इति श्रीगर्गसंहितायां वृन्दावनखण्डे नारदबहुलाश्व-
संवादे प्रीतिपरीक्षणं नाम
चतुर्दशोऽध्यायः ॥ १४

नारद उवाच

अथ रात्र्यां व्यतीतायां मायायोषिद्वपुर्हरिः ।
राधादुःखप्रशान्त्यर्थं वृषभानोर्गृहं ययौ ॥ १
राधा तामागतां वीक्ष्य समुत्थायातिहर्षिता ।
दत्त्वासनं विधानेन पूजयामास मैथिल ॥ २

राधोवाच

त्वया विनाहं निशि दुःखिताभवं
त्वय्यागतायां सखि लब्धवस्तुवत् ।
पूर्वं ह्यपथ्यस्य सुखं यथा ततो
दुःखं तथा भामिनि सत्प्रसङ्गतः ॥ ३

नारद उवाच

इति श्रुत्वाथ तद्वाक्यं विमना गोपदेवता ॥
न किञ्चिदूचे श्रीराधां दुःखितेव व्यवस्थिता ॥ ४
विज्ञाय खेदसम्पन्नां राधिका गोपदेवताम् ।
सखीभिः संविचार्याथ जगाद स्नेहतत्परा ॥ ५

राधोवाच

विमनास्त्वं कथं भद्रे वद मां गोपदेवते ।
मात्रा भर्त्रा ननान्द्रा वा श्वश्र्वा क्रोधेन भर्त्सिता ॥ ६
सपत्नीकृतदोषेण स्वभर्तुर्विरहेण वा ।
अन्यत्रलग्नचित्तेन विमनाः किं मनोहरे ॥ ७
मार्गखेदेन वा कश्चिद्दिह्लाभू रुजाथवा ।
शीघ्रं वद महाभागे स्वस्य दुःखस्य कारणम् ॥ ८
कृष्णभक्तमृते विप्रं येन केनापि कुत्सितम् ।
कथितं तेऽथ रम्भोरु तच्चिकित्सां करोम्यहम् ॥ ९

गजाश्वादीनि रत्नानि वस्त्राणि च धनानि च ।
मन्दिराणि विचित्राणि गृहाण त्वं यदीच्छसि ॥ १०

धनं दत्वा तनुं रक्षेत्तनु दत्वा त्रपां व्यधात् ।
धन तनुं त्रपां दद्यान्मित्रकार्यार्थमेव हि ।
धनं दत्वा च सततं रक्षेत् प्राणान्निरन्तरम् ॥ ११

यो मित्रतां निष्कपटं करोति
निष्कारणं धन्यतमः स एव ।
विधाय मैत्रीं कपटं विदध्या
त्तं लम्पटं हेतुपटं नटं धिक् ॥ १२

तस्याः प्रेमवचः श्रुत्वा भगवान् गोपदेवता ।
प्रहसन्नाह राजेन्द्र श्रीराधां कीर्तिनन्दिनीम् ॥ १३

गोपदेवतोवाच

राधे बृहत्सानुगिरेस्तटीषु
सङ्कोचवीथीषु मनोहरासु ।
यान्तीं स्वतो मां दधिविक्रयार्थं
रुरोध मार्गे नवनन्दपुत्रः ॥ १४

वंशीधरो वेत्रकरः करे मां
त्वरं गृहीत्वा प्रहसन् विलज्जः ।
मह्यं करादानधनाय दानं
देहीति जल्पन् विपिने रसज्ञः ॥ १५

तुभ्यं न दास्यामि कदापि दानं
स्वयम्भुवे गोरसलम्पटाय ।
एवं मयोक्ते वचनेऽथ भाण्डं
नीत्वा विशीर्णीकृतवान् स दक्षः ॥ १६

भाण्डं स भित्वा दधि किञ्च पीत्वा
नीत्वोत्तरीयं मम चेदुरीयम् ।
नन्दीश्वराद्रेर्विदिशं जगाम
तेनाहमाराद्विमना स्म जाता ॥ १७
जात्या स गोपः किल कृष्णवर्णो ऽ
धनी न वीरो नहि शीलरूपः ।
यस्मिंस्त्वया प्रेमकृतं सुशीले
त्यजाशु निर्मोहिनमद्य कृष्णम् ॥ १८

नारद उवाच

इत्थं सवैरं परुषं वचस्त-
च्छ्रुत्वाथ राधा वृषभानुनन्दिनी ।
सुविस्मिता वाक्यपदे सरस्वतीं
परं स्मयन्तो निजगाद तां प्रति ॥ १९

राधोवाच

यत्प्राप्तये विधिहरप्रमुखास्तपन्ति
वह्नौ तपः परमया निजयोगरीत्या ।
दत्तः शुकः कपिल आसुरिरङ्गिरा यत्
पादारविन्दमकरन्दरजः स्पृशन्ति ॥ २०
तं कृष्णमादिपुरुषं परिपूर्णदेवं
लीलावतारमजमार्तिहरं जनानाम् ।
भूभूरिभारहरणाय सतां शुभाय
जातं विनिन्दसि कथं सखि दुर्विनीते ॥ २१
गाः पालयन्ति सततं रजसो गवाञ्च
गाश्च स्पृशन्ति च जपन्ति गवां सुनाम ।
प्रेक्षन्त्यहर्निशमलं सुमुखं गवाञ्च
जातिः परा न विदिता भुवि गोपजातेः ॥ २२

तत्कृष्णवर्णविलसत्सुकलां समीक्ष्य
तल्लग्नमग्नमनसा स्वसुखं विहाय ।
उन्मत्तवद्व्रजति धावति नीलकण्ठो
बिभ्रत्कपर्दविषभस्मकपालसर्पान् ॥ २३
स्वर्लोकसिद्धमुनियक्षमरुद्गणानां
पालः समस्तनरकिन्नरनागनाथाः ।
यत्पादपद्ममनिशं प्रणिपत्य भक्त्या
लब्धश्रियः किल बलिं प्रददुः स्म तस्मै ॥ २४
वत्साघकालियबकार्जुनधेनुकाना
माचक्रवातशकटासुरपूतनानाम् ।
एषां वधः किमुत तस्य यशो मुरारे-
र्यः कोटिशोऽण्डनिचयोद्भवनाशहेतुः ॥ २५
भक्तात् प्रियो न विदितः पुरुषोत्तमस्य
शम्भुर्विधिर्न च रमा न च रौहिणेयः ।
भक्ताननुव्रजति भक्तिनिबद्धचित्त-
श्चूडामणिः सकललोकजनस्य कृष्णः ॥ २६
गच्छन् निजं जनमनुप्रपुनाति लोका-
नावेदयन् हरिजने स्वरुचिं महात्मा ।
तस्मादतीव भजतां भगवान् मुकुन्दो
मुक्तिं ददाति न कदापि सुभक्तियोगम् ॥ २७

गोपदेवतोवाच

राधे त्वदीयधिषणा धिषणं हसन्ती
वाणीं श्रुतिं प्रकुशलेन विडम्बयन्ती ।
अत्रागमिष्यति यदाद्य हरिः परेशः
सत्यं तदा हि वचनं तव देवि मन्ये ॥ २८

राधोवाच

अत्रागमिष्यति यदाद्य हरिः परेशः
किं कारयामि भवतीं वद तर्हि सुभ्रूः।
चेदागमो नहि भवेद्वनमालिनः स्वं
सर्वं धनञ्च भवनञ्च ददामि तुभ्यम् ॥ २९

नारद उवाच

अथ राधा समुत्थाय नत्वा श्रीनन्दनन्दनम्।
उपविश्यासने दध्यौ ध्यानस्तिमितलोचना ॥ ३०
उत्कण्ठितां स्वेदयुक्तां बाष्पकण्ठीं प्रियां हरिः।
अश्रुपूर्णमुखीं वीक्ष्य बिभ्रत् स्वां पौरुषीं तनूम् ॥ ३१
पश्यन्तीनां सखीनाञ्च सहसा भक्तवत्सलः।
राधां प्राह प्रसन्नात्मा मेघगम्भीरया गिरा ॥ ३२

कृष्ण उवाच

रम्भोरु चन्द्रवदने व्रजसुन्दरीशे
राधे प्रिये नवलयौवनमानशीले।
उन्मील्य नेत्रमपि पश्य समागतं मां
तूर्णं त्वया माधुरया च गिरोपहूतम् ॥ ३३
आगच्छ कृष्ण इति वाक्यमतः श्रुतं मे
सद्यो विसृज्य निजगोकुलगोपवृन्दम्।
वंशीवटाच्च यमुनानिकटात् प्रधावं
स्त्वत्प्रीतयेऽथ ललनेऽत्र समागतोऽस्मि ॥ ३४
मय्यागते सति गता सखिरूपिणीका.
यद्यासुरी किमु नरी किल किन्नरी वा।
मायावती छलयितुं भवतीञ्च तस्माद्
विश्वास एव न विधेय उरङ्गपत्न्याम् ॥ ३५

नारद उवाच

अथ राधा हरिं दृष्ट्वा नत्वा तत्पादपङ्कजम् ।
मुदमाप परां राजन् सद्यः पूर्णमनोरथा ॥ ३६
एवं श्रीकृष्णचन्द्रस्य चरितान्यद्भुतानि च ।
यः शृणोति नरो भक्त्या स कृतार्थो भवेन्नृप ॥ ३७

इति श्रीगर्गसंहितायां वृन्दावनखण्डे नारदबहुलाश्व-
संवादे श्रीकृष्णचन्द्रदर्शन नाम
पञ्चदशोऽध्यायः ॥ १५

बहुलाश्व उवाच

राधायै दर्शनं दत्त्वा कृत्वा प्रेमपरीक्षणम् ।
अग्रे चकार कां लीलां भगवानात्मलीलया ॥ १

नारद उवाच

माधवो माधवे मासि माधवीभिः समाकुले ।
वृन्दावने समारेभे रासं रासेश्वरः स्वयम् ॥ २
वैशाखमासपञ्चम्यां जाते चन्द्रोदये शुभे ।
यमुनोपवने रेमे रासेश्वर्या मनोहरः ॥ ३
पुरा मैथिल गोलोकाद्भूमिर्या कौ समागता ।
सर्वा बभूव सौवर्णपद्मरागमयी त्वरम् ॥ ४
वृन्दावनं दिव्यवपुर्दधत् कामदुघैर्द्रुमैः ।
माधवीभिर्लताभिश्च प्राक्षिपन् नन्दनं वनम् ॥ ५
रत्नसोपानसम्पन्ना स्फुरत्सौवर्णतोलिका ।
रराज यमुना राजन् हंसपद्मादिसङ्कुला ॥ ६
रत्नधातुमयः श्रीमद्रत्नशृङ्गस्फुरद्द्युतिः ।
सुपक्षिगणसंयुक्तो लतापुष्पमनोहरः ॥ ७
निर्झरैः सुन्दरीभिश्च दरीभिर्भ्रमरीवृतः ।
रेजे गोवर्द्धनो नाम गिरिराजः करीन्द्रवत् ॥ ८
सर्वे निकुञ्जाः परितो रेजुर्दिव्यवपुर्धराः ।
सभामण्डपवीथीभिः प्राङ्गणस्तम्भपङ्क्तिभिः ॥९
पतत्पताकैर्दिव्याभैः सौवर्णैः कलशैर्नृप ।
श्वेतारुणैः पुष्पदलैः पुष्पमन्दिरवर्त्मभिः ॥ १०
वसन्तमाधुर्यधराः कूजत्कोकिलसारसाः ।
पारावतैर्मयूरैश्च यत्र तत्र निकूजिताः ॥ ११

राधाकृष्णकथां पुण्यां गायमानैर्मधुव्रतैः ।
पतद्भिर्मधुमत्तैश्च कुञ्जाः सर्वे विराजिताः ॥ १२
पुलिने शीतलो वायुर्मन्दगामी वहत्यलम् ।
सहस्रदलपद्मानां रजो विक्षेपयन् मुहुः ॥ १३
काश्चिद्गोलोकवासिन्यः काश्चिच्छय्योपकारिकाः ।
शृङ्गारप्रकराः काश्चित् काश्चिद्वै द्वारपालिकाः ॥ १४
पार्षदाख्याः सखिजनाश्छत्रचामरपाणयः ।
पुष्पाभरणकारिण्यः श्रीवृन्दावनपालिकाः ॥ १५
गोवर्द्धननिवासिन्यः काश्चित् कुञ्जविधायिकाः ।
तन्निकुञ्जनिवासिन्यो नर्तक्यो वाद्यतत्पराः ॥ १६
सर्वा वै चन्द्रवदनाः किशोरवयसो नृप ।
आसां द्वादशयूथाश्च जग्मुः कृष्णस्य सन्निधौ ॥ १७
तथैव यमुना साक्षाद्यूथीभूत्वा समाययौ ।
नीलाम्बरा रत्नभूषा श्यामा कमललोचना ॥ १८
तथैव जाह्नवी गङ्गा यूथीभूत्वा समाययौ ।
श्वेताम्बरा गौरवर्णा मुक्ताभरणभूषणा ॥ १९
तथाययौ रमा साक्षाद्यूथीभूत्वारुणाम्बरा ।
चन्द्रवर्णा मन्दहासा पद्मरागविभूषिता ॥ २०
तथाययौ कृष्णपत्नी नाम्ना या मधुमाधवी ।
पद्मवर्णा पुष्पभूषा यूथीभूत्वा शुभाम्बरा ॥ २१
तथैव विरजा साक्षाद्यूथीभूत्वा समाययौ ।
हरिद्वस्त्रा गौरवर्णा रत्नालङ्कारभूषिता ॥ २२
ललिताया विशाखाया मायायूथः समाययौ ।
एवं त्वष्टसखीनाञ्च सखीनां किल षोडश ॥ २३
द्वात्रिंशच्च सखीनाञ्च यूथाः सर्वे समाययुः ।
रराज भगवान् राजन् स्त्रीगणै रासमण्डले ॥ २४

वृन्दावने यथाकाशे चन्द्रस्तारागणैर्यथा ।
पीतवासाः परिकरो नटवेषो मनोहरः ।। २५
वेत्रभृद्वादयन् वंशीं गोपीनां प्रीतिमावहन् ।
मयूरपक्षभृन्मौलिस्रग्वी कुण्डलमण्डितः ।। २६
राधया शुशुभे रासे यथा रत्या रतीश्वरः ।
एवं गायन् हरिः साक्षात् सुन्दरीगणसंवृतः ॥ २७
यमुनापुलिनं पुण्यमाययौ राधयायुतः ।
गृहीत्वा हस्तपद्मेन पद्माभं स्वप्रियाकरम् ॥ २८
निषसाद हरिः कृष्णातीरे नीरमनोहरे ।
पुनर्जल्पन् सुमधुरं पश्यन् वृन्दावनश्रियम् ।। २९
चलन् हसन् राधिकया कुञ्जं कुञ्जं चचार ह ।
कुञ्जे निलीयमानं तं त्वरं त्यक्त्वा प्रियाकरम् ।। ३०
विलोक्य शाखान्तरितं राधा जग्राह माधवम् ।
राधा दुद्राव तद्धस्ताज्झङ्कारं कुर्वती पदे ॥ ३१
निलीयमाना कुञ्जेषु पश्यतो माधवस्य च ।
धावन् हरिर्गतो यावत्तावद्राधा ततो गता ॥ ३२
वृक्षपार्श्वे हस्तमात्रादितश्चेतश्च धावती ।
तमालो हेमवल्ल्येव घनश्चञ्चलया यथा ॥ ३३
हेमखन्येव नीलाद्री रेजे राधिकया हरिः ।
राधया विश्वमोहिन्या बभौ मदनमोहनः ॥ ३४
वृन्दावने रासरङ्गे रत्येव मदनो यथा ।
धृत्वा रूपाणि तावन्ति यावन्त्यो व्रजयोषितः ॥ ३५
ननर्त रासरङ्गेऽसौ रङ्गभूम्यां नटो यथा ।
गायन्त्यश्चापि नृत्यन्त्यः सर्वा गोप्यो मनोहराः ।। ३६
विरेजुः कृष्णचन्द्रैश्च यथा शक्रैः सुराङ्गनाः ।
वारां विहारं कृष्णायां चकार मधुसूदनः ।। ३७

सर्वैर्गोपीगणैः सार्द्धं यक्षीभिर्यक्षराडिव ।
कबरीकेशपाशाभ्यां प्रसूनैः प्रच्युतैः शुभैः ।
चित्रवर्णैर्बभौ कृष्णा यथोष्णिङ्मुद्रिता तथा ॥ ३८

मृदङ्गतालैर्मधुरध्वनिस्वनै-
र्जगुर्यशस्ता मधुसूदनस्य हि ।
प्रापुर्मुदं पूर्णमनोरथाश्च
प्रसूनहारा हरिणा गतव्यथाः ॥ ३९

श्रीहस्तसताडितवारिबिन्दुभिः
स्फारासमस्फूर्जितशीकरद्युभिः
वृन्दावनेशो व्रजसुन्दरीभी-
रेजे गजीभिर्गजराडिव स्वयम् ॥ ४०

विद्याधर्यो देवगन्धर्वपत्न्यः
पश्यन्त्यस्ता रासरङ्ग दिविस्थाः ।
देवैः सार्द्धं चक्रिरे पुष्पवर्षं
मोहं प्राप्ताः प्रश्लथद्वस्त्रनीव्यः ॥ ४१

इतिश्रीगर्गसंहितायां वृन्दावनखण्डे-
रासक्रीडायां वृन्दावनविहारो नाम
षोडशोऽध्यायः ॥ १६

नारद उवाच

अथ कृष्णो हरिर्वारिलीलां कृत्वा मनोहरः ।
सर्वैर्गोपीगणैः सार्द्धं गिरिं गोवर्द्धनं ययौ ॥ १
गोवर्द्धने कन्दरायां रत्नभूम्यां हरिः स्वयम् ।
रासञ्च राधया सार्द्धं रासेश्वर्या चकार ह ॥ २
तत्र सिंहासने दिव्ये तस्थतुः पुष्पसङ्कुले ।
तडिद्घनाविव गिरौ राधाकृष्णौ विरेजतुः ॥ ३
स्वामिन्यास्तत्र शृङ्गारं चक्रुः सख्यो मुदान्विताः ।
श्रीखण्डकुङ्कुमाद्यैश्च यावकागुरुकज्जलैः ॥ ४
मकरन्दैः कीर्तिसुतां समभ्यर्च्य विधानतः ।
ददौ श्रीयमुना साक्षाद्राधायै नूपुराण्यलम् ॥ ५
मञ्जीरभूषणं दिव्यं श्रीगङ्गा जह्नुनन्दिनी ।
श्रीरमा किङ्किणीजालं हारं श्रीमधुमाधवी ॥ ६
चन्द्रहारञ्च विरजा कोटिचन्द्रामलं शुभम् ।
ललिता कञ्चुकमणिं विशाखा कण्ठभूषणम् ॥ ७
अङ्गुलीयकरत्नानि ददौ चन्द्रानना तदा ।
एकादशी राधिकायै रत्नाढ्यं कङ्कणद्वयम् ॥ ८
भुजकङ्कणरत्नानि शतचन्द्रानना ददौ ।
तस्यै मधुमती साक्षात् स्फुरद्रत्नाङ्गदद्वयम् ॥ ९
ताटङ्कयुगलं बन्दीकुण्डले सुखदायिनी ।
आनन्दी या सखी मुख्या राधायै भालतोरणम् ॥ १०
पद्मा सद्भालतिलकं बिन्दुं चन्द्रकला ददौ ।
नासामौक्तिकमालोलं ददौ पद्मावती सती ॥ ११
बालार्कद्युतिसंयुक्तं भालपुष्पं मनोहरम् ।
श्रीराधायै ददौ राजन् चन्द्रकान्ता सखी शुभा ॥ १२

शिरोमणिं सुन्दरी च रत्नवेणीं प्रहर्षिणी ।
भूषणे चन्द्रसूर्याख्ये विद्युत्कोटिसमप्रभे ॥ १३
राधिकायै ददौ देवी वृन्दा वृन्दावनेश्वरी ।
एवं शृङ्गारसंस्फूर्जद्रूपया राधया हरिः ॥ १४
गिरिराजे बभौ राजन् यज्ञो दक्षिणया यथा ।
यत्र वै राधया रासे शृङ्गारोऽकारि मैथिल ॥ १५
तत्र गोवर्द्धने जातं स्थलं शृङ्गारमण्डलम् ।
अथ कृष्णः स्वप्रियाभिर्ययौ चन्द्रसरोवरम् ॥ १६
चकार तज्जले क्रीडां गजीभिर्गजराडिव ।
तत्र चन्द्रः समागत्य चन्द्रकान्तौ मणी शुभौ ॥ १७
सहस्रदलपद्मे द्वे स्वामिन्यै हरये ददौ ।
अथ कृष्णो हरिः साक्षात् पश्यन् वृन्दावनश्रियम् ॥ १८
प्रययौ बाहुलवनं लताजालसमन्वितम् ।
तत्र स्वेदसमायुक्तं वीक्ष्य सर्वं सखीजनम् ॥ १९
रागन्तु मेघमल्लारं जगौ वंशीधरः स्वयम् ।
सद्यस्तत्रैव ववृषुर्मेघा अम्बुकणांस्तदा ॥ २०
तदैव शीतला वाता ववुर्गन्धिमनोहराः ।
तैश्च गोपीगणाः सर्वे सुखं प्राप्ता विदेहराट् ॥ २१
जगुर्यशः श्रीमुरारेरुच्चैस्तत्र समन्विताः ।
तस्मात्तालवनं प्रागाच्छ्रीकृष्णो राधिकापतिः ॥ २२
रासमण्डलमारेभे गायन् व्रजवधूवृतः ।
तत्र गोपीगणाः सर्वे स्वेदयुक्तास्तृषातुराः ।
ऊचू रासेश्वरं रासे कृताञ्जलिपुटाः शनैः ॥ २३

गोप्य ऊचुः

दूरे वै यमुना देव तृषा जाता परं हि नः ।
कर्तव्यं भवतात्रैव सरो दिव्यं मनोहरम् ॥ २४

वारां विहारं पानञ्च करिष्यामो हरे वयम् ।
जगत्कर्ता पालकस्त्वं संहारस्यापि नायकः ॥ २५

नारद उवाच

तच्छ्रुत्वा वेत्रदण्डेन कृष्णो भूमिं तताड ह ।
तदैव निर्गतः स्रोतो वेत्रगङ्गेति कथ्यते ॥ २६
यज्जलस्पर्शमात्रेण ब्रह्महत्या प्रमुच्यते ।
तत्र स्नात्वा नरः कोऽपि गोलोकं याति मैथिल ॥ २७
गोपीभी राधया सार्द्धं श्रीकृष्णो भगवान् हरिः ।
वारां विहारं कृतवान् देवो मदनमोहनः ॥ २८
ततः कुमुद्वनं प्राप्तो लतावृन्दमनोहरम् ।
भ्रमरध्वनिसंयुक्तं चक्रे रासं सखीजनैः ॥ २९
गोपीभिर्निर्मिते कुञ्जे सूपविष्टो हरिर्यदा ।
राधा तत्रैव शृङ्गारं श्रीकृष्णस्य चकार ह ॥ ३०
पुष्पैर्नानाविधैर्दिव्यैः पश्यन्तीनां व्रजौकसाम् ।
चम्पकोद्यत्परिकरः स्वर्णयूथीभुजाङ्गदः ॥ ३१
सहस्रदलराजीवकर्णिकाविलसच्छ्रुतिः ।
मोदनीमालतीकुन्दकेतकीहारभृद्धरिः ॥ ३२
कदम्बपुष्पविलसत्किरीटकटकोज्ज्वलः ।
मन्दारपुष्पोत्तरीयः पद्मयष्टिधरः प्रभुः ॥ ३३
तुलसीमञ्जरीयुक्तो वनमालाविभूषितः ।
एवं शृङ्गारतां प्राप्तः श्रीकृष्णः प्रियया स्वया ॥ ३४
बभौ कुमुद्वने राजन् वसन्तो हर्षितो यथा ।
मृदङ्गवीणावंशीभिर्मुरुयष्टिसुकांस्यकैः ॥ ३५
तालशङ्खैस्तलैर्युक्ता जगुर्गोप्यो मनोहरम् ।
भैरवं मेघमल्लारं दीपकं मालकोशकम् ॥ ३६

श्रीरागश्चापि हिन्दोलं रागमेवं पृथक् पृथक् ।
अष्टतालैस्त्रिभिर्ग्रामैः स्वरैः सप्तभिरग्रतः ॥ ३७
नृत्यैर्नानाविधै रम्यैर्हावभावसमन्वितैः ।
तोषयन्त्यो हरिं राधां कटाक्षैर्व्रजगोपिकाः ॥ ३८
गायन् मधुवनं प्रागात् सुन्दरीगणसंवृतः ।
रासेश्वर्या रासलीलां चक्रे रासेश्वरः स्वयम् ॥ ३६
वैशाखचन्द्रकौमुद्यां मालतीगन्धवायुना ।
स्फुरत्सौगन्धिकह्लारपतद्रेणूत्करेण वै ॥ ४०
विकसन्माधवीवृन्दैः शोभिते निर्जने वने ।
रेमे गोपीगणैः कृष्णो नन्दने वृत्रहा यथा ॥ ४१

इति श्रीगर्गसंहितायां वृन्दावनखण्डे रासक्रीडायां
गोवर्द्धनवहुलतालकुमुद्वनमधुवनविहारो नाम
सप्तदशोऽध्यायः ॥ १७

नारद उवाच

इत्थं कुन्दवने रम्ये मालतीनां वने शुभे ।
आम्राणां नागरङ्गाणां निम्बूनां सघने वने ॥ १
दाडिमीनाञ्च द्राक्षाणां बदामानां वने नृप ।
कदम्बानां श्रीफलानां कुटजानां तथैव च ॥ २
बटानां पनसानाञ्च पिप्पलानां वने शुभे ।
तुलसीकोविदाराणां केतकीकदलीवने ॥ ३
करिल्लकुञ्जबकुलमन्दाराणां वने हरिः ।
चरन् कामवनं प्रागाद्राजन् व्रजवधूवृतः ॥ ४
तत्रैव पर्वते कृष्णो ननाद मुरलीकलम् ।
मूर्च्छिता विह्वला जातास्तन्नादेन व्रजाङ्गनाः ॥ ५
मनोजबाणभिन्नाङ्गाः श्लथन्नीव्यः सुरैः सह ।
कश्मलं प्रययू राजन् विमानेष्वमराङ्गनाः ॥ ६
चतुर्विधा जीवसङ्घाः स्थावरैर्मोहमास्थिताः ।
नद्यो नदाः स्थिरीभूताः पर्वता द्रवतां गताः ॥ ७
तत्पादचिह्नसयुक्ता गिरिः कामवनेऽभवत् ।
तस्य दर्शनमात्रेण नरो याति कृतार्थताम् ॥ ८
अथ गोपीगणैः साक श्रीकृष्णो राधिकापतिः ।
नन्दीश्वरबृहत्सानुतटे रासं चकार ह ॥ ९
तत्र गोप्योऽतिमानिन्यो बभूवुर्मैथिलेश्वर ।
तास्त्यक्त्वा राधया सार्द्धं तत्रैवान्तर्दधे हरिः ॥ १०

गोप्यश्च सर्वा विरहातुरा भृशं
कृष्णं विना मैथिल निर्जने वने ।
ता बभ्रमुश्चाश्रुकलाकुलाक्ष्यो
यथा हरिण्यश्चकिता इतस्ततः ॥ ११

कृष्णं ह्यपश्यन्त्य इति व्यथां गता
यथा करिण्यः करिणं वने वने ।
यथा कुरर्यः कुररं ब्रजाङ्गनाः
सर्वा रुदन्त्यो विरहातुरा भृशम् ॥ १२
उन्मत्तवद् वृक्षलताकदम्बकं
सर्वा मिलित्वा च पृथक् पृथग् वने
पप्रच्छुरारान्नृप नन्दनन्दनं
कुत्र स्थितं तं वदताशु भूरुहाः ॥ १३
श्रीकृष्णकृष्णेति गिरा वदन्त्यः
श्रीकृष्णपादाम्बुजलग्नमानसाः ।
श्रीकृष्णरूपास्तु बभूवुरङ्गना-
श्चित्रं न पेशस्कृतमेत्य कीटवत् ॥ १४
श्रीपादुकाधःस्थलगापि गोप्यः
श्रीपादुकाग्रं शरणं प्रपन्नाः ॥ १५
ततस्तु तत्प्रसादेन तत्पादार्चनदर्शनात् ।
ददृशुर्गां तदा गोप्यो भगवत्पादचिह्निताम् ॥ १६

बहुलाश्व उवाच

राधेशो राधया सार्धं हित्वा गोपीर्ययौ क भोः ।
तद्दर्शनं कथं जातं गोपीनां वद मे प्रभो ॥ १७

नारद उवाच

श्रीकृष्णो राधया सार्द्धं सङ्केतवटमाविशत् ।
प्रियायाः कबरीपुष्परचनां स चकार ह ॥ १८
श्रीकृष्णकुन्तले नीले वक्रत्वं राधिकाकरोत् ।
चित्रपत्रावलीं कृष्णपूर्णेन्दुमुखमण्डले ॥ १९
एवं कृष्णो भद्रवनं खदिराणां वनं महत् ।
बिल्वानाञ्च वन पश्यन् कोकिलाख्यं वनं गतः ॥ २०

गोप्यः कृष्णं विचिन्वन्त्यो ददृशुस्तत्पदानि च ।
यवचक्रध्वजच्छत्रैः स्वस्तिकाङ्कुशजम्बुभिः ॥ २१
अष्टकोणेन वज्रेण पद्मेनाभियुतानि च ।
तिलशङ्खघटैर्मत्स्यत्रिकोणेषूर्ध्वधारकैः ॥ २२
धनुर्गोखुरचन्द्रार्द्धशोभितानि महात्मनः ।
तत्पदान्यनुसारेण व्रजन्त्यो गोपिकास्ततः ॥ २३
तद्रजः सततं नीत्वा धृत्वा मूर्ध्नि व्रजाङ्गनाः ।
पदान्यन्यानि ददृशुरन्यचिह्नान्वितानि च ॥ २४
केतुपद्मातपत्रैश्च यवेनाथोर्ध्वरेखया ।
चक्रचन्द्रार्द्धाङ्कुशैश्च बिन्दुभिः शोभितानि च ॥ २५
लवङ्गलतिकाभिश्च विचित्राणि विदेहराट् ।
गदापाठीनशङ्खैश्च गिरिराजेन शक्तिभिः ॥ २६
सिंहासनरथाभ्याञ्च बिन्दुद्वययुतानि च ।
वीक्ष्य प्राहु राधिकया गतोऽसौ नन्दनन्दनः ॥ २७
पश्यन्त्यस्तत्पादचिह्नं कोकिलाख्यं वनं गताः ।
गोपीकोलाहलं श्रुत्वा राधिकां प्राह माधवः ॥ २८
कोटिचन्द्रप्रतीकाशे राधे सर्प त्वरं प्रिये ।
आगता गोपिकाः सर्वास्त्वांनेष्यन्ति हि सर्वतः ॥ २९
तदा मानवती राधा भूत्वा प्राह रमापतिम् ।
रूपयौवनकौशल्यशीलगर्वसमन्विता ॥ ३०

राधोवाच

चलितुं न समर्थाहं मन्दिरान्नविनिर्गता ।
सुकुमारी स्वेदयुक्ता कथं मां नयसि प्रिय ॥ ३१

नारद उवाच

इति वाक्यं ततः श्रुत्वा श्रीकृष्णो रसिकेश्वरः ।
पीताम्बरेण दिव्येन वायुं तस्यै चकार ह ॥ ३२

हस्तं गृहीत्वा तामाह गच्छ राधे यथासुखम् ।
श्रीकृष्णेनापि तदपि प्रोक्ता नययुतेन वै ॥ ३३
पृष्ठं दत्वाथ हरये तूष्णींभूता स्थिता पुनः ।
प्रियां मानवतीं राधां प्राह कृष्णः सतां प्रियः ॥ ३४

भगवानुवाच

विहाय गोपीरिह कामयाना
भजाम्यहं मानिनि चेतसा त्वाम् ।
यत्ते प्रियं तत्प्रकरोमि राधे
मे स्कन्धमारुह्य सुख व्रजाशु ॥ ३५

नारद उवाच

एवं प्रियां प्रियतमः स्कन्धयानेप्सितां नृप ।
विहायान्तर्दधे कृष्णः स्वच्छन्दगतिरीश्वरः ॥ ३६
गतमाना कीर्तिसुता भगवद्विरहातुरा ।
उच्चै रुरोद राजेन्द्र कोकिलाख्ये वने परे ॥ ३७
तदैव यूथाः सम्प्राप्ता गोपीनां मैथिलेश्वर ।
तद्रोदनं दुःखतरं श्रुत्वा जग्मुस्त्रपातुराः ॥ ३८
काश्चित्तां मकरन्दैश्च स्नापयाञ्चक्रुरीश्वरीम् ।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसीकरैः ॥ ३९
वायुं चक्रुस्तदङ्गेषु व्यजनान्दोलचामरैः ।
आश्वास्य वाग्भिः परमं नानानुनयकोविदाः ॥ ४०
तन्मुखान्मानतो यानं श्रुत्वा कृष्णस्य गोपिकाः ।
मानवत्यो मैथिलेन्द्र विस्मयं परमं ययुः ॥४१

इति श्रीगर्गसंहितायां वृन्दावनखण्डे रासक्रीडायां
कामवनकोकिलवनविहारे मानलीलावर्णनं नाम
अष्टादशोऽध्यायः ॥ १८

नारद उवाच

अथ कृष्णगुणान् रम्यान् समेताः सर्वयोषितः ।
जगुस्तालस्वरै रम्यैः कृष्णागमनहेतवे ॥ १

गोप्य ऊचुः

लोकाभिराम जनभूषण विश्वदीप
कन्दर्पमोहन जगद्वृजिनार्तिहारिन् ।
आनन्दकन्द यदुनन्दन नन्दसूनो
स्वच्छन्दपद्ममकरन्द नमो नमस्ते ॥ २
गोविप्रसाधुविजयध्वज देववन्द्य
कंसादिदैत्यवधहेतुकृतावतार ।
श्रीनन्दराजकुलपद्मदिनेश देव
दत्तादिमुक्तजनदर्पण ते जयोऽस्तु ॥ ३
गोपालसिन्धुपरमौक्तिकरूपधारिन्
गोपालवंशगिरिनीलमणे परात्मन् ।
गोपालमण्डलसरोवरकञ्जमूर्ते
गोपालचन्दनवने कलहंसमुख्य ॥ ४
श्रीराधिकावदनपङ्कजषट्पदस्त्वं
श्रीराधिकावदनचन्द्रचकोररूपः ।
श्रीराधिकाहृदयसुन्दरचन्द्रहारः
श्रीराधिकामधुलताकुसुमाकरोऽसि ॥ ५
यो रासरङ्गनिजवैभवभूरिलीलो
यो गोपिकानयनजीवनमूलरूपः ।
मानं चकार रहसा किल मानवत्यां
सोऽयं हरिर्भवतु नो नयनाग्रगामी ॥ ६

योो गोपिकासकलयूथमलङ्चकार
वृन्दावनञ्च निजपादरजोभिरद्रिम् ।
यः सर्वलोकविभवाय बभूव भूमौ
तं भूरिलीलमुरगेन्द्रभुजं भजामः ॥ ७
चन्द्रं प्रतप्तकिरणं ज्वलनं प्रसादं
सर्वं वनान्तमसिपत्रवनं परेश ।
बाणं प्रभञ्जनमतीव सुमन्दयानं
मन्यामहे किल भवन्तमृते व्यथार्ताः ॥ ८
सौदासराजमहिषीविरहादतीव
जातं सहस्रगुणितं नलपट्टराज्ञ्याः ।
तस्मात्तु कोटिगुणितं जनकात्मजाया-
स्तस्मादनन्तमतिदुःखमलं हरे नः ॥ ९
श्रीउद्धवः सकलभक्तशिरोमणीश-
स्त्वत्पादपद्मवरमुख्यधिकारकारी ।
तस्माद् वयञ्च चरणौ शरणं गताः स्मः
श्रीमन् कृपां कुरु शरण्यपदे शरण्ये ॥ १०

नारद उवाच

इत्थं राजन् रुदन्तीनां गोपीनां कमलेक्षणः ।
आविर्बभूव सहसा स्वयमर्थमिवात्मनः ॥ ११
स्फुरत्किरीटकेयूरकुण्डलाङ्गदभूषणम् ।
स्निग्धामलसुगन्धाढ्यं नीलकुञ्चितकुन्तलम् ॥ १२
आगतं वीक्ष्य युगपत् समुत्तस्थुर्व्रजाङ्गनाः ।
तन्मात्रानि च यं दृष्ट्वा यथा ज्ञानेन्द्रियाणि वै ॥ १३
हरिर्ननर्त तन्मध्ये वंशीवादनतत्परः ।
राधया सहितो राजन् यथा रत्या रतीश्वरः ॥ १४

यावत्यो गोपिकाः सर्वास्तावद्रूपधरो हरिः ।
गच्छंस्ताभिर्व्रजे रेमे स्वावस्थाभिर्मनो यथा ॥ १५
वनोद्देशे स्थितं कृष्णं गतदुःखा व्रजाङ्गनाः ।
कृताञ्जलिपुटा ऊचुर्गिरा गद्गदया हरिम् ॥ १६

गोप्य ऊचुः

क्व गतस्त्वं वद हरे त्यक्त्वा गोपीगणं महत् ।
सर्वं जगत्तृणीकृत्य त्वत्पादे प्राप्तमानसम् ॥ १७

भगवानुवाच

हे गोप्यः पुष्करद्वीपे हंसो नाम महामुनिः ।
समुद्रे दधिमण्डोदे तताप्रान्तर्गतस्तपः ॥ १८
चकाराहैतुकीं भक्तिं मम ध्यानपरायणः ।
व्यतीतं तस्य तपतो गोप्यो मन्वन्तरद्वयम् ॥ १९
तमद्यैवाग्रसन्मत्स्यो योजनार्द्धवपुर्धरः ।
तन्निजगार पौण्ड्रस्तु मत्स्यरूपधरोऽसुरः ॥ २०
एवं सम्प्राप्तकष्टस्य हंसस्यापि मुनेरहम् ।
गत्वाथ शीघ्रेण तयोः शिरश्छित्वारिणा (!) मुनिम् ॥ २१
मोचयित्वाथ गतवाञ्छ्वेतद्वीपं व्रजाङ्गनाः ।
क्षीराब्धौ शेषपर्यङ्के शयनन्तु मया कृतम् ॥ २१
दुःखिता भवतीर्ज्ञात्वा निद्रां त्यक्त्वा ततः प्रियाः ।
सहसा भक्तवश्योऽहं पुनरागतवानिह ॥ २३

जानन्ति सन्तः समदर्शिनो ये
दान्ता महान्तःकिल नैरपेक्ष्याः ।
ते नैरपेक्ष्यं परमं सुखं मे
ज्ञानेन्द्रियादीनि यथा रसादीन् ॥ २४

गोप्य ऊचुः

क्षीराब्धौ शेषपर्यङ्के यद्रूपञ्च त्वया धृतम् ।
तद्रूपदर्शनं देहि यदि प्रीतोऽसि माधव ॥ २५

नारद उवाच

तथास्तु चोक्त्वा भगवान् गोपीव्यूहस्य पश्यतः ।
दधाराष्टभुजं रूपं राधाश्रीरूपमेव च ॥ २६
तत्र क्षीरसमुद्रोऽभूल्लालकल्लालमण्डितः ।
दिव्यानि रत्नसौधानि बभूवुर्मङ्गलानि च ॥ २७
तत्र शेषो बिसश्वेतः कुण्डलीभूत संस्थितः ।
बालार्कमौलिसाहस्रफणाछत्रविराजितः ॥ २८
तस्मिन् वै शेषपर्यङ्के सुखं सुष्वाप माधवः ।
तस्य श्रीरूपिणी राधा पादसेवां चकार ह ॥ २९
तद्रूपं सुन्दरं दृष्ट्वा कोटिमार्तण्डसन्निभम् ।
नत्वा गोपीगणाः सर्वे विस्मयं परमं गताः ॥ ३०
गोपीभ्यो दर्शनं दत्तं यत्र कृष्णेन मैथिल ।
तत्र क्षेत्रं महापुण्यं जातं पापप्रणाशनम् ॥ ३१
अथ गोपीगणैः सार्धं यमुनामेत्य माधवः ।
कालिन्दीजलवेगेषु जलकेलिं चकार ह ॥ ३२
राधाकराल्लक्षदल पद्मं नीत्वाम्बरं तथा ।
धावन् जलेषु गतवान् प्रहसन् माधवः स्वयम् ॥ ३३
राधा हरेः पीतपटं वंशीं वेत्रं स्फुरत्प्रभम् ।
गृहीत्वा प्रहसन्ती सा गच्छती यमुनाजले ॥ ३४
वंशीं देहीति वदतः श्रीकृष्णस्य महात्मनः ।
राधा जगाद कमलं वासो देहीति माधव ॥ ३५
कृष्णो ददौ राधिकायै पद्ममम्बरमेव च ।
राधा ददौ पीतपटं वेत्रं वंशीं महात्मने ॥ ३६

अथ कृष्णः कलं गायन् मालामाजानुलम्बिताम् ।
वैजयन्तीं दधानः श्रीभाण्डीरञ्च जगाम ह ॥ ३७
प्रियायास्तत्र शृङ्गारं चकार कुशलेश्वरः ।
पत्रावलीयावकाद्यः पुष्पैः कज्जलकुङ्कुमैः ॥ ३८
चन्दनागुरुकस्तूरीकेसराद्यैर्हरेर्मुखे ।
पत्रं चकार शृङ्गारे मनोज्ञं कीर्तिनन्दिनी ॥ ३६

इति श्रीगर्गसंहितायां वृन्दावनखण्डे नारदबहुलाश्वसंवादे
रासक्रीडायां भाण्डीरवनविहारो नाम
एकोनविंशोऽध्यायः ॥ १६

नारद उवाच

अथ कृष्णो गोपिकाभिर्लोहजङ्घवनं ययौ ।
वसन्तमाधवीभिश्च लताभिः सङ्कुलं नृप ॥ १
तत्पुष्पदामनिचयैः स्फुरत्सौगन्धिशालिभिः ।
सर्वासां हरिणा तत्र कबर्य्यो गुम्फितास्ततः ॥ २
भ्रमरध्वनिसंयुक्ते सुगन्धानिलवासिते ।
कालिन्दीनिकटे कृष्णो विचचार प्रियान्वितः ॥ ३
करीरैः पीलुभिः श्यामैस्तमालैः सङ्कुलं द्रुमैः ।
महावनं पुण्यतमं ययौ रासेश्वरो हरिः ॥ ४
तत्र रासं समारेभे रासेश्वर्या समन्वितः ।
गीयमानश्च गोपीभिरप्सरोभिः स्वराडिव ॥ ५
तत्र चित्रमभूद्राजन् शृणु त्वं तन्मुखान्मम ।
शङ्खचूडो नाम यक्षो धनदानुचरो बली ॥ ६
भूतले तत्समो नास्ति गदायुद्धविशारदः ।
मन्मुखादौग्रसेनेश्च बलं श्रुत्वा महोद्भटम् ॥ ७
लक्षभारमयीं गुर्वीं गदामादाय यक्षराट् ।
स्वसकाशान्मधुपुरीमाययौ चण्डविक्रमः ॥ ८
सभायामास्थितं कंसं नत्वा प्राह मदोद्धतः ।
गदायुद्धं देहि मह्यं त्रैलोक्यविजयी भवान् ॥ ९
अहं दासो भवेयं ते भवांश्च विजयी यदि ।
अहं जयी चेद्भवन्तं दास शीघ्रं करोम्यहम् ॥ १०
तथास्तु चोक्त्वा कंसस्तु गृहीत्वा महती गदाम् ।
शङ्खचूडेन युयुधे रङ्गभूमौ विदेहराट् ॥ ११
तयोश्च गदया युद्धं घोररूपं बभूव ह ।
ताडनाच्चट्चटाशब्दं कालमेघतडिद्ध्वनि ॥ १२

शुशुभाते रङ्गमध्ये मल्लौ नाट्ये नटाविव ।
इभेन्द्राविव दीर्घाङ्गौ मृगेन्द्राविव चोद्भटौ ॥ १३
द्वयोश्च युद्ध्यतो राजन् परस्परजिगीषया ।
विस्फुलिङ्गान् क्षरन्त्यौ द्वे गदे चूर्णीबभूवतुः ॥ १४
कंसः प्रकुपितं यक्षं मुष्टिनाभिजघान ह ।
शङ्खचूडोऽपि तं कंसं मुष्टिना संतताड च ॥ १५
मुष्टामुष्टिस्तयोरासीद्दिनानां सप्तविंशतिः ।
द्वयोरक्षीणबलयोर्विस्मयं गतयोस्ततः । १६
शङ्खचूडं सङ्गृहीत्वा कंसो दैत्याधिपो बली ।
बलाच्चिक्षेप सहसा व्योम्नि तं शतयोजनम् ॥ १७
शङ्खचूडः प्रपतितः किञ्चिद्व्याकुलमानसः ।
कंसं गृहीत्वा नभसि चिक्षेपायुतयोजनम् ॥१८
आकाशात् पतितः कंसः किञ्चिद्व्याकुलमानसः ।
यक्षं गृहीत्वा सहसा पातयामास भूतले ॥१९
शङ्खचूडस्तं गृहीत्वा पोथयामास भूतले ।
एवं युद्धे सम्प्रवृत्ते चकम्पे भूमिमण्डलम् ॥२०
मुनीन्द्रः सर्ववित् साक्षाद् गर्गाचार्यः समागतः ।
रङ्गेषु वन्दितस्ताभ्यां कंसं प्राहोर्ज्जया गिरा ॥२१

गर्ग उवाच

युद्धं मा कुरु राजेन्द्र विफलोऽयं रणोऽत्र वै ।
त्वत्समानो ह्ययं वीरः शङ्खचूडो महाबलः ॥२२
तव मुष्टिप्रहारेण भृशमैरावतो गजः ।
जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥२३
अन्येऽपि बलिनो दैत्या मुष्टिना ते मृतिं गताः ।
शङ्खचूडो न पतति सन्देहो नास्ति तच्छृणु ॥२४

परिपूर्णतमो यो वै सोऽपि त्वां घातयिष्यति ।
तथैनं शङ्खचूडाख्यं शिवस्यापि वरोर्जितम् ॥२५
तस्मात् प्रेम प्रकर्तव्यं शङ्खचूडे यदूत्तम ।
यक्षराट् च त्वया कंसे कर्तव्यं प्रेम निश्चयम् ॥२६

नारद उवाच

गर्गेणोक्तौ तदा तौ द्वौ मिलित्वाथ परस्परम् ।
परमां चक्रतुः प्रीतिं शङ्खचूडयदूद्वहौ ॥२७
अथ कंसमनुज्ञाप्य गृहं गन्तुं समुद्यतः ।
गच्छन् मार्गेऽशृणोद्रात्रौ रासगानं मनोहरम् ॥२८
तालशब्दानुसारेण सम्प्राप्ते रासमण्डले ।
रासेश्वर्या समं रासेऽपश्यद्रासेश्वरं हरिम् ॥२९

श्रीराधयालङ्कृतवामबाहुं
स्वच्छन्दवक्रीकृतदक्षिणाङ्घ्रिम् ।
वंशीधरं सुन्दरमन्दहासं
भ्रूमण्डलैर्मोहितकामराशिम् ॥३०
व्रजाङ्गनायूथपतिं व्रजेश्वरं
सुसेवितं चामरछत्रकोटिभिः ।
विज्ञाय कृष्णं ह्यतिकोमलं शिशुं
गोपीं समाहर्तुमलं मनोऽकरोत् ॥ ३१

बहुलाश्व उवाच

किं बभूव ततो रासे शङ्खचूडे समागते ।
एतन्मे ब्रूहि विप्रेन्द्र त्वं परावरवित्तमः ॥३२

नारद उवाच

व्याघ्राननं कृष्णवर्णं तालवृक्षदशोच्छ्रितम् ।
भयङ्करं ललज्जिह्वं दृष्ट्वा गोप्यो वितत्रसुः ॥३३

दुद्रुवुः सर्वतो गोप्यो महान् कोलाहलोऽभवत् ।
हाहाकारस्तदैवासीच्छङ्खचूडे समागते ॥३४
शतचन्द्राननां गोपीं गृहीत्वा यक्षराट् खलः ।
दुद्रावाशूत्तरामाशां निःशङ्कः कामपीडितः ॥३५
रुदन्तीं कृष्ण कृष्णेति क्रोशन्तीं भयविह्वलाम् ।
तमन्वधावच्छ्रीकृष्णः शालहस्तो रुषा भृशम् ॥३६
यक्षो वीक्ष्य तमायान्तं कृतान्तमिव दुर्जयम् ।
गोपीं त्यक्त्वा जीवितेच्छुः प्राद्रवद्भयविह्वलः । ३७
यत्र यत्र गतो धावन् शङ्खचूडो महाखलः ।
तत्र तत्र गतः कृष्णः शालहस्तो भृशं रुषा ॥३८
हिमाचलतटं प्राप्य शालमुत्पाट्य यक्षराट् ।
तस्थौ तत्सम्मुखे राजन् युद्धकामो विशेषतः ॥३९
तस्मै चिक्षेप भगवान् शालवृक्षं भुजौजसा ।
तेन घातेन पतितो वृक्षो वातहतो यथा ॥४०
पुनरुत्थाय वैकुण्ठं मुष्टिनाभिजघान ह ।
जगर्ज सहसा दुष्टो नादयन् मण्डलं दिशाम् ॥४१
गृहीत्वा तं हरिर्दोर्भ्यां भ्रामयित्वा भुजौजसा ।
पातयामास भूपृष्ठे वातः पद्ममिवोद्धृतम् ॥४२
शङ्खचूडस्तं गृहीत्वा पोथयामास भूतले ।
एवं युद्धे सम्प्रवृत्ते चकम्पे भूमिमण्डलम् ॥४३
मुष्टिना तच्छिरश्छित्वा तस्माच्चूडामणिं हरिः ॥
जग्राह माधवः साक्षात् सुकृती शेवधिं यथा ॥४४
तज्ज्योतिर्निर्गतं दीर्घं द्योतयन् मण्डलं दिशाम् ।
श्रीदाम्नि श्रीकृष्णसखे लीनं जातं व्रजे नृप ॥४५

एवं हत्वा शङ्खचूडं भगवान् मधुसूदनः ।
मणिपाणिः पुनः शीघ्रमाययौ रासमण्डलम् ॥४६
चन्द्राननायै च मणिं दत्वा तं दीनवत्सलः ।
पुनर्गोपीगणैः सार्द्धं रास चक्रे हरिः स्वयम् ॥४७

इति श्रीगर्गसंहितायां वृन्दावनखण्डे रासक्रीडायां
लोहजङ्घमहावनविहारे शङ्खचूडवधो नाम
विंशोऽध्यायः ॥२०

नारद उवाच

अथ गोपीगणैः सार्द्धं पश्यन् श्रीयमुनातटम् ।
विहर्तुमाययौ कृष्णो वृन्दारण्यं मनोहरम् ॥१
वृन्दावने चौषधयो लता जाता हरेर्वरात् ।
ताः सर्वाश्चाङ्गना भूत्वा यूथीभूत्वा समाययुः ॥२
लतागोपीसमूहेन चित्रवर्णेन मैथिल ।
रेमे वृन्दावने राजन् हरिर्वृन्दावनेश्वरः ॥३
कलिन्दनन्दिनीतीरे कदम्बाच्छादिते शुभे ।
त्रिविधेन समीरेण सर्वतः सुरभीकृते ॥ ४
विलसत् पुलिने रम्ये वंशीवटविराजिते ।
स्थितोऽभूद्राधया सार्द्धं रासश्रमसमन्वितः ॥ ५
वीणातालमृदङ्गादिमुरुयष्टियुतानि च ।
वादित्राण्यम्बरे नेदुः सुरैर्गोपीगणैः सह ॥ ६
देवेषु पुष्पं वर्षत्सु जयध्वनियुतेषु च ।
तोषयन्त्यो हरिं गोप्यो जगुस्तद्यश उत्तमम् ॥ ७
काश्चिद्वै मेघमल्लारं दीपकञ्च तथापराः ।
मालकोशं भैरवञ्च श्रीरागञ्च तथैव च ॥ ८
हिन्दोलनं जगुः काश्चिद्राजन् सप्तस्वरैः सह ।
काश्चित्तासान्तु मुग्धाश्च काश्चिन्मध्याः स्त्रियो नृप ॥ ९
काश्चित् प्रौढाः प्रेमपराः श्रीकृष्णे लग्नमानसाः ।
जारधर्मेण गोविन्दं काश्चिद् गोप्यो भजन्ति हि ॥ १०
काश्चिच्छ्रीकृष्णसहिताः कन्दुकक्रीडने रताः ।
काश्चित् पुष्पैश्च हरिणा क्रीडां चक्रुः परस्परम् ॥ ११

काश्चिल्लतासु धावन्त्यः क्वणन्नूपुरमेखलाः ।
काश्चित् पिबन्ति सततं बलात् कृष्णाधरामृतम् ॥ १२
काश्चिद्भुजाभ्यां श्रीकृष्णं योगिनामपि दुर्लभम् ।
सङ्गृहीत्वा प्रहस्याराच्चक्रुरालिङ्गनं महत् ॥ १३
मनोजिद् यदुराजस्तु गोपीनां भगवान् हरिः ।
काश्मीरमुद्रितो रेमे वने वृन्दावनेश्वरः ॥ १४
काश्चिद्वीणां वादयन्त्यः समं वंशीधरेण वै ।
मृदङ्गं वादयत्येका गायन्त्यो भगवद्गुणम् ॥ १५
काश्चिद्वै मधुरं तालं ताडयन्त्यो हरेः पुरः ।
मुरयष्टिं सङ्गृहीत्वा हरिणा माधवीतले ॥ १६
गायन्त्यः सुस्थिरा भूत्वा विस्मृत्य जगतः सुखम् ।
काश्चिल्लतासु श्रीकृष्णभुजे बाहुं निधाय च ॥ १७
पश्यन्तो वृन्दकारण्ये शोभां राजन् इतस्ततः ।
लताजालैः संवलितं गोपीनां हारसञ्चयम् ॥ १८
पृथक् चकार गोविन्दः स्पृष्ट्वा तासामुरः स्थलम् ।
गोपीनां नासिकामुक्तावलिं तत्कुन्तलं स्वयम् ॥ १९
शनैः शनैः शोभनं तच्चक्रे श्रीनन्दनन्दनः ।
कृष्णचर्विततांबूलमर्द्धं नीत्वाथ गोपिकाः ॥ २०
चर्वयन्त्यः सुगन्धाढ्यमहो तासां तपो महत् ।
काश्चिच्छ्यामकपोलेषु द्व्यङ्गुलेन शनैः शनैः ॥ २१
हसन्त्यस्ताडयन्त्यस्ताः कदम्बेषु बलात् पृथक् ।
पुंवेषनायकाः काश्चिन्मौलिकुण्डलमण्डिताः ॥२२
नृत्यन्त्यः कृष्णपुरतः श्रीकृष्ण इव मैथिल ।
राधावेषधरा गोप्यः शतचन्द्राननप्रभाः ॥ २३
तोषयन्त्यश्च राधां तां तथा राधापतिं जगुः ।
काश्चित्ताः सात्त्विकैर्भावैः संयुक्ताः प्रेमविह्वलाः ॥ २४

योगीव चास्थिता भूमौ परमानन्दसंप्लुताः ।
काश्चिल्लतासु वृक्षेषु भूम्यां खे विदिशासु च ॥ २५
पश्यन्त्यः श्रीपतिं देवं स्वस्मिन् वा मौनमास्थिताः ।
एवं रासे गोपवध्वः सर्वाः पूर्णमनोरथाः ॥ २६
बभूवुरेत्य गोविन्दं सर्वेशं भक्तवत्सलम् ।
यत्प्रसादस्तु गोपीनां प्राप्तो राजन् महामते ॥ २७
ज्ञानिनामपि नास्त्येवं कर्मिणान्तु कुतश्च सः ।
एवं श्रीकृष्णचन्द्रस्य हरे राधापतेः प्रभोः ॥ २८
रासे चित्रं यद्बभूव तच्छृणुष्व महामते ।
मुनीन्द्र आसुरिर्नाम श्रीकृष्णेष्टो महातपाः ॥ २९
नारदाद्रौ तपस्तेपे हरिध्यानपरायणः ।
हृत्पुण्डरीके श्रीकृष्णं ज्योतिर्मण्डलमास्थितम् ॥ ३०
मनोज्ञं राधया सार्द्धं नित्यं ध्याने ददर्श ह ।
एकदा ध्यानमध्ये तु रात्रौ कृष्णो न चागतः ॥ ३१
वारं वारं कृतं ध्यानं जातः खिन्नमना मुनिः ।
ध्यानादुत्थाय स मुनिः कृष्णदर्शनलालसः ॥ ३२
नारायणाश्रमं प्रागाद्बदरीखण्डमण्डितम् ।
न ददर्श हरिं देवं नरनारायणं मुनिः ॥ ३३
तदातिविस्मितो विप्रो लोकालोकं गिरिं ययौ ।
सहस्रशिरसं देवं न ददर्श स तत्र वै ॥ ३४
पप्रच्छ पार्षदांस्तत्र क्व गतो भगवानितः ।
न विद्मो भो वयं चोक्तो मुनिः खिन्नमनास्तदा ॥ ३५
श्वेतद्वीपं ययौ दिव्यं क्षीरसागरशोभितम् ।
तत्रापि शेषपर्यङ्कं न ददर्श हरिं पुनः ॥ ३६
तदासुरिः खिन्नमनाः प्रेम्णा पुलकिताननः ।
पप्रच्छ पार्षदांस्तत्र क्व गतो भगवानितः ॥ ३७

न विघ्नो भी वयं चोक्तो मुनिश्चिन्तापरायणः ।
किं करोमि क्व गच्छामि दर्शनं तत्कथं भवेत् ॥ ३८
एवं ब्रुवन् मनोयायी वैकुण्ठं प्राप्तवांस्ततः ।
नापश्यत्तत्र देवेशं रमावैकुण्ठमाविशत् ॥ ३९
न दृष्टस्तत्र भक्तेशो मुनिनासुरिणा नृप ।
ततो मुनीन्द्रो योगीन्द्रो गोलोकं स जगाम ह ॥ ४०
वृन्दावने निकुञ्जेऽपि न ददर्श परात्परम् ।
तदा मुनिः खिन्नमनाः श्रीकृष्णविरहातुरः ॥ ४१
पप्रच्छ पार्षदांस्तत्र क्व गतो भगवानितः ।
ऊचुस्तं पार्षदा गोपा वामनाण्डे मनोहरे ॥ ४२
पृश्निगर्भो यत्र जातस्तत्र वै भगवान् स्वयम् ।
इत्युक्त आसुरिस्तस्मादस्मिन्नण्डे समागतः ॥ ४३
हरिं ह्यपश्यन् प्रचलन् कैलास प्राप्तवान् मुनिः ।
तत्र स्थित महादेवं कृष्णध्यानपरायणम् ।
नत्वा पप्रच्छ तद्रात्रौ खिन्नचेता महामुनिः ॥ ४४

आसुरिरुवाच

भगवन् सर्वब्रह्माण्डं मया दृष्टमितस्ततः ।
आवैकुण्ठाच्च गोलोकाद्भ्रमता तद्दिदृक्षुणा ॥ ४५
कुत्रापि देवदेवस्य दर्शनं न बभूव मे ।
कुत्रास्ते भगवानद्य वद सर्वविदां वर ॥ ४६

महादेव उवाच

धन्यस्त्वमासुरे ब्रह्मन् कृष्णभक्तोऽस्यहैतुकः ।
दिदृक्षुणा त्वयायासं कृतं वेद्मि महामुने ॥ ४७

कर्मेन्द्रियाणीह यथा रसार्द्रा
स्तथा सकामा मुनयः सुखं यत्।
मनाङ् न जानन्ति हि नैरपेक्ष्यं
गूढं परं निर्गुणलक्षणं तत् ॥ ४८

हंसं मुनिं दुःखगतं महोदधौ
यः सर्वतो मोचयितुं गतस्त्वरम्।
सोऽद्यैव वृन्दाविपिने सखीजनैः
करोति रासं रसिकेश्वरः स्वयम् ॥ ४९

षाण्मासिकी चाद्य कृता निशीथिनी
स्वमायया देववरेण भो मुने।
अहं गमिष्यामि तदेव द्रष्टुं
त्वमेव गच्छाशु मनोरथं यथा ॥ ५०

इति श्रीगर्गसंहितायां वृन्दावनखण्डे नारदबहुलाश्व-
संवादे रासक्रीडायामासुर्युपाख्यानं नाम
एकविंशोऽध्यायः ॥ २१

नारद उवाच

एवं विचिन्त्य मनसा मुनिनासुरिणा शिवः ।
तौ कृष्णदर्शनार्थाय जग्मतुर्व्रजमण्डलम् ॥ १
दिव्यद्रुमलताकुञ्जतोलिकापुञ्ज शोभिताम् ।
पश्यन्तौ तौ दिव्यभूमिं कालिन्दीनिकटे गतौ ॥ २
गोलोकवासिन्यो नार्यो वेत्रहस्ता महाबलाः ।
चक्रुर्बलात्तन्निषेधं मार्गस्था द्वारपालिकाः ॥ ३
तावूचतुश्चागतौ स्वः कृष्णदर्शनलालसौ ।
तावाहुनृ्पश दूल मार्गस्था द्वारपालिकाः ॥ ४

द्वारपालिका ऊचुः

सर्वतो वृन्दकारण्यं कोटिशः कोटिशो वयम् ।
रासरक्षां सदा कुर्मो न्यस्ताः कृष्णेन भो द्विजौ ॥ ५
एकोऽस्ति पुरुषः कृष्णो निर्जने रासमण्डले ।
अन्यो न याति रहसि गोपीयूथं विना क्वचित् ॥ ६
चेद्दिदृक्षू युवां तस्य स्नानं मानसर वरे ।
कुरुतं तत्र गोपीत्वं प्राप्याशु व्रजतं मुनी ॥७

नारद उवाच

इत्युक्तौ तौ मुनिशिवौ स्नात्वा मानसरोवरे ।
गोपीत्वं प्राप्य सहसा जग्मतू रासमण्डले ॥८
सौवर्णप्रखचित्पद्मरागभूमिमनोहरे ।
माधवीलतिकावृन्दकदम्बाच्छादिने शुभे ॥९
वसन्तचन्द्रकौमुद्या प्रदीप्ते सर्वकौशले ।
यमुनारत्नसोपानतोलिकाभिविराजिते ॥१०
मयूरहंसदात्यूहकोकिलैः कूजिते परे ।
यमुनानिललोलैजत्तरुपल्लवशोभिते ॥११

अद्यैव देव परिपूर्णतमस्तु साक्षाद्
भूभूरिभारहरणाय सतां शुभाय ।
प्राप्तोऽसि नन्दभवने परतः परस्त्वं
कृत्वा हि सर्वनिजलोकमशेषशून्यम् ॥२३

अंशांशकांशककलाभिरुताभिराम
मावेशपूर्णनिचयाभिरतीव युक्तः ।
विश्वं बिभर्षि रसरासमलङ्करोषि
वृन्दावनञ्च परिपूर्णतमः स्वयं त्वम् ॥२४

गोलोकनाथ गिरिराजपते परेश
वृन्दावनेश कृतनित्यविहारलील ।
राधापते व्रजवधूजनगीतकीर्ते
गोविन्द गोकुलपते किल ते जयोऽस्तु ॥२५

श्रीमन्निकुञ्जलतिकाकुसुमाकरस्त्वं
श्रीराधिकाहृदयकण्ठविभूषणस्त्वम् ।
श्रीरासमण्डलपतिर्व्रजमण्डलेशो
ब्रह्माण्डमण्डलमहीपरिपालकोऽसि ॥२६

नारद उवाच

तदा प्रसन्नो भगवान् राधया सहितो हरिः ।
मन्दस्मितो मुनी प्राह मेघगम्भीरया गिरा ॥२७

भगवानुवाच

षष्टिवर्षसहस्राणि युवयोस्तपतोस्तपः ।
मद्दर्शनं तेन जातं सर्वतो नैरपेक्ष्ययोः ॥२८
निष्किञ्चनो यः शान्तश्चाजातशत्रुः स मत्सखा ।
तस्माद्युवाभ्यां मनसा व्रियतामीप्सितो वरः ॥२९

शिवासुरी ऊचतुः

मनोऽस्तु भूमन् युवयोः पदाब्जे
सदैव वृन्दावनमध्यवासः।
न रोचते नोऽन्यमतस्त्वदङ्गे
नमो युवाभ्यां हरिराधिकाभ्याम् ॥३०

नारद उवाच

तथास्तु चोक्त्वा भगवान् वृन्दारण्ये वनोत्तमे।
कालिन्दीनिकटे राजन् रासमण्डलमण्डिते ॥३१
निकुञ्जपार्श्वे पुलिने वंशीवटसमीपतः।
शिवस्य चासुरिमुनेर्नित्यं वासं चकार ह ॥३२
अथ कृष्णो रासलीलां चक्रे पद्माकरे वने।
पतत्सुगन्धिरजसि गोपीभिर्भ्रमराकुले ॥३३
एवं षाण्मासिकी रात्रिः कृता कृष्णेन मैथिल।
गोपीनां रासलीलायां व्यतीता क्षणवत् सुखैः ॥३४
अरुणोदयवेलायां स्वगृहान् व्रजयोषितः।
यूथीभूत्वा ययू राजन् सर्वाः पूर्णमनोरथाः ॥३५
श्रीनन्दमन्दिरं साक्षात् प्रययौ नन्दनन्दन.।
वृषभानुपुरं प्रागाद्वृषभानुसुता त्वरम् ॥३६
एवं श्रीकृष्णचन्द्रस्य रासाख्यानं मनोहरम्।
सर्वपापहरं पुण्यं कामदं मङ्गलायनम् ॥३७
त्रिवर्गदं जनानान्तु मुमुक्षूणां सुमुक्तिदम्।
मया तवाग्रे कथितं किं भूयः श्रोतुमिच्छसि ॥३८

इति श्रीगर्गसंहितायां वृन्दावनखण्डे रासक्रीडायां
शिवासुरिमुनिवरप्राप्तिवर्णनं नाम
द्वाविंशोऽध्यायः ॥२२

बहुलाश्व उवाच

अघासुरादिदैत्यानां ज्योतिः कृष्णे समाविशत् ।
श्रीदाम्नि शङ्खचूडस्य कस्मात्तेनं बभूव ह ॥१
एतद्वद महाबुद्धे त्वं परावरवित्तमः ।
अहो श्रीकृष्णचन्द्रस्य चरितं परमाद्भुतम् ॥ २

नारद उवाच

पुरा गोलोकवृत्तान्तं नारायणमुखाच्छ्रुतम् ।
सर्वपापहरं पुण्यं शृणु राजन् महामते ॥ ३
राधा श्री विरजा भूश्चतस्रः पत्न्योऽभवन् हरेः ।
तासां राधा प्रियातीव श्रीकृष्णस्य महात्मनः ॥ ४
राधिकासमया राजन् कोटिचन्द्रप्रकाशया ।
कुञ्जे विरजया रेमे एकान्ते चैकदा प्रभुः ॥ ५
सपत्नीसहितं कृष्णं राधा श्रुत्वा सखीमुखात् ।
अतीव विमना जाता सपत्नीसौख्यदुःखिता ॥ ६
शतयोजनविस्तारं शतयोजनमूर्ध्वगम् ।
कोट्यश्वनीसमायुक्तं कोटिसूर्यसमप्रभम् ॥ ७
विचित्ररत्नसौवर्णमुक्तादामविलम्बितम् ।
पताकाहेमकलशैः कोटिभिर्मण्डितं रथम् ॥ ८
समारुह्य सखीनां सा वेत्रहस्तैर्दशार्बुदैः ।
हरिं द्रष्टुं जगामाशु श्रीराधा भगवत्प्रिया ॥ ६
तन्निकुञ्जे द्वारपालं श्रीदामानं महाबलम् ।
हरिन्यस्तं समालोक्य तं निर्भर्त्स्य सखीजनैः ॥ १०
वेत्रैः सन्ताड्य सहसा द्वारि गन्तुं समुद्यता ।
सखीकोलाहलं श्रुत्वा हरिरन्तरधीयत ॥ ११

राधाभयाच्च विरजा नदीभूत्वावहत्तदा ।
कोटियोजनमायामं गोलोकं सर्वतो नदी ॥ १२
सहस्रकुण्डलीं कृत्वा शुशुभेऽब्धिरिवावानम् ।
रत्नपुष्पैर्विचित्राङ्गा यथोष्णिङ्मुद्रिता नृप ॥ १३
हरिं गतं तं विज्ञाय नदीभूताञ्च तां तथा ।
आलोक्य तन्निकुञ्जञ्च स्वकुञ्जं राधिका ययौ ॥ १४
अथ कृष्णो नदीभूतां विरजां विरजां वराम् ।
सविग्रहां चकाराशु स्ववरेण नृपेश्वर ॥ १५
पुनर्विरजया सार्द्धं विरजातीरजे वने ।
निकुञ्जे वृन्दकारण्ये चक्रे रासं हरिः स्वयम् ॥ १६
विरजायां सप्तसुता बभूवुः कृष्णतेजसा ।
निकुञ्जं ते ह्यलञ्चक्रुः शिशवो बाललीलया ॥ १७
एकदा तैः कलिरभूल्लघुर्ज्येष्ठैश्च ताडितः ।
पलायमानो भयभृन्मातुः क्रोडे जगाम ह ॥ १८
तल्लालनं समारेभे समाश्वास्य सुतं सती ।
तदा वै भगवान् साक्षात्तत्रैवान्तरधीयत ॥ १९
रुषा सुतं शशापेयं श्रीकृष्णविरहातुरा ।
त्वं जलं भव दुर्बुद्धे कृष्णविच्छेदकारकः ॥ २०
कदापि त्वज्जलं मर्त्या न पिबन्तु कदाचन ।
ज्येष्ठान् शशाप व्रजत मेदिनीं कलिकारकाः ॥ २१
जलरूपाः पृथग् याना न समेता भविष्यथ ।
नैमित्तिके च भवतां मेलनं स्यात् सदा लये ॥ २२

नारद उवाच

इत्थं ते मातृशापेन धरणीं वै समागताः ।
प्रियव्रतरथाङ्गानां परिखासु समास्थिताः ॥ २३

लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः ।
बभूवुः सप्त ते राजन् अक्षोभ्याश्च दुरत्ययाः ॥ २४
दुर्विगाह्याश्च गम्भीरा आयामं लक्षयोजनात् ।
द्विगुणं द्विगुणं जातं द्वीपे द्वीपे पृथक् पृथक् ॥ २५
अथ पुत्रेषु यातेषु पुत्रस्नेहातिविह्वलाम् ।
स्वप्रियां तां विरहिणीमेत्य कृष्णो वरं ददौ ॥ २६
कदापि ते न विच्छेदो मया भीरु भविष्यति ।
स्वतेजसा स्वपुत्राणां सदा रक्षां करिष्यसि ॥ २७
अथ राधां विरहिणीं ज्ञात्वा कृष्णो हरिः स्वयम् ।
श्रीदाम्ना सह वैदेह तन्निकुञ्जं समाययौ ॥ २८
निकुञ्जद्वारि सम्प्राप्तं ससखं प्राणवल्लभम् ।
वीक्ष्य मानवती भूत्वा राधा प्राह हरिं वचः ॥ २९

राधोवाच

तत्रैव गच्छ यत्राभूत् स्नेहस्ते नूतनो हरे ।
नदीभूता हि विरजा नदो भवितुमर्हसि ॥ ३०
कुरु वासं तन्निकुञ्जे मया ते किं प्रयोजनम् ।

नारद उवाच

इति श्रुत्वाथ भगवान् स्वं निकुञ्जं जगाम ह ।
श्रीकृष्णमित्रः श्रीदामा राधां प्राह रुषा वचः ॥ ३१

श्रीदामोवाच

परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ॥
असंख्यब्रह्माण्डपतिर्गोलोकेशः परात्परः ॥ ३२
त्वादृशीः कोटिशः शक्तीः कर्तुं शक्तः परात्परः ।
तं विनिन्दसि राधे त्वं मानं मा कुरु मा कुरु ।
वरिष्यसि विहारार्थं राधे सा त्वमसंशयम् ॥ ३३

राधोवाच

हे मूढ पितरं स्तुत्वा मातरं मां विनिन्दसि ।
राक्षसो भव दुर्बुद्धे गोलोकाच्च बहिर्भव ॥ ३४

श्रीदामोवाच

अनुकूलेन कृष्णेन जातो मानः शुभे तव ।
तस्माद्भुवि परात् कृष्णात् परिपूर्णतमात् प्रभोः ।
शतवर्षं ते वियोगो भविष्यति न संशयः ॥ ३५

नारद उवाच

एवं परस्परं शापात् स्वकृताद्भयभीतयोः ।
अतीव चिन्तां गतयोराविरासीत् स्वयं प्रभुः ॥ ३६

भगवानुवाच

वचनं वै सर्वनिगमं दूरीकर्तुं क्षमोऽस्म्यहम् ।
भक्तानां वचनं राधे दूरीकर्तुं न च क्षमः ॥ ३७
मा शोकं कुरु कल्याणि वरं मे शृणु राधिके ।
मासं मासं वियोगे ते दर्शनं मे भविष्यति ॥ ३८
भुवो भारावताराय कल्पे वाराहसंज्ञके ।
भक्तानां दर्शनं दातुं गमिष्यामि त्वया सह ॥ ३९
श्रीदामन् शृणु मे वाक्यमंशेन त्वसुरो भव ।
वैवस्वतान्तरे रासे हेलनं मे करिष्यसि ॥ ४०
मद्धस्तेन च ते मृत्युर्भविष्यति न संशयः ।
पुनः स्वविग्रहं पूर्वं प्राप्स्यसि त्वं वरान्मम ॥ ४१

नारद उवाच

एवं शापेन श्रीदामा पुरा पुण्यजनालये ।
सुधनस्य गृहे जन्म लेभे राजन् महातपाः ॥ ४२
शङ्खचूड इति ख्यातो धनदानुचरोऽभवत् ।
तस्माच्छ्रीदाम्नि तज्ज्योतिर्लीनं जातं विदेहराट् ॥ ४३

स्वात्मारामो लीलया सर्वकार्यं
स्वस्मिन् धाम्नि ह्यद्वितीयः करोति ।
यः सर्वेशः सर्वरूपो महात्मा
चित्रं नेदं नौमि कृष्णाय तस्मै ॥ ४४
इदं मया ते कथितं मनोहरं
वैदेह वृन्दावनखण्डमग्रतः ।
शृणोति चैतच्चरितं नरो वरः
परं पदं पुण्यतमं प्रयाति सः ॥ ४५

इति श्रीगर्गसंहितायां वृन्दावनखण्डे नारदबहुलाश्वसंवादे
शङ्खचूडोपाख्याने विरजानदीसमुद्रोत्पत्तिवर्णनं नाम
त्रयोविंशोऽध्यायः ॥ २३

इति द्वितीयः वृन्दावनखण्डः समाप्तः ॥

# गर्गसंहितायां वृन्दावनखण्डे पाठान्तरादिप्रदर्शनम् ।

अत्र खण्डे ख घ आदर्शयोरभावोऽवगन्तव्यः ।

१।४ ०वृद्धान् सहायान् तानुवाच० इति ग० पु० ।
नन्द उवाच इति मु० पु० ।
०कर्त्तव्यं तु वदत० इति मु० पु० ।
१।५ ०गोपो वृद्धो० इति मु० पु० ।
१।६ सनन्द उवाच इति ग० पु० ।
१।८ ह्यवक्ष्यशकटे० इति ग० पु० ।
१।१० ०वृन्दावन व्रजे । इति ग० पु० ।
१।१२ ०सार्द्धञ्च योजनेन वै । इति ग० पु० ।
१।२७ ०भगवान् × कलेश्वरः ।। इति ग० पु० ।
१।३३ ०राजमानं तीर्थराज० इति ग० पु० ।
०उवाच ह ।। इति नास्ति ग० पु० ।
१।३४ नारद उवाच इति नास्ति ग० पु० ।
श्लोकादितो-स्त्वं वै तीर्थ-राज० इति नास्ति ग० पु० ।
१।३८ ०माथुरं मण्डलं विना ।। इति ग० पु० ।
१।४० ०गृहस्यापि कृतो राट् च० इति मु० पु० ।
१।४२ ०साक्षान्मण्डलं मे० इति ग० पु० ।
१।४७ दृष्ट्राग्रे० इति ग० पु० ।
१।४८ पृथ्वी उवाच इति ग० पु० ।
१।४९ वृक्षाः प्रदृश्या हि भवत्योर्द्ध गया जले । इति ग० पु० ।
१।५० ०धरणीरहं हि० इति मु० पु० ।
१।५३ गोलोकभूमिसंयुक्त० इति ग० मु० पु० ।
२।४ ०जनानां नोऽनुशृण्वताम् । इति ग० पु० ।
२।८ ०सुधाम्नः श्रीहरिः० इति मु० पु० ।
२।१३ ०गोगणैर्युक्ते गोपीगोपाल संयुते ।। इति ग० पु० ।

२।१७ ०तीर्थयायी च० इति मु० पु० ।
२।१८ निकरैर्नादितं० इति ग० पु० ।
२।२५ तत्रैव स्थाप० इति मु० पु० ।
०यत्रैको न च पर्वतः ॥ इति ग० पु० ।
२।२८ ०वदान्येनं महा० इति मु० पु० ।
२।२६ ०कर्म के शुभे । इति मु० पु० ।
२।३२ ०मे करिष्यति । इति ग० पु० ।
२।३३ ०शपथस्ते मया पथि॥ इति ग० पु० ।
२।४० ०भूमिभारं ददौ० इति ग० पु० ।
२।४१ ०शङ्कां कर्त्तुमसौ० इति मु० पु० ।
२।४२ ०गिरिंगोवर्द्धनं गिरिम् ॥ इति ग० पु० ।
२।४३ तोलितं भूरि० इति ग० पु० ।
२।४६ मुनेऽत्र मे न दोषो० इति मु० पु० ।
०त्वया मे शपथः कृतः ॥ इति ग० पु० ।
२।४७ ०विगतोषमः ( ? ) ॥ इति ग० पु० ।
२।४९ ०पुलस्त्यर्षौ त्वयं० इति मु० पु० ।
२।५१ ०सुमुक्तिदं श्रीरुचिरं न चित्रम् ॥ इति ग० पु० ।

३।३ ०विदुर्बुधाः ॥ इति ग० पु० ।
३।४ ०निकुञ्जद्वारनिर्गता ॥ इति मु० पु० ।
३।८ ०लोकादत्रोक्तं जगाम ह ॥ इति ग० पु० ।
३।११ ०कालिन्दं प्राप्य० इति मु० पु० ।
३।१२ ०कालिन्दप्रभवा० इति मु० पु० ।
०कालिन्दगिरिसानू० इति मु० पु० ।
३।१३ ०सा वै वाडवे वने ॥ इति ग० पु० ।
३।१७ ०चन्द्रवासार्थं निज० इति मु० पु० ।
३।१८ अथ व्रजा० इति मु० पु० ।
३।१९ ततस्तु वारिवेगेन० इति ग० पु० ।

०गत्वाथो व्रजमण्डलम्। इति ग० पु०।
०नत्वाथो व्रज० इति मु० पु०।
०तीर्थसङ्गमम्॥ इति ग० पु०।

३।२० ०क्षीराब्धि सा० इति मु० पु०।
देवाश्च वर्षा पुष्पानां चक्रुर्दिग्विजयध्वनिम्॥ इति ग० पु०।

३।२३ त्वत्समानं हि दिव्यं हि न भूतो न भविष्यति॥ इति ग० पु०।
त्वत्समाना हि दिव्या च न भूता न० इति मु० पु०।

३।२४ ०गङ्गां तस्मा० इति मु० पु०।

३।२६ ०सर्वलोकैकवन्दिता। इति मु० पु०।
परिपूर्णतमस्यासि० इति ग० पु०।

३।२८ ०शुभम्। इति मु० पु०।
०वियोगातुराहं वै यानं कर्त्तुं न च क्षमा॥ इति क० मु० पु०।

३।३२ ०वेगवत्तदा॥ इति ग० पु०।

३।३३ ततो मूर्ध्नि न्यपपात सुरावजलधारया (?)। इति ग० पु०।
०स्फुरासज्जल० इति मु० पु०।

३।३४ ०सा प्रययौ स्वर्गनाकिना। इति ग० पु०।

३।३७ ०नवचरित्र० इति मु० पु०।
०यदि पाठितं० इति क० मु० पु०।
०पठेच्च यो नित्यशः० इति क० मु० पु०।
०लीलायुतम्॥ इति मु० पु०।

४।७ ०परिकरैः साकं० इति क० पु०।
०मुदा वृन्दावनं ययुः॥ इति ग० पु०।

४।६ ०सप्तद्वारसमन्वितम्॥ इति ग० मु० पु०।

४।१० नास्ति ग० मु० पु०।
०समद्वारसमन्वितम्॥ इति क० पु०।

४।१६ पीतवासाः परिकरौ० इति

क० ग० पु० ।
४।१६ ०स्तत्राजगाम ह ॥ इति क० पु० ।
४।२३ विस्मितेषु च गोपेषु० इति क० पु० ।
४।२५ ०श्रीप्रपूर्णो० इति ग० मु० पु० ।

५।३ श्लोकपूर्वार्द्धं नास्ति क० मु० पु० ।
५।५ श्लोकोऽयं नास्ति ग० पु० ।
५।७ ०जघान नदन् मुहुः ॥ इति क० पु० ।
५।१० ०रुग्णातां प्रागात्० इति क० पु० ।
५।१३ ०महाबलम् ॥ इति क० पु० ।
५।१४ ०महाबलम् ॥ इति क० पु० ।
५।१५ ०नाभवद्दैत्यो० इति ग० पु० ।
५।१६ ०महापापश्छिन्नो० इति ग० मु० पु० ।
०न्न मृतश्चवै। इति मु० पु० ।
०भद्रकाली सरस्वती ॥ इति ग० पु० ।
५।१७ ०महाखलः ॥ इति मु० पु० ।
५।१८ तयैकपादो भग्नोऽभू० इति मु० पु० ।
तदैकपादभग्नो० इति ग० पु० ।
५।१९ ०तीक्ष्णाया तुण्डया मृधे ॥ इति ग० पु० ।
०तीक्ष्णाया तुण्डया नृप ॥ इति क० पु० ।
५।२२ ०तरसा क्षतकण्ठो० इति ग० पु० ।
५।२६ ०संश्लिष्य सर्वतः । इति मु० पु० ।
०संस्पृश्य सर्वतः । इति ग० पु० ।
५।२७ ०राजमन्दिरे ॥ इति ग० मु० पु० ।
५।३८ ०मैन्द्रं योगपद० इति क० पु० ।
०मैन्द्रयोगापद्दं० इति ग० पु० ।
५।३९ ०त्रैवर्ग्यं किमभूज्जनैः । इति मु० पु० ।
०त्रैवर्ग्यं किमु भूजौ। इति ग० पु० ।
०पूर्णाब्रह्मात्र० इति ग० पु० ।

६।१ ०निकटे दिव्ये० इति क०

पु० ।
०चकार ह ॥ इति ग० मु० पु० ।
६।३ ०कृत्वा करध्वनिम् ॥ इति मु० पु० ।
६।५ हाहाशब्दं सुराणान्तु दैत्यानां० इति ग० पु० ।
६।६ तरसा रोधगाः प्राणाः० इति ग० पु० ।
६।८ श्लोकापरार्द्धं नास्ति क० ग० पु० ।
६।६ ०दैत्यो हरिं गतः ॥ इति मु० पु० ।
६।११ ०जहास तं सद्यः० इति ग० पु० ।
६।१२ ०महादुष्टं त्वं० इति ग० मु० पु० ।
६।१४ यदागतः सर्पं० इति क० ग० पु० ।
६।१५ ०योगैश्च दुर्लभम् ॥ इति ग० पु० ।
अतः परं मुद्रित पुस्तके षष्ठाध्याय समाप्तिर्वर्त्तते । ततश्च ७, ८, ६ अध्याया अपि अधिकाः सन्ति । ये खलु अक्षरभेदेनात्र मुद्रिताः।
क० ग० पुस्तकयोस्तु षष्ठाध्याय एवानुवर्त्तत इति ज्ञेयम् ।
अस्माभिरपि मुद्रितपुस्तक दशमाध्यायारम्भे च षष्ठाध्यायानुवृत्तिज्ञापिका १६ संख्यैव श्लोकान्ते दत्ता । तत्पुस्तकदशमाध्यायान्ते च पुष्पिकायां षष्ठाध्याय समाप्तिरेव प्रदर्शितास्माभिरिति मन्तव्यम् ।
६।१८ ०वृषभानुव्रजेषु षट् । इति क० ग० पु० ।
६।१६ ०रिष्टान्यागच्छन्ति० इति क० मु० पु० ।
६।२४ ०सुगर्गवाक्यैर्धर्मार्थं० इति मु० पु० ।
०सुवत्सवाक्यै० इति ग० पु० ।
६।२७ स्वालङ्कारञ्च० इति क० पु० ।
६।२८ ०नन्दो दानं ददौ० इति मु० पु० ।
७।२ अग्रे पृष्ठे तदा गावश्चर-

न्त्यः० इति मु० पु० ।
०पृष्ठे तथा गाव० इति ग० पु० ।
०पश्यन्त्यः सुन्दरं० इति ग० मु० पु० ।
७।४ ०मालाजालैर्विराजिता ॥ इति मु० पु० ।
७।६ ०पीतपुच्छा०इति मु० पु० ।
०रक्तपुच्छा० इति ग०पु० ।
७।७ कुम्भोघ्न्यः पाटलाः काश्चिद् गच्छन्त्यो० इति क० पु० ।
७।१० शादूल कोमल कान्तं० इति मु० पु० ।
७।११ ०श्यामलैर्वनम् । इति मु० पु० ।
०प्रियालैः पनसै० इति क० पु० ।
०श्यामलैः पनसै० इति ग० पु० ।
७।१२ कदलैः कोविदारै० इति मु० पु० ।
असनैश्च कपित्थैश्च० इति क० पु० ।
७।१३ ०चिप्तं चैत्ररथं० इति मु० पु० ।
०चिपंश्चैत्ररथं० इति ग० पु० ।
७।१६ परितो जालकुञ्जाढ्याः शालैरिन्द्र० इति ग० पु० ।
करिल्लजालकुञ्जाढ्यः० इति क० पु० ।
७।२१ ०तीरे महावने । इति क० पु० ।
७।२२ मयूरपिच्छभृन्मौली० इति मु० पु० ।
७।२३ रागैः संशब्दयन् वंशीं श्रीनन्दगृह० इति ग० पु० ।
७।२४ वेणुवंशीध्वनिकुला० इति मु० प० ।
वेणुवंशीध्वनिकलं० इति ग० पु० ।

८।१ ०तालवनं नवम् ॥ इति मु० पु० ।
८।४ गगर्ज निर्भयः० इति क० पु० ।
गर्जन्ति निर्भय ० इति ग० पु० ।
८।७ ०खरशब्दश्च० इति ग०पु० ।
८।८ ०भग्नश्च तालोऽपि० इति मु० पु० ।
०तालानन्यान् स्थितान्०

इति ग० पु० ।

८।२४ नास्ति ग० पु० ।

८।३७ यस्य शापेन विश्वोऽयं कम्पितः० इति क०ग०पु० ।

९।२ कालीयस्य फणीन्द्रस्य जलं विषविदूषितम् । इति क० पु० ।

९।६ ०महाबलम् ॥ इति क० पु० ।

९।१२ ०विगतस्मयः ॥ इति क० पु० ।

९।१५ वादयन् सुमहावीणानक० इति ग० पु० ।

वादयन् समुदा वीणा० इति मु० पु० ।

९।१६ ०फणान् सोज्ज्वलान्० इति मु० पु० ।

०कालियस्य महात्मनः ॥ इति मु० पु० ।

९।२५ ०सकला जनाः ॥ इति ग० पु० ।

९।२६ ०मुमुदिरे जनाः । इति मु० पु० ।

९।२८ ०गोपीगोपगणैः सह ॥ इति ग० मु० पु० ।

९।३० नत्वा कृताञ्जलिं कृत्वा० इति ग० मु० पु० ।

९।३१ ०शरणागतवत्सल । इति ग० मु० पु० ।

०वने कष्टात्० इति ग० मु० पु० ।

१०।३ श्लोकोत्तरार्द्धं नास्ति ग० पु० ।

१०।४ श्लोकपूर्वार्द्धं नास्ति ग० पु० ।

१०।५ ०सुखदं नहि । इति मु० पु० ।

१०।८ ०सर्प इव त्वं० इति क० मु० पु० ।

सदा सर्पो० इति क० मु० पु० ।

१०।९ ०महद्दमः । इति क० पु० ।

०महान् मदः । इति ग० पु० ।

०भव सदा ॥ इति क० पु० ।

०त्वं काक इव० इति ग० पु० ।

०सुदुर्मते ॥ इति ग० पु० ।

१०।१० ०रित्थन्तु शपतो० इति क० पु० ।

स्वशापसदुःखितयोः० इति

क० पु० ।
१०।१४ ०सद्ज्ञान भविष्यति० इति क० पु० ।
०सज्ञानं० इति ग० पु० ।
०संयोग योग० इति क० पु० ।
१०।२० ० कांश्चिद्दुःसहांश्चशता ० इति मु० पु० ।
कांश्चित् कांश्चिद् दशशता० इति ग० पु० ।
१०।२३ ०समुद्धर ॥ इति क० मु० पु० ।
१०।२४ ०यतोऽनन्त० इति मु० पु० ।
१०।२५ ०धराधारस्य मे० इति ग० पु० ।
१०।२७ तदाभूद् भारमुत्तार्य स्वफग्गात्व० इति क० पु० ।
०स्वफग्गात्व सुखी० इति ग० पु० ।
१०।२८ आधारोऽहं० इति मु० पु० ।
१०।२९ महाभारमयीं० इति क० मु० पु० ।
०कुरुमत्सखे ॥ इति मु० पु० ।
०कुरुत्वात्सुखे ॥ इति क० पु० ।
१०।३४ केभ्यस्तु० इति क० ग० पु० ।
११।२ ०जघान ह । इति मु० पु० ।
०गतल्लुब्धं चैक० इति मु० पु० ।
११।३ ०यदा सर्वान्० इति क० पु० ।
११।४ ०मासि मासि पृथक् पृथक् । इति ग० पु० ।
११।५ ०गृहाद् गृहात् । इति क० पु० ।
०बलिं तं वकवत्परम् ॥ इति ग० पु० ।
११।६ गोपीनाथात्मनो० इति क० पु० ।
११।८ ०वेगतः कालियोपरि । इति मु० पु०
११।११ ०दिव्यवाहनः । इति ग० मु० पु० ।
११।१७ ०द्वीपान् सप्तखण्डान्० इति मु० पु० ।
११।२० ०न सुखं जातं० इति ग० पु० ।
०योऽपि भयातुरः । इति मु० पु० ।
११।२६ ०तनुजाद्ध शत् ॥ इति ग० पु० ।
११।३२ निर्भयस्ते भयं० इति मु०

पु० ।

१२।२ यथा नरः सुधां० इति ग० पु० ।

०तथालिः पद्म० इति क० ग० पु० ।

१२।५ ०मनोरथमहात्मनः। इति ग० पु० ।

१२।१७ ०कौशल्यगुणाश्रयां पराम् । इति क० पु० ।

०सुप्रययौ० इति क० पु० ।

१२।२० ०सर्वमधिकृष्णोऽस्ति० इति ग० पु० ।

सर्वमाधिकृतेऽस्ति० इति क० पु० ।

१२।२७ ०विम्बं विषकुम्भ० इति ग० पु० ।

तस्यै स्वदर्शनं० इति ग० पु० ।

०दुःखनाशन ॥ इति क० ग० पु० ।

१२।२८ ०भजते परेश्वरः ॥ इति मु० पु० ।

१२।३० ०मनसः परात्परं० इति मु० पु० ।

०भावञ्च परस्परं सदा न ह्यर्कतो भामिनि जायते तमः। इति ग० पु० ।

१२।३१ ०भाण्डीरवटे० इति क० पु० ।

अहैतुकं प्रेम च भक्तिराश्रितं० इति ग० पु० ।

१२।३२ नास्ति ग० पु० ।

१२।३३ ०जना भुवि । इति मु० पु० ।

०कालसूत्रं प्रपतन्ति० इति क० ग० पु० ।

१२।३४ ०श्रुत्वा वचः कृत्स्नं० इति ग० मु० पु० ।

१२।३६ ०वाञ्छित० इत्यन्तरं ३७ श्लोकोत्तरार्द्धं लिखितमस्ति ग० पु ।

नारद उवाच इति नास्ति क० ग० पु० ।

१२।३७ श्लोकपूर्वार्द्धं नास्ति ग० पु०। श्लोकोत्तरार्द्धं च चन्द्राननां इत्यपि नास्ति ग० पु० ।

१२।३८ ०न जाने वद कस्यचित् ॥ इति ग० पु० ।

१३।३ यदा स्पृष्टा० इति मु० पु० ।

श्लोकोऽयं त्रुटितः ग० पु० ।

०तुलसीदलै ॥ इति मु० पु० ।

१३।६ ०जाता गतास्ते वै सुरालये। इति मु० पु० ।

१३।१० ०न यान्ति यमकिङ्कराः॥ इति मु० पु० ।

१३।१४ ०मुक्तं पापशतै० इति ग० पु० ।

१३।१७ ०मादिदेवश्चतुर्मुखः। इति मु० पु० ।

१३।१८ नास्ति क० मु० पु० ।

१३।२२ ०सुमण्डितम्॥ इति मु० पु० ।

१३।२४ एतादृशन्तु० इति ग० पु०।
०मन्दिरन्तु मनोहरम्। इति ग० पु० ।

१३।२७ ०तथाचैवेक्षुसेवनैः। इति ग० पु० ।
०बहुमिश्रया॥ इति मु० पु० ।

१३।२८ उद्यापनसमारम्भं० इति मु० पु० ।

१३।३३ ०रङ्गवल्लीं० इति क० पु० ।

१३।३५ ०कीर्त्तिनायकः॥ इति ग० पु० ।

१४।३ ०प्रीतिं परीक्ष्य० इति मु० पु० ।

१४।४ ०घन उङ्कारनूपरम्। इति ग० पु० ।

१४।६ ०कुन्तलसन्निभम्। इति ग० मु० पु० ।
०मन्दिरं प्रददर्श ह॥ इति क० पु० ।

१४।७ ०र्द्वारिभिः सुमनोहरम्॥ इति ग० पु० ।

१४।८ ०चामरसंयुक्तं० इति ग० मु० पु० ।

१४।९ ०यत्र गायन्ते० इति ग० मु० पु० ।

१४।१० वृषभानुपुरस्यै० इति मु० पु० ।

१४।१२ पुष्पयष्टि० इति मु० पु० ।

१४।१३ ०पुरे दिव्यं० इति मु० पु०।
०निम्बूनतद्रूमा० इति मु० पु० ।
०निम्बनूतद्रूमा० इति क० पु० ।

१४।१४ ०निकुञ्जोऽति० इति क० पु० ।
०सुगन्धिमत्॥ इति ग० पु० ।

१४।१६ ०सारसाः शुभाः॥ इति क० पु० ।

१४।१७ ०मधुरं नादं० इति मु० पु० ।
पुष्पप्राप्य० (?) इति ग० पु० ।
१४।१८ ०स्फुरत्कारा० इति मु० पु० ।
०स्फुरद्धारा० इति ग० पु० ।
०वस्त्रा वराननाः ॥ इति क० मु० पु० ।
१४।१६ ०भ्रमन्ति० इति क० पु० ।
१४।२० ०सूक्ष्मवस्तु० इति क० पु० ।
०राकुलपूरके ॥ इति ग० पु० ।
१४।२१ ०चालयन्ती च कोमलम् ॥ इति मु० पु० ।
१४।२७ गत्याकृत्याशुभैर्दन्तैर्वश्यते० इति मु० पु० ।
१४।२८ ०मे व्रजति स्तवार्थे नोचेत् स्व० इति ग० पु० ।
१४।२६ अधि त्वदात्मा० इति मु० पु० ।
अयं त्वदात्मा० इति ग० पु० ।
०प्रियो मे० इति मु० पु० ।
०स्त्वयानयेद्देहमिमं ददामि तम् ॥ इति क० पु० ।
१४।३२ ०त्वद्गेह चागतास्म्यहम् ॥ इति क० पु० ।
१४।३३ ०मोदिनीनां० इति क० पु० ।
०लतिकास्फुटप्रेमयुक्तानित्यं निकुञ्ज० इति ग० पु० ।
०श्रुत न वचनं तव कञ्ज० इति ग० पु० ।
१४।३४ ०मेलन तद्बभूव० इति मु० पु० ।
श्लोकोत्तरार्द्धं नास्ति ग० पु० ।
१४।३५ नास्ति ग० पु० ।
१४।३८ ०प्रोवाह सद्यो० इति क० पु० ।
०प्रोवाच सद्यो० इति ग० पु० ।
१४।३६ ०गणास्त्वरं सुवीजयन्त्यो० इति मु० पु० ।
१४।४० प्रभात आगमिष्यामि० इति क० ग० पु० ।
०नचागतः ॥ इति ग० पु० ।
०नचेदतः ॥ इति क० पु० ।

१५।३ ०दुःखिता भृशं० इति ग० पु० ।
०वस्तु यत् । इति ग० पु० ।
पूर्वं सपथ्यस्य० इति ग० पु० ।

१५।६ भर्त्रा यात्रा ननन्दा वा श्वश्रू० इति क० पु०।
भ्राता भर्त्ता ननन्दा वा श्वश्रा० इति ग० पु०।
१५।६ ०मृते देवि प्रियं केनापि चेत् कृतम्। इति ग० पु०।
कथ्यतां तं घ (?) रम्भोरु० इति ग० पु०।
१५।११ अन्तिमं पादद्वयं नास्ति क० पु०।
१५।१८ ०वीरो न विशालरूपः। इति ग० पु०।
०निर्मोहनमद्य कृष्णाम्॥ इति मु० पु०।
१५।१६ ०वाक्यपर सरस्वती० इति ग० पु०।
१५।२० ०निजलोकरीत्या। इति ग० पु०।
०रजो भजन्ति॥ इति ग० पु०।
१५।२१ ०भुवि दुर्विनीते॥ इति ग०
१५।२२ ०गङ्गां स्पृशन्ति० इति ग० पु०।
०गवां चाङ्गानि स्पृशन्ति० इति मु० पु०।
१५.२३ ०विलसत्सुकृत० इति ग० पु०।
०तल्लग्नमानमनसः सुसुख० इति ग० पु०।
१५।२४ श्लोकपूर्वार्द्धं नास्ति ग० पु०।
१५।२६ भक्तास्तु योनमजितः पुरुषोत्तमस्य।
शम्भ्वात्मभूर्नच रमा न च रौहिणेयः॥ इति ग० पु०।
१५।२७ ०ददाति कनकापि० इति मु० पु०।
१५।२७ ०यदाथ हरिः० इति मु० पु०
०तदातिवचनं इति मु० पु०।
१५।३३ ०नव सुयौवन० इति मु० पु०।
१५।३५ ०सुरी सुरवधू. किल० इति मु० पु०।
१५।३७ ०स कृतार्थो न संशयः॥ इति ग० पु०।
०भवेन्नरः॥ इति मु० पु०।
१६।७ ०स्वर्णाश्रृङ्गस्फुरद्युतिः। इति क० पु०।
१६।१० ०पुष्पसङ्घैः० इति क० पु०।
१६।१५ पार्षदाख्याः सव्यजनाः० इति क० मु० पु०।

१६।१७ ०यूथाश्च जग्मु श्रीकृष्ण सन्निधिम् ॥ इति मु० पु० ।
१६।१६ ०श्वेतवर्णा मुक्ता० इति मु० पु० ।
१६।२७ ०रासे रत्येव मकरध्वज.। इति क० पु० ।
१६।३३ तया हो हेमवल्ल्ये० इति क० पु० ।
१६।३८ ०यथास्मि मुद्रिका यथा ॥ इति ग० पु० ।
०मुद्रिता नृप ॥ इति क० पु०।
१६।३६ ०मनोरथाश्चलल्लसत्प्रसूना हरिण।० इति मु० पु० ।

१७।३ ०रम्ये तस्थतुः० इति मु० पु० ।
१७।७ ललिनाश्च कम्बुमणि० इति ग० पु० ।
१७।८ ०रत्नानि मया तस्यै ददौ पुनः। इति क० पु० ।
०रत्नानि ददुरन्याश्च गोपिकाः। इति ग० पु० ।
१७।१० आनन्दाद्या सखी० इति ग० पु० ।
१७।११ तासां मौक्तिकमालोकं ददौ० इति ग० पु० ।
१७।१३ नास्ति ग० पु० ।
१७।२१ ०शीतलो वायुर्ववौ गन्ध-मनोहरः। इति मु० पु० ।
तेन गोपीगणाः सर्वे० इति मु० पु० ।
१७।२६ ०वृन्द समाकुलम्। इति क० पु० ।
१७।३० श्लोकपूर्वार्द्धं नास्ति क० मु० पु० ।
१७।३२ मोहनी मालती० इति ग० पु० ।
१७।३५ ०मुरयष्टिसुकांस्यकै· ॥ इति क० पु० ।
०सुय.ष्टिवसुकांस्यकैः ॥ इति ग० पु० ।
१७।३६ ०मालकौशकम् ॥ इति ग० मु० पु० ।
१७।३७ ०हिण्डोल० इति ग० पु० ।
१७।४१ विकचन्माधवी० इति क० मु० पु० ।

१८।२ ०बकुलानां वने नृप। इति ग० पु० ।
१८।५ ०जातास्तत्र देव व्रजाङ्गनाः ॥ इति ग० पु० ।
१८।१४ ०पेशस्कृतमेय कीट० इति

क० पु० ।
०नित्यं नयेशस्कृतमेत्य कीट० इति ग० पु० ।
१८।१५ नास्ति क० पु० ।
१८।१६ नास्ति क० पु० ।
०भगवत्पादचिह्निताः॥ इति ग० पु० ।
१८।१८ ०सङ्केतवन० इति ग० पु० ।
१८।२१ ०कुशविन्दुभिः ॥ इति ग० पु० ।
१८ २२ नीलशङ्ख० इति मु० पु० ।
१८।२८ ०पादपद्मं कोकिला० इति मु० पु० ।
१८।२९ ०स्त्वा मां नेष्यन्ति सर्वत.॥ इति क० ग० पु० ।
१८।३१ ०खेदयुक्ता० इति मु० पु० ।
०नयसि प्रियाम्॥ इति ग० पु० ।
१८।३२ ०राधिकेश्वरः। इति ग० मु० पु० ।
१८।३६ ०स्कन्धयाने स्थितां० इति मु० पु० ।
१८।४१ ०न्मानिनो यानं० इति ग० पु० ।

१९।३ तापादिमुक्तजन० इति ग० पु० ।
देवादिमुक्तजन० इति मु० पु० ।
१९।८ ०भृशार्त्ताः ॥ इति ग० पु० ।
१९।१० नास्ति क० मु० पु० ।
०शरण्य पट्टं शरण्यम् ॥ इति ग० पु० ।
१९।१३ ०ज्ञानेद्रियायवे ॥ इति क० पु० ।
१९।१५ उत्तरार्द्धं नास्ति ग० पु० ।
१९।२३ श्लोकपूर्वार्द्धं नास्ति ग० पु० ।
१९।२६ ०श्रीराधारूपमेवच ॥ इति मु० पु० ।
१९।२७ तदा क्षीरसमुद्रोऽभूल्लहरि-लोलं० इति ग० पु० ।
१९।२८ नास्ति ग० पु०
१९।३२ कालिन्दीजलकेलिञ्च चकार हरिमाधवः ॥ इति ग० पु० ।
०जलवेगेषु कलाकेलिं चकार ह ॥ इति मु० पु० ।
१९।३७ वैजयन्तीमादधान.० इति मु० पु० ।

२०।४ करीलै विल्वभि० इति ग० पु० ।

०तालेश्च सङ्कुलं० इति ग० मु० पु० ।

२०।४ महत्पुण्यवनं कृष्णो ययौ० इति ग० मु० पु० ।

२०।२३ क्रमव्यत्ययेन वर्त्तते ग० पु० ।

२०।२६ ०यदूद्वह । इति ग० मु० पु० ।

यत्नेन्द्र च त्वया० इति ग० पु० ।

०प्रेमनिश्चितम् ॥ इति मु० पु० ।

२०।३३ ०ज्वलज्जिह्वं० इति ग० पु० ।

०गोप्यऽतितत्रसुः ॥ इति मु० पु० ।

२०।३६ क्रमव्यत्ययेन वर्त्तते ग० पु० ।

२०।३६ ०तटं प्राप्तः० इति क० मु० पु० ।

०शालमुद्यम्य० इति ग० मु० पु० ।

२०।४० ०वृत्तो वाणाहतो० इति ग० पु० ।

२०।४१ ०मुष्टिना तं जघान० इति ग० मु० पु० ।

२०।४३ नास्ति क० ग० पु० ।

२०।४६ ०मणिपाणियुतः० इति ग० पु० ।

२१।२ ०लीना जाता० इति मु० पु० ।

२१।६ ०गोपीगणैरिह ॥ इति क० पु० ।

२१।८ मालकंसं भैरवञ्च० इति मु० पु० ।

२१।६ हिण्डोलनं० इति ग० पु० ।

हिन्दोलञ्च० इति मु० पु० ।

२१।१४ मनोजो यदुराजानां० इति ग० पु० ।

मनोजोद्यदुराजानां० इति क० पु० ।

२१।१५ मृदङ्गं वादयन्त्यस्ता० इति मु० पु० ।

०वादयन्त्यः का गायन्तो० इति क० पु० ।

२१।२० ०शनैः शोभमानं चक्रे० इति ग० पु० ।

०शनैः शोघनं तच्चक्रे० इति क० पु० ।

२१।२२ पुंवेशनायकाः० इति क० ग० पु० ।

२१।३० ०हरौ ध्यान० इति मु० पु० ।
हृत्पुण्डरीकं श्री० इति क० पु० ।
२१।३२ ०जातः खिन्नो महामुनिः । इति ग० पु० ।
०खिन्नो जातो महामुनिः । इति मु० पु० ।
२१।३४ ०स यत्र वै ॥ इति क० पु० ।
२१।३५ क्रमव्यत्ययेन वर्त्तते ग० पु० ।
२१।३७ तदा मुनि· खिन्न० इति मु० पु० ।
२१।३७ श्लोकोत्तरार्द्धं नास्ति ग० पु० ।
२१।३८ श्लोकपूर्वार्द्धं नास्ति ग० पु० ।
२१।३९ ०रमां वैकुण्ठवासिनीम् ॥ इति मु० पु० ।
२१।४० न दृष्टस्तत्र भक्तेषु० इति मु० पु० ।
०मुनीन्द्रो गोलोकं सर्वोत्कृष्टं० इति ग० पु० ।
२१।४८ त एव जानन्ति हि नैरपेक्ष्यं० इति ग० पु० ।
०जानन्ति जनैरपेक्ष्यं० इति मु० पु० ।
२१।५० ब्रह्मात्मिका चाद्य कृता निशीथिनी० इति ग० पु० ।
२२।१ ०शिवश्चासुरिणा सह । इति ग० पु० ।
०शिवोऽथासुरिणा सह । इति मु० पु० ।
२२।४ नास्ति ग० पु० ।
२२।११ ०निलनीलैजत्तरु० इति मु० पु० ।
०निललीनैश्चतरु० इतिग० पु० ।
२२।१२ सदा मण्डप० इति मु० पु० ।
सनामण्डप० इति ग० पु० ।
२२।१३ ०मधुरध्वनैः ॥ इति मु० पु० ।
०मधुरस्वनैः ॥ इति ग०पु० ।
२२।१९ ०प्रतीकाशं मौलिनं० इति मु० पु० ।
०प्रतीकाशं मौलिनं नन्दने वनम् । इति ग० पु० ।
२२।२५ ०गोविन्द कुञ्जपतये किल० इति ग० पु० ।
२२।२७ ०मुनिं प्राह० इति ग० मु०

पु० ।

२२।२६ ०मनसोऽन्नीयतामीप्सितो० इति ग० पु० ।

२२।३० नमोऽस्तु भूमन्० इति मु० पु० ।

न रोचतेऽन्योन्यतमत्वदं० इति मु० पु० ।

न रोचतेऽन्योन्यमतस्त्वदं० इति ग० पु० ।

२२।३१ ०वृन्दारण्ये मनोहरे । इति मु० पु० ।

२२।३२ शिवोऽपि चासुरिमुनिर्नित्यं० इति मु० पु० ।

०नित्यवासं० इति ग० पु० ।

२२।३४ एव ब्रह्मात्मिका रात्रि.० इति ग० पु० ।

२२।३७ पुण्यकामप्रदं चैव श्रोतॄणां० इति ग० पु० ।

२३।४ ०भूश्च तिस्रः पत्न्यो० इति क० मु० पु० ।

रासेश्वरी प्रिया० इति ग० पु० ।

२३।६ अतीव विमुखा जाता० इति क० पु० ।

२३।७ कोलश्विनी समा० इति क० पु० ।

२३।१० ०सा निर्भर्त्स्य० इति ग० पु० ।

२३।१२ ०योजनमायामं इति मु० पु० ।

०सहसा नदी ॥ इति ग० मु० पु० ।

२३।१३ सहसा कुण्डली० इति क० मु० पु० ।

०मुद्रिता तथा ॥ इति मु० पु० ।

२३।१७ ०शिवो बालकलीलया ॥ इति ग० पु० ।

२३।२२ नैमित्तिकञ्च० इति मु० पु० ।

२३।२५ ०लक्षयोजनम् । इति ग० पु० ।

२३।२७ कदा तव न विच्छेदो मया० इति ग० पु० ।

कदा न ते मे विच्छेदो महा० इति मु० पु० ।

२३।३१ ०तन्निकुञ्ज०० इति मु० पु० ।

०गोलोकेशो विराजते ॥ इति मु० पु० ।

२३।३३ अन्तिमं पादद्वयं मत्कल्पि-
तम्। नास्ति क० मु०
पु०।
रविष्यति विहारार्थं राधसे
ह्यत्र त्वं स्वयम्॥ इति ग०
पु०।

२३।३८ ०वियोगान्ते० इति मु०
पु०।

---

श्रीगणेशाय नमः

# गर्गसंहिता

## ( गिरिराजखण्डः )

बहुलाश्व उवाच

कथं दधार भगवान् गिरिं गोवर्द्धनं वरम् ।
उच्छिलीन्ध्रं यथा बालो हस्तेनैकेन लीलया ॥ १
परिपूर्णतमस्यास्य श्रीकृष्णस्य महात्मनः ॥
वदैतत् चरितं दिव्यमद्भुतं मुनिसत्तम ॥ २

नारद उवाच

वार्षिक्यं हि करं राज्ञे यथा शक्राय वै तथा ।
बलिं ददुः प्रावृडन्ते गोपाः सर्वे कृषीवलाः ॥ ३
महेन्द्रयागसम्भारचयं दृष्ट्वैकदा हरिः ।
नन्दं पप्रच्छ सदसि बल्लवानाञ्च शृण्वताम् ॥ ४

भगवानुवाच

शक्रस्य पूजनं ह्येतत् किं फलञ्चास्य विद्यते ।
लौकिकं वा वदन्त्येतदथवा पारलौकिकम् ॥ ५

नन्द उवाच

शक्रस्य पूजनं ह्येतद्भुक्तिमुक्तिकरं परम् ।
एतद्विना नरो भूमौ जायते न सुखी क्वचित् ॥ ६

भगवानुवाच

शक्रादयो देवगणाश्च सर्वतो
भुञ्जन्ति ये स्वर्गसुखं स्वकर्मभिः ।

विशन्ति ते मर्त्यपदं शुभक्षये
तत्सेवनं विद्धि न मुक्तिकारणम् ॥ ७
भय भवेद्धे परमेष्ठिनो यतो
वार्ता तु का कौ किल तत्कृतात्मनाम् ।
तस्मात् परं कालमलं तमेव हि
सदा बलिष्ठं सुबुधा विदुः परे ॥ ८
ततस्तमाश्रित्य सुकर्मभिः परं
भजेद्धरिं यज्ञपतिं सुरेश्वरम् ।
विसृज्य सर्वं मनसा कृतेः फलं
व्रजेत् परं मोक्षमसौ नचान्यथा ॥ ९
गोविप्रसाध्वग्निसुराः श्रुतिस्तथा
धर्मश्च यज्ञाधिपतेर्विभूतयः ।
धिष्ण्येषु चैतेषु हरिं भजन्ति ये
सदा त्विहामुत्र सुखं व्रजन्ति ते ॥ १०
समुत्थितोऽसौ हरिवक्षसो गिरि
र्गोवर्धनो नाम गिरीन्द्रराजराट् ।
समागतो ह्यत्र पुलस्त्यतेजसा
यद्दर्शनाज्जन्म पुनर्न विद्यते ॥ ११
सम्पूज्य गोविप्रसुरान् महाद्रये
दातव्यमद्यैव परं ह्युपायनम् ।
एष प्रियो मे मखराज एव हि
नचेद्यथेच्छास्ति कुरु व्रजेश्वर ॥ १२

नारद उवाच

तेषां मध्येऽथ सन्नन्दो गोपो वृद्धोऽतिनीतिवित् ।
अतिप्रसन्नः श्रीकृष्णमाह नन्दस्य शृण्वतः ॥ १३

सन्नन्द उवाच
हे नन्दसूनो हे तात त्वं साक्षाज्ज्ञानशेवधिः ।
कर्तव्या केन विधिना पूजाद्रेर्वद तत्वतः ॥ १४
भगवानुवाच
आलिप्य गोमयेनापि गिरिराजभुवं ह्यध. ।
धृत्वाथ सर्वसम्भारं भक्तियुक्तो जितेन्द्रियः ॥ १५
सहस्रशीर्षा मन्त्रेणाद्रये स्नानञ्च कारयेत् ।
गङ्गाजलेन यमुनाजलेनापि द्विजैः सह ॥ १६
शुक्लगोदुग्धधाराभिस्ततः पञ्चामृतैर्गिरिम् ।
स्नापयित्वा गन्धपुष्पैः पुनः कृष्णाजलेन वै ॥ १७
वस्त्रं दिव्यञ्च नैवेद्यमासनं सर्वतोऽधिकम् ।
मालालङ्कारनिचयं धृत्वा दीपावलिं पराम् ॥ १८
ततः प्रदक्षिणां कुर्यान्नमस्कुर्यात्ततः परम् ।
कृताञ्जलिपुटो भूत्वा त्विदमेवमुदीरयेत् ॥ १९
नमो वृन्दावनाङ्काय तुभ्यं गोलोकमौलिने ।
पूर्णब्रह्मातपत्राय नमो गोवर्द्धनाय च ॥ २०
पुष्पाञ्जलिं ततः कुर्यान्नीराजनमतःपरम् ।
घण्टाकांस्यमृदङ्गाद्यैर्वादित्रैर्मधुरस्वनैः ॥ २१
वेदाहमेतं मन्त्रेण वर्षं लाजैः समाचरेत् ।
तत्समीपे चान्नकूटं कुर्याच्छ्रद्धासमन्वितः ॥ २२
कचोलानां चतुःषष्टिपञ्चपङ्क्तिसमन्वितम् ।
तुलसीदलमिश्रैश्च श्रीगङ्गायमुनाजलैः ॥ २३
षट्पञ्चाशत्तमैर्भोगैः कुर्यात् सेवां समाहितः ।
ततोऽग्नीन् ब्राह्मणान् पूज्य गाः सुरान् गन्धपुष्पकैः ॥ २४
भोजयित्वा द्विजवरान् सौगन्धैर्मिष्टभोजनैः ।
अन्येभ्यश्चाश्वपाकेभ्यो दद्याद्भोजनमुत्तमम् ॥ २५

गोपीगोपालवृन्दैश्च गवां नृत्यञ्च कारयेत् ।
मङ्गलैर्जयशब्दैश्च कुर्याद् गोवर्द्धनोत्सवम् ॥ २६
यत्र गोवर्द्धनाभावस्तत्र पूजाविधिं शृणु ।
गोमयैर्गोवर्द्धनं कुर्यात्तदाकारं परोन्नतम् ॥ २७
पुष्पव्यूहैर्लताजालैरीषिकाभिः समन्वितः ।
पूजनीयः सदा मर्त्यैर्गिरिर्गोवर्द्धनो भुवि ॥ २८
शिलासमानं पुरटं क्षिप्त्वाद्रौ तच्छिलां नयेत् ।
गृह्णीयाद् यो विना स्वर्णं स महारौरवं व्रजेत् ॥ २९
शालग्रामस्येव तस्याः सेवनं कारयेत् सदा ।
पातकं न स्पृशेत्तं वै पद्मपत्रं यथा जलम् ॥ ३०
गिरिराजशिलासेवां यः करोति द्विजोत्तमः ।
सप्तद्वीपमहीतीर्थावगाहफलमेति सः ॥ ३१
गिरिराजमहापूजां वर्षे वर्षे करोति यः ।
इह सर्वसुखं भुक्त्वाऽमुत्र मोक्षं प्रयाति सः ॥ ३२

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारदबहुलाश्व-
संवादे गिरिराजपूजाविधिवर्णनं नाम
प्रथमोऽध्यायः ॥ १

नारद उवाच

श्रुत्वा वचो नन्दसुतस्य साक्षा
च्छ्रीनन्दसन्नन्दवरा व्रजेशाः ।
सुविस्मिताः पूर्वकृतं विहाय
प्रचक्रिरे श्रीगिरिराजपूजाम् ॥ १

नीत्वा बलीन् मैथिल नन्दराजः
सुतौ समानीय च रामकृष्णौ ।
यशोदया श्रीगिरिपूजनार्थं
समाययौ गर्गयुतः प्रसन्नः ॥ २

त्वरं समारुह्य महोन्नतं गजं
विचित्रवर्णं धृतहेमशृङ्खलम् ।
गोवर्द्धनान्तं प्रययौ गवां गणैः
शरद्धनैः शक्र इव प्रियायुतः ॥ ३

नन्दोपनन्दा वृषभानवश्च
पुत्रैश्च पौत्रैश्च सहाङ्गनाभिः ।
समाययुः श्रीगिरिराजपार्श्वं
सर्वं समानीय च यज्ञभारम् ॥ ४

सहस्रबालार्कपरिस्फुरद्द्युति
मारुह्य राधा शिबिकां सखीगणैः ।
शचीव दिव्याम्बररत्नभूषणा
बभौ चकोरी भ्रमरीसमाकुला ॥ ५

समागते पार्श्वगते स्वलङ्कृते
राजन् सखीकोटिसमावृते परे ।
सख्यौ विभाते ललिताविशाखे
चन्द्रानने चालितचारुचामरे ॥ ६

एवं रमा वै विरजा च माधवी
माया च कृष्णा नृप जह्नुनन्दिनी ।
द्वात्रिंशदष्टौ च तथाहि षोडश
सख्यश्च तासां किल यूथ आगताः ॥ ७
श्रीमैथिलानां किल कोशलानां
तथा श्रुतीनामृषिरूपकाणाम् ।
तथा त्वयोध्यापुरवासिनीनां
श्रीयज्ञसीतावनवासिनीनाम् ॥ ८
रमादिवैकुण्ठनिवासिनीनां
तथोर्ध्ववैकुण्ठनिवासिनीनाम् ।
महोज्ज्वलद्वीपनिवासिनीनां
ध्रुवादिलोकाचलवासिनीनाम् ॥ ९
समुद्रजादिव्यगुणत्रयाणा
मदिव्यवैमानिकजौषधीनाम् ।
जालन्धरीणाञ्च समुद्रकन्या-
बर्हिष्मतीजासुतलस्थितानाम् ॥ १०
तथाप्सरःसर्वफणीन्द्रजाना
मासाञ्च यूथा व्रजवासिनीनाम् ।
समाययुः श्रीगिरिराजपार्श्वं
स्वलङ्कृताः पाणिबलिप्रदीपाः ॥ ११
गोपाश्च वृद्धाः शिशवो युवानः
पीताम्बरोष्णीषकबर्हमण्डिताः ।
श्रीहारगुञ्जावनमालिकाभी
रेजुः समेता नवयष्टिवेणुभिः ॥ १२
श्रुत्वोत्सवं शैलवरस्य मन्मुखाद्
गङ्गाधरो बद्धकपर्दमण्डलः ।

कपालभृन्नस्थिजभस्मरूषितः
सर्पालिमालावलयैर्विभूषितः ॥ १३
धत्तूरभङ्गाविषपानविह्वलो
हिमाद्रिपुत्रीसहितो गणावृतः ।
आरुह्य नन्दीश्वरमादिवाहनं
समाययौ श्रीगिरिराजमङ्गलम् ॥ १४
राजर्षिविप्रर्षिसुरर्षयश्च
सिद्धेशयोगेश्वरहंसमुख्याः ।
आजग्मुराराद् गिरिदर्शनार्थं
सहस्रशो विप्रगणाः समेताः ॥ १५
गोवर्द्धनो रत्नशिलामयोऽभूत्
सुवर्णशृङ्गैः परितः स्फुरद्भिः ।
मत्तालिभिर्निर्झरसुन्दरैभि
र्दरीभिरुच्चाङ्ककरीव राजन् ॥ १६
तदैव शैलाः किल मूर्तिमन्तः
सोपायना मेरुहिमाचलाद्याः ।
नेमुर्गिरिं मङ्गलपाणयस्तं
गोवर्द्धनं रूपधरं गिरीन्द्राः ॥ १७
द्विजैश्च गोवर्द्धनदेवपूजनं
कृत्वाच्युतोक्तं द्विजवह्निगोधनम् ।
सम्पूज्य धृत्वा सुधनं महाधनं
बलिं ददौ श्रीगिरये व्रजेश्वरः ॥ १८
नन्दोपनन्दैर्वृषभानुभिश्च
गोपीगणैर्गोपजनैः प्रहर्षितैः ।
गायद्भिरानर्तनवाद्यतत्परै
श्चकार कृष्णोऽद्रिवरप्रदक्षिणाम् ॥ १९

देवेषु वर्षत्सु च पुष्पवर्षं
जनेषु वर्षत्सु च लाजसङ्घम् ।
रेजे महाराज इवाध्वरे जयै
गोवर्द्धनो नाम गिरीन्द्रराजराट् ॥ २०
कृष्णोऽपि साक्षाद् व्रजशैलमध्याद्
धृत्वातिदीर्घं किल चान्यरूपम् ।
शैलोऽस्मि लोकानिति भाषयन् सन्
जघास सर्वं कृतमन्नकूटम् ॥ २१
गोपालगोपीगणवृन्दमुख्या
ऊचुः स्म संवीक्ष्य गिरेः प्रभावम् ।
दातुं वरं तत्र समुद्यतं तं
सुविस्मिता हर्षितमानसास्ते ॥ २२
ज्ञातोऽसि गोपैर्गिरिराजदेवः
प्रदर्शितो नन्दसुतेन साक्षात् ।
नो गोधनं वा किल बन्धुवर्गो
वृद्धिं समायातु दिने दिने कौ ॥ २३
तथास्तु चोक्त्वा गिरिराजराजो
गोवर्द्धनो दिव्यवपुर्दधानः ।
किरीटकेयूरमनोहराङ्गः
क्षणेन तत्रान्तरधीयतारात् ॥ २४
नन्दोपनन्दा वृषभानवश्च
बलः सुचन्द्रो वृषभानुराजः ।
श्रीनन्दराजश्च हरिश्च गोपा
गोप्यश्च सर्वा निजगोधनैश्च ॥ २५
द्विजाश्च योगेश्वरसिद्धसङ्घाः
शिवादयश्चान्यजनाश्च सर्वे ।

नत्वाथ सम्पूज्य गिरिं प्रसन्नाः
स्वं स्वं गृहं जग्मुरनिच्छया च ॥ २६
श्रीकृष्णचन्द्रस्य परं चरित्रं
गिरीन्द्रराजस्य महोत्सवञ्च ।
मया तवाग्रे कथितं विचित्रं
नृणां महापापहरं पवित्रम् ॥ २७

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारदबहुलाश्व-
संवादे गिरिराजमहोत्सववर्णनं नाम
द्वितीयोऽध्यायः ॥ २

नारद उवाच

अथ मन्मुखतः श्रुत्वा स्वात्मयागस्य नाशनम् ।
गोवर्द्धनोत्सवं जातं कोपं चक्रे पुरन्दरः ॥ १
सांवर्तकं नाम गणं प्रलये मुक्तबन्धनम् ।
इन्द्रो व्रजविनाशाय प्रेषयामास सत्वरम् ॥ २
अथ मेघगणाः क्रुद्धा ध्वनन्तश्चित्रवर्णिनः ।
कृष्णाभाः पीतभाः केचित् केचिच्च हरितप्रभाः ॥ ३
इन्द्रगोपनिभाः केचित् केचित् सिन्दूरसन्निभाः ।
केचित् कर्पूरभा मेघा नीलपङ्कजसुप्रभाः ॥ ४
हस्तितुल्यान् वारिबिन्दून् ववृषुस्ते मदोद्धताः ।
हस्तिशुण्डासमाभिश्च धाराभिश्चञ्चलाश्च ये ॥ ५
निपेतुः कोटिशश्चाद्रिकूटतुल्योपला भृशम् ।
वाता वबुः प्रचण्डाश्च क्षेपयन्तस्तरून् गृहान् ॥ ६
प्रचण्डवज्रपातानां मेघानामन्तकारिणाम् ।
महाशब्दोऽभवद्भूमौ मैथिलेन्द्र भयङ्करः ॥ ७
ननाद तेन ब्रह्माण्डं सप्तलोकैर्बिलैः सह ।
विचेलुर्दिग्गजास्तारा एजद्भू खण्डमण्डलम् ॥ ८
भयभीता गोपमुख्याः सकुटुम्बा जिजीविषः ।
शिशून् स्वान् स्वान् पुरस्कृत्य नन्दमन्दिरमाययुः ॥ ९
श्रीनन्दनन्दनं नत्वा सबलं परमेश्वरम् ।
ऊचुर्व्रजौकसः सर्वे भयार्ताः शरणं गताः ॥ १०

गोपा ऊचुः

राम राम महाबाहो कृष्ण कृष्ण व्रजेश्वर ।
पाहि पाहि महाकष्टादिन्द्रदत्तान्निजान् जनान् ॥ ११

हित्वेन्द्रयागं त्वद्वाक्यात् कृतो गोवर्द्धनोत्सवः ।
अद्य शक्रे प्रकुपिते कर्तव्यं किं वदाशु नः ॥ १२

नारद उवाच

व्याकुलं गोकुलं वीक्ष्य गोपीगोपालसङ्कुलम् ।
सगोधनं गोकुलेशो गोपानाह निराकुलः ॥ १३

भगवानुवाच

मा भैष्ट यातादितटं सर्वैः परिकरैः सह ।
वः पूजा प्रहृता येन स रक्षां संविधास्यति ॥ १४

नारद उवाच

इत्युक्त्वा स्वजनैः सार्द्धमेत्य गोवर्धनं हरिः ।
समुत्पाट्य दधाराद्रिं हस्तेनैकेन लीलया ॥ १५

यथोच्छिलीन्ध्रं शिशुरर्भो गजः
स्वपुष्करेणैव च पुष्करं गिरिम् ।
धृत्वा बभौ श्रीव्रजराजनन्दनः
कृपाकरोऽसौ करुणामयः प्रभुः ॥ १६
अथाह गोपान् विशताद्रिगर्तं
हे तात मातर्व्रजवल्लवेशाः ।
सोपस्करैः सर्वधनैश्च गोभि
रत्रैव शक्रस्य भयं न किञ्चित् ॥ १७

इत्थं हरेर्वचः श्रुत्वा गोपा गोधनसंयुताः ।
सकुटुम्बोपस्करैश्च विविशुः श्रीगिरेस्तलम् ॥ १८
वयस्या बालकाः सर्वे कृष्णोक्ताः सबला नृप ।
स्वान् स्वांश्च लगुडानद्रेरवष्टम्भान् प्रचक्रिरे ॥ १९
जलौघमागतं वीक्ष्य भगवांस्तद्गिरेरधः ।
सुदर्शनं तथा शेषं मनसाज्ञां चकार ह ॥ २०

कोटिसूर्यप्रभं चाद्रेरूर्ध्वं चक्रं सुदर्शनम् ।
धारासंपातमपिबदगस्त्य इव मैथिल ॥ २१
अधोऽधस्तं गिरिं शेषः कुण्डलीभूत आस्थितः ।
रुरोध तज्जलं दीर्घं यथा वेला महोदधिम् ॥ २२
सप्ताहं सुस्थिरस्तस्थौ गोवर्द्धनधरो हरिः ।
पश्यन्तः श्रीकृष्णचन्द्रं चकोरा इव ते स्थिताः ॥ २३
मत्तमैरावतं नागं समारुह्य पुरन्दरः ।
ससैन्यः क्रोधसंयुक्तो व्रजमण्डलमाययौ ॥ २४
दूराद्विक्षेप वज्रं स्वं नन्दगोष्ठजिघांसया ।
स्तम्भयामास शक्रस्य सवज्रं माधवो भुजम् ॥ २५
भयभीतस्तदा शक्रः सांवर्तकगणै सह ।
दुद्राव सहसा देवैर्यथेभः सिंहताडितः ॥ २६
तदैवार्कोदयो जातो गता मेघा इतस्ततः ।
वाता उपरताः सद्यो नद्यः स्वल्पजला नृप ॥ २७
विपङ्कं भूतलं जातं निर्मलं खं बभूव ह ।
चतुष्पदाः पक्षिणश्च सुखमापुस्ततस्ततः ॥ २८
हरिणोक्तास्तदा गोपा निर्ययुर्गिरिगर्ततः ।
स्वं स्वं धनं गोधनञ्च समादाय शनैः शनै ॥ २९
निर्यातेति वयस्यांश्च प्राह गोवर्द्धनोद्धरः ।
ते तमाहुश्च निर्गच्छ धारयामोऽद्रिमोजसा ॥ ३०
इति वादपरान् गोपान् गोवर्द्धनधरो हरिः ।
तदर्द्धञ्च गिरेर्भारं प्रादात्तेभ्यो महामनाः ॥ ३१
पतितास्तेन भारेण गोपबालाश्च निर्बलाः ॥ ३२
करेण तान् समुत्थाप्य स्वस्थाने पूर्ववद् गिरिम् ।
सर्वेषां पश्यतां कृष्णः स्थापयामास लीलया ॥ ३३

नारद उवाच

अथ देवगणैः सार्द्धं शक्रस्तत्र समागतः।
गतमानो गिरौ कृष्णं रहसि प्रणनाम ह ॥ १

इन्द्र उवाच

त्वं देवदेवः परमेश्वरः प्रभुः
पूर्णः पुराणः पुरुषोत्तमोत्तमः।
परात्परस्त्वं प्रकृतेः परो हरि
मां पाहि पाहि द्युपते जगत्पते ॥ २
दशावतारो भगवांस्त्वमेव
रिरक्षया धर्मगवां श्रुतेश्च।
अद्यैव जातः परिपूर्णदेवः
कंसादिदैत्येन्द्रविनाशनाय ॥ ३
त्वन्मायया मोहितचित्तवृत्ति
मदोद्धतं हेलनभाजनं माम्।
पितेव पुत्रं द्युपते क्षमस्व
प्रसीद देवेश जगन्निवास ॥ ४

ॐ नमो गोवर्द्धनोद्धरणाय गोविन्दाय गोकुलनिवासाय गोपालाय गोपालपतये गोपीजनभर्त्रे गिरिराजोद्धर्त्रे करुणानिधये जगद्विधये जगन्मङ्गलाय जगन्निवासाय जगन्मोहनाय कोटिमन्मथमन्मथाय वृषभानुसुतावराय श्रीनन्दराजकुलप्रदीपाय श्रीकृष्णाय परिपूर्णतमाय असङ्ख्यब्रह्माण्डपतये गोलोकधामधिषणाधिपतये स्वयं भगवते सबलाय

नमस्ते नमस्ते ॥ ५

नारद उवाच

इति शक्रकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
सर्वसिद्धिर्भवेत्तस्य सङ्कटान्न भयं भवेत् ॥ ६
इति स्तुत्वा हरिं देवं सर्वैर्देवगणैः सह ।
कृताञ्जलिपुटो नम्रः प्रणनाम पुरन्दरः ॥ ७
अथ गोवर्द्धने रम्ये सुरभिर्गौः समुद्गजा ।
स्नापयामास गोपेशं दुग्धधाराभिरात्मनः ॥ ८
शुण्डादण्डैश्चतुर्भिश्च द्युगङ्गाजलपूरितैः ।
श्रीकृष्णं स्नापयामास मत्त ऐरावतो गजः ॥ ९
ऋषयः श्रुतिभिः सर्वे देवा गन्धर्वकिन्नराः ।
तुष्टुवुः श्रीहरिं राजन् हर्षिताः पुष्पवर्षिणः ॥ १०
कृष्णाभिषेके सञ्जाते गिरिर्गोवर्द्धनो महान् ।
द्रवीभूतोऽवहद्राजन् हर्षानन्दादितस्ततः ॥ ११
प्रसन्नो भगवांस्तस्मिन् कृतवान् हस्तपङ्कजम् ।
तद्धस्तचिह्नमद्यापि दृश्यते तद्गिरौ नृप ॥ १२
तत्तीर्थञ्च परं भूतं नराणां पापनाशनम् ।
तत्रैव पादचिह्नं स्यात्तत्तीर्थं विद्धि मैथिल ॥ १३
ऐरावतस्य तत्रैव पादचिह्नं बभूव ह ।
सुरभेः पादचिह्नानि बभूवुस्तत्र मैथिल ॥ १४
द्युगङ्गाजलपातेन कृष्णस्नानेन मैथिल ।
तेन वै मानसीगङ्गा गिरौ जाताघनाशिनी ॥ १५
सुरभेर्दुग्धधाराभिर्गोविन्दस्नानतो नृप ।
जातो गोविन्दकुण्डोऽद्रौ महापापहरः परः ॥ १६
कदाचित्तस्मिन् दुग्धस्य स्वादुत्वं प्रतिपद्यते ।
तत्र स्नात्वा नरः साक्षाद् गोविन्दपदमाप्नुयात् ॥ १७

प्रदक्षिणीकृत्य हरिं प्रणम्य वै
दत्वा बलीस्तत्र पुरन्दरादयः ।
जयध्वनि कृत्य सुपुष्पवर्षिणो
ययुः सुराः सौख्ययुतास्त्रिविष्टपम् ॥ १८
कृष्णाभिषेकस्य कथां शृणोति यो
दशाश्वमेधावभृथाधिकं फलम् ।
प्राप्नोति राजेन्द्र स एव भूयसः
परं पदं याति परस्य वेधसः ॥ १९

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारद-
बहुलाश्वसंवादे श्रीकृष्णाभिषेको नाम
चतुर्थोऽध्यायः ॥ ४

नारद उवाच

एकदा सर्वगोपाला गोप्यो नन्दसुतस्य तत् ।
अद्भुतं चरितं दृष्ट्वा नन्दमाहुर्यशोमतीम् ॥ १

गोपा ऊचुः

हे गोपराज त्वद्वंशे कोऽपि जातो न चाद्रिधृक् ।
न क्षमस्त्वं शिलां धर्त्तुं सप्ताहं हे यशोमति ॥ २
क्व सप्तहायनो बालः क्वाद्रिराजस्य धारणम् ।
तेन नो जायते शङ्का तव पुत्रे महाबले ॥ ३
अयं बिभ्रद् गिरिवरं पङ्कजं गजराडिव ।
उच्छिलीन्ध्रं यथा बालो हस्तेनैकेन लीलया ॥ ४
गौरवर्णा यशोदे त्वं नन्द त्वं गौरवर्णधृक् ।
अयं कृष्णः कुतो जातः एतत्कुलविलक्षणम् ॥ ५
यद्वास्तु क्षत्रियाणान्तु बाल एतादृशो यथा ।
बलभद्रे न दोषः स्याच्चन्द्रवंशसमुद्भवे ॥ ६
ज्ञातेस्त्यागं करिष्यामो यदि सत्यं न भाषसे ।
गोपेषु चास्य वोत्पत्तिं वद चेन्न कलिर्भवेत् ॥ ७

नारद उवाच

श्रुत्वा गोपालवचनं यशोदा भयविह्वला ।
नन्दराजस्तदा प्राह गोपालान् क्रोधपूरितान् ॥ ८

नन्द उवाच

गर्गस्य वाक्य हे गोपा वदिष्यामि समाहितः ।
येन गोपगणा यूयं भवताशु गतव्यथाः ॥ ९
ककारः कमलाकान्त ऋकारो राम इत्यपि ।
षकारः षड्गुणपतिः श्वेतद्वीपनिवासकृत् ॥ १०

णकारो नारसिंहोऽयमकारो ह्यक्षरोऽग्निभुक् ।
विसर्गश्च तथा ह्येतौ नरनारायणावृषी ॥ ११
सम्प्रलीनाश्च षट्पूर्णा यस्मिञ्छुब्दे महात्मनि ।
परिपूर्णतमे साक्षात्तेन कृष्णः प्रकीर्तितः ॥ १२
शुक्लो रक्तस्तथा पीतो वर्णोऽस्यानुयुग धृतः ।
द्वापरान्ते कलेरादौ बालोऽयं कृष्णतां गतः ॥ १३
तस्मात् कृष्ण इति ख्यातो नाम्नायं नन्दनन्दनः ।
वसवश्चेन्द्रियाणीति तद्देवश्चित्त एव हि ॥ १४
तस्मिन् यश्चेष्टते सोऽपि वासुदेव इति स्मृतः ॥ १५
वृषभानुसुता राधा या जाता कीर्तिमन्दिरे ।
तस्याः पतिरयं साक्षात्तेन राधापतिः स्मृतः ॥ १६
परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ।
असङ्ख्यब्रह्माण्डपतिर्गोलोके धाम्नि राजते ॥ १७
सोऽयं तव शिशुर्जातो भारावतरणाय च ।
कंसादीनां वधार्थाय भक्तानां पालनाय च ॥ १८
अनन्तान्यस्य नामानि वेदगुह्यानि भारत ।
लीलाभिश्च भविष्यन्ति तत्कर्मसु न विस्मयः ॥ १९
इति श्रुत्वात्मजे गोपाः सन्देहं न करोम्यहम् ।
वेदवाक्यं ब्रह्मवचः प्रमाणं हि महीतले ॥ २०

गोपा ऊचुः

यद्यागतस्तव गृहे गर्गाचार्यो महामुनिः ।
तत्क्षणे नामकरणे नाहूता ज्ञातयस्त्वया ॥ २१
स्वगृहे नामकरणं भवता च कृतं शिशोः ।
तव चैतादृशी रीतिर्गुप्तं सर्वं गृहेऽपि यत् ॥ २२

नारद उवाच

एवं वदन्तस्ते गोपा निर्गता नन्दमन्दिरात् ।
वृषभानुपुरं जग्मुः क्रोधपूरितविग्रहाः ॥ २३
वृषभानुवरं साक्षान्नन्दराजसहायकम् ।
प्राहुर्गोपगणाः सर्वे ज्ञातेर्मदसमन्विताः ॥ २४

गोपा ऊचुः

वृषभानुवरस्त्वं वै ज्ञातिमुख्यो महामनाः ।
नन्दराजं त्यज ज्ञाते हे गोपेश्वर भूपते ॥ २५

वृषभानुवर उवाच

को दोषो नन्दराजस्य ज्ञातेस्तं संत्यजाम्यहम् ।
गोपेष्टो ज्ञातिमुकुटो नन्दराजो मम प्रियः ॥ २६

गोपा ऊचुः

न चेत्त्यजसि तं राजंस्त्यजामस्त्वां व्रजौकसः ।
त्वद्गृहे वर्द्धिता कन्योद्वाहयोग्या महामते ॥ २७
भवता ज्ञातिमुख्येन सम्पदुन्मदशालिना ।
न दत्ता वरमुख्याय कलुषं तव विद्यते ॥ २८
अद्य त्वां ज्ञातिसंभ्रष्टं पृथङ् मन्यामहे नृप ।
न चेच्छीघ्रं नन्दराजं त्यज त्यज महामते ॥ २९

वृषभानुवर उवाच

गर्गस्य वाक्यं हे गोपा वदिस्यामि समाहितः ।
येन गोपगणा यूयं भवताशु गतव्यथाः ॥ ३०
असङ्ख्यब्रह्माण्डपतिर्गोलोकेशः परात्परः ।
तस्मात् परो वरो नास्ति जातो नन्दगृहे शिशुः ॥ ३१

भुवो भारावताराय कंसादीनां वधाय च ।
ब्रह्मणा प्रार्थितः कृष्णो बभूव जगतीतले ॥ ३२
श्रीकृष्णपट्टराज्ञी या गोलोके राधिकाभिधा ।
त्वद्गेहे सापि सञ्जाता त्वं न जानासि तां पराम् ॥ ३३
अहं न कारयिष्यामि विवाहमनयोर्नृप ।
तयोर्विवाहो भविता भाण्डीरे यमुनातटे ॥ ३४
वृन्दावनसमीपे च निर्जने सुन्दरे स्थले ।
परमेष्ठी समागत्य विवाहं कारयिष्यति ॥ ३५
तस्माद्राधां गोपवर विद्ध्यर्द्धाङ्गीं परस्य च ।
लोकचूडामणेः साक्षाद्राज्ञीं गोलोकमन्दिरे ॥ ३६
यूयं सर्वेऽपि गोपाला गोलोकादागता भुवि ।
तथा गोपीगणा गावो गोकुले राधिकेच्छया ॥ ३७
एवमुक्त्वा गते साक्षाद्गर्गाचार्ये महामुनौ ।
तद्दिनादथ राधायां सन्देहं न करोम्यहम् ॥ ३८
वेदवाक्यं ब्रह्मवचः प्रमाणं हि महीतले ।
इति वः कथितं गोपाः किं भूयः श्रोतुमिच्छथ ॥ ३९

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारद-
बहुलाश्वसंवादे गोपविवादो नाम
पञ्चमोऽध्यायः ॥ ५

नारद उवाच

वृषभानुवरस्येदं वचः श्रुत्वा व्रजौकसः ।
पुनरूचुः शान्तिगता विस्मिता मुक्तसंशयाः ॥ १

गोपा ऊचुः

समीचीनं वचो राजन् राधेयन्तु हरिप्रिया ।
तत्प्रभावेण ते दीर्घं वैभवं दृश्यते भुवि ॥ २
सहस्रशो गजा मत्ताः कोटिशोऽश्वाश्च चञ्चलाः ।
रथाश्च देवधिष्ण्याभाः शिबिकाः कोटिशः शुभाः ॥ ३
कोटिशः कोटिशो गावो हेमरत्नमनोहराः ।
मन्दिराणि विचित्राणि रत्नानि विविधानि च ॥ ४
सर्वसौख्यं भोजनाढ्यं दृश्यते साम्प्रतं तव ।
कंसोऽपि धर्षितो जातो दृष्ट्वा ते बलमद्भुतम् ॥ ५
कान्यकुब्जपतेः साक्षाद् भलन्दननृपस्य च ।
जामाता त्वं महावीरः कुबेर इव कोशवान् ॥ ६
त्वत्समं वैभवं नास्ति नन्दराजगृहे क्वचित् ।
कृषीवलो नन्दराजो गोपतिर्दीनमानसः ॥ ७
यदि नन्दसुतः साक्षात् परिपूर्णतमो हरिः ।
सर्वेषां पश्यतां नस्तत् परीक्षां कारय प्रभो ॥ ८

नारद उवाच

तेषां वाक्यं ततः श्रुत्वा वृषभानुवरो महान् ।
चकार नन्दराजस्य वैभवस्य परीक्षणम् ॥ ९
कोटि दामानि मुक्तानां स्थूलानां मैथिलेश्वर ।
एकैका येषु मुक्ताश्च कोटिमौल्याः स्फुरत्प्रभाः ॥ १०

निधाय तानि पात्रेषु वृणानैः कुशलैर्जनैः ।
प्रेषयामास नन्दाय सर्वेषां पश्यतां नृप ॥ ११
नन्दराजसभां गत्वा वृणानाः कुशला भृशम् ।
निधाय दामपात्राणि नन्दमाहुः प्रणम्य तम् ॥ १२

वृणाना ऊचुः

विवाहयोग्यां नवकञ्जनेत्रां
कोटीन्दुबिम्बद्युतिमादधानाम् ।
विज्ञाय राधां वृषभानुमुख्य
श्चक्रे विचारं सुवरं विचिन्वन् ॥ १३
तवाङ्गजं दिव्यमनङ्गमोहन
गोवर्द्धनोद्धारणदोःसमुद्भटम् ।
संवीक्ष्य चास्मान् वृषभानुर्वन्दितः
संप्रेषयामास विशाम्पते प्रभो ॥ १४
वरस्य चाङ्के भरणाय पूर्वं
मुक्ताफलानां निचयं गृहाण ।
इतश्च कन्यार्थमलं प्रदेहि
सैषा हि चास्मत्कुलजा प्रसिद्धिः ॥ १५

नारद उवाच

दृष्ट्वा द्रव्यं परं नन्दो विस्मितोऽपि विचारयन् ।
प्रष्टुं यशोदां तत्तुल्यं नीत्वा चान्तःपुरं ययौ ॥ १६
चिरं दध्यौ तदा नन्दो यशोदा च यशस्विनी ।
एतन्मुक्तासमानन्तु द्रव्यं नास्ति गृहे मम ॥ १७
लोके लज्जा गताः सर्वा हासः स्याच्चेद्धनोद्धृते ।
किं कर्तव्यं तत्प्रतियच्छ्रीकृष्णोद्वाहकर्मणि ॥ १८
ततोऽयोग्यं तद्ग्रहणं पश्चात् कार्यं धनागमे ।
एवं चिन्तयतस्तस्य नन्दस्यैव यशोदया ॥ १९

अलक्ष्य आगतस्तत्र भगवान् वृजिनार्दनः ।
नीत्वा दामशतं तेषु बहिःक्षत्रेषु सर्वतः ॥ २०
मुक्ताफलानि चैकैकं प्राक्षिपत् स्वकरेण वै ।
यथा बीजानि चान्नानां स्वक्षेत्रेषु कृषीवलः ॥ २१
अथ नन्दोऽपि गणयन् गुलिकानिचयं पुनः ।
शतन्यूनञ्च तं दृष्ट्वा सन्देहं स जगाम ह ॥ २२

नन्द उवाच

नास्ति पूर्वं यत्समानं तत्रापि न्यूनतां गतम् ।
अहो कलङ्को भविता ज्ञातिषु स्वेषु सर्वतः ॥ २३
अथवा क्रीडनार्थं हि कृष्णो यदि गृहीतवान् ।
बलदेवोऽथवा बालस्तौ पृच्छे दीनमानसः ॥२४

नारद उवाच

इत्थं विचार्य नन्दोऽपि कृष्णं पप्रच्छ सादरम् ।
प्रहसन् भगवान् नन्दं प्राह गोवर्द्धनोद्धरः ॥ २५

भगवानुवाच

कृषीवला वयं गोपाः सर्वबीजप्ररोहकाः ।
क्षेत्रे मुक्ताप्रबीजानि विकीर्णीकृतवानहम् ॥ २६

नारद उवाच

श्रुत्वाथ स्वात्मजेनोक्तं तं निर्भर्त्स्य व्रजेश्वरः ।
तानि नेतुं तत्सहितस्तत्क्षेत्राणि जगाम ह ॥ २७
तत्र मुक्ताफलानान्तु शाखिनः शतशः शुभाः ।
दृश्यन्ते दीर्घवपुषो हरित्पल्लवशोभिताः ॥ २८
मुक्तानां स्तवकानान्तु कोटिशः कोटिशो नृप ।
सङ्घा विलम्बिता रेजुर्ज्योतींषीव नभःस्तले ॥ २९
तदातिहर्षितो नन्दो ज्ञात्वा कृष्णं परेश्वरम् ।
मुक्ताफलानि दिव्यानि पूर्वस्थूलसमानि च ॥ ३०

तेषान्तु कोटिभाराणि निधाय शकटेषु च ।
ददौ तेभ्यो वृणानेभ्यो नन्दराजो व्रजेश्वरः ॥ ३१
ते गृहीत्वाथ तत्सर्वं वृषभानुपुरं गताः
सर्वेषां शृण्वतां नन्दवैभवं प्रजगुर्नृप ॥ ३२
तदातिविस्मिताः सर्वे ज्ञात्वा नन्दसुतं हरिम् ।
वृषभानुवरं नेमुर्निःसन्देहा व्रजौकसः ॥ ३३
राधा हरेः प्रिया ज्ञाता राधायाश्च प्रियो हरिः ।
ज्ञातो व्रजजनैः सर्वैस्तद्दिनान्मैथिलेश्वर ॥ ३४
मुक्ताक्षेत्रः कृतो यत्र हरिणा नन्दसूनुना ।
मुक्तासरोवरस्तत्र जातो मैथिल तीर्थराट् ॥ ३५
एकमुक्ताफलस्यापि दानं तत्र करोति यः ।
लक्षमुक्तादानफलं समाप्नोति न संशय ॥ ३६
एवं ते कथितो राजन् गिरिराजमहोत्सवः ।
भुक्तिमुक्तिप्रदो नृणां किं भूयः श्रोतुमिच्छसि ॥ ३७

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारद-
बहुलाश्वसंवादे हरिपरीक्षणं नाम
षष्ठोऽध्यायः ॥ ६

बहुलाश्व उवाच

कति मुख्यानि तीर्थानि गिरिराजे महात्मनि ।
एतद् ब्रूहि महायोगिन् साक्षात्त्वं दिव्यदर्शनः ॥ १

नारद उवाच

राजन् गोवर्द्धनः सर्वः सर्वतीर्थवरः स्मृतः ।
वृन्दावनाङ्को गोलोकमुकुटोऽद्रिप्रपूजितः ॥ २
गोपगोपीगवां रक्षाप्रदः कृष्णप्रियो महान् ।
पूर्णब्रह्मातपत्रो यस्तस्मात्तीर्थवरस्तु कः ॥ ३
इन्द्रयागं विनिर्भर्त्स्य सर्वैर्निजजनैः सह ।
यत्पूजनं समारेभे भगवान् भुवनेश्वरः ॥ ४
परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ।
असङ्ख्यब्रह्माण्डपतिर्गोलोकेशः परात्परः ॥ ५
यस्मिन् स्थित. सदा क्रीडामर्भकैः सह मैथिल ।
करोति तस्य माहात्म्यं वक्तुं नालं चतुर्मुखः ॥ ६
यत्र वै मानसीगङ्गा महापापौघनाशिनी ।
गोविन्दकुण्डो विशद. शुभश्चन्द्रसरोवर· ॥ ७
राधाकुण्डः कृष्णकुण्डो ललिताकुण्ड एव च ।
गोपालकुण्डस्तत्रैव कुसुमाकर एव च ॥ ८
श्रीकृष्णमौलिसंस्पर्शान्मौलिचिह्ना शिलाऽभवत् ।
तस्या दर्शनमात्रेण देवमौलिर्भवेज्जनः ॥ ९
यस्यां शिलायां कृष्णेन चित्राणि लिखितानि च ।
अद्यापि चित्रिता पुण्या नाम्ना चित्रशिला गिरौ ॥ १०
यां शिलामर्भकैः कृष्णो वादयन् क्रीडने रतः ।
वादिनी सा शिला जाता महापापौघनाशिनी ॥ ११

यत्र श्रीकृष्णचन्द्रेण गोपालैः सह मैथिल ।
कृता वै कन्दुकक्रीडा तत्क्षेत्रं कन्दुकं स्मृतम् ॥ १२

दृष्ट्वा शक्रपदं याति नत्वा ब्रह्मपदञ्च तत् ।
विलुण्ठन् यस्य रजसां साक्षाद्विष्णुपदं व्रजेत् ॥ १३

गोपानामुष्णिहो यत्र चोरयामास माधवः ।
औष्णिहं नाम तत्तीर्थं महापापहरं गिरौ ॥ १४

तत्रैकदा वै दधिविक्रयार्थं
विनिर्गतो गोपवधूसमूहः ।
श्रुत्वा क्वणन्नूपुरशब्दमाराद्
रुरोध तन्मार्गमनङ्गमोही ॥ १५

वंशीधरो वेत्रवरेण गोपै
पुरःश्च तासां विनिधाय पादम् ।
मह्यं करादानधनाय दानं
देहीति गोपीर्निजगाद मार्गे ॥ १६

गोप्य ऊचुः

वक्रस्त्वमेवासि समास्थितः पथि
गोपार्भकैर्गोरसलम्पटो भृशम् ।
मात्रा च पित्रा सह कारयामो
बलाद्भवन्तं किल कंसबन्धने ॥१७

भगवानुवाच

कंसं हनिष्यामि महोग्रदण्ड
सबान्धवं मे शपथो गवाञ्च ।
एवं करिष्यामि यदोः पुरे बलाद्
दानी सदाहं गिरिराजभूमौ ॥ १८

नारद उवाच

इत्युक्त्वा दधिपात्राणि बालैर्नीत्वा पृथक पृथक् ।
भूपृष्ठे पातयामास सानन्दं नन्दनन्दनः ॥१६
अहो एष परं धृष्टो निर्भयो नन्दनन्दनः ।
निरङ्कुशो भाषणीयो वने वीर पुरेऽबलः ॥२०
ब्रुवामहे यशोदायै नन्दाय च किलाद्य वै ।
एवं वदन्त्यस्ता गोप्यः सस्मिताः प्रययुर्गृहान् ॥२१
नीपपालाशपत्राणि कृत्वा द्रोणानि माधवः ।
जघास बालकैः सार्द्धं पिच्छिलानि दधीनि च ॥२२
द्रोणाकाराणि पत्राणि बभूवुः शाखिनां तदा ।
तत्क्षेत्रञ्च महापुण्यं द्रोणं नाम नृपेश्वर ॥२३
दधिदानं तत्र कृत्वा पीत्वा पत्रधृतं दधि ।
नमस्कुर्यान्नरस्तस्य गोलोकान्न च्युतिर्भवेत् ॥२४
नेत्रे आच्छाद्य यत्रैव लीनोऽभून्माधवोऽर्भकैः ।
तत्र तीर्थं लौकिकञ्च जातं पापप्रणाशनम् ॥२५
कदम्बखण्डतीर्थञ्च लीलायुक्तं हरेः सदा ।
तस्य दर्शनमात्रेण नरो नारायणो भवेत् ॥ २६
यत्र वै राधया रासे शृङ्गारोऽकारि मैथिल ।
तत्र गोवर्द्धने जातं स्थलं शृङ्गारमण्डलम् ॥ २७
येन रूपेण कृष्णेन धृतो गोवर्द्धनो गिरिः ।
तद्रूप विद्यते तत्र नृप शृङ्गारमण्डलम् ॥ २८
अब्दाश्चतुःसहस्राणि तथा चाष्टौ शतानि च ।
गतास्तत्र कलेरादौ क्षेत्रे शृङ्गारमण्डले ॥ २६
गिरिराजगुहामध्यात् सर्वेषां पश्यतां नृप ।
स्वतः सिद्धञ्च तद्रूपं हरेः प्रादुर्भविष्यति ॥ ३०

श्रीनाथं देवदमनं तं वदिष्यन्ति सज्जनाः ।
गिरिराजे गिरौ राजन् सदा लीलां करोति यः ॥ ३१
ये करिष्यन्ति नेत्राभ्यां तस्य रूपस्य दर्शनम् ।
ते कृतार्था भविष्यन्ति मैथिलेन्द्र कलौ जनाः ॥ ३२
जगन्नाथो रङ्गनाथो द्वारकानाथ एव च ।
बद्रिनाथश्चतुष्कोणे भारतस्यापि वर्तते ॥ ३३
मध्ये गोवर्द्धनस्यापि नाथोऽयं वर्तते नृप ।
पवित्रे भारते वर्षे पञ्चनाथाः सुरेश्वराः ॥ ३४
सद्धर्ममण्डपस्तम्भा आर्तत्राणपरायणाः ।
तेषान्तु दर्शनं कृत्वा नरो नारायणो भवेत् ॥ ३५
चतुर्णां भुवि नाथानां कृत्वा यात्रां नरः सुधीः ।
न पश्येद्देवदमनं स न यात्राफल लभेत् ॥ ३६
श्रीनाथं देवदमनं पश्येद् गोवर्द्धने गिरौ ।
चतुर्णां भुवि नाथानां यात्रायाः फलमाप्नुयात् ॥ ३७
ऐरावतस्य सुरभेः पादचिह्नानि यत्र वै ।
तत्र नत्वा नरः पापी वैकुण्ठं याति मैथिल ॥ ३८
हस्तचिह्नं पादचिह्नं श्रीकृष्णस्य महात्मनः ।
दृष्ट्वा नत्वा नरः कश्चित् साक्षात् कृष्णपदं व्रजेत् ॥ ३९
एतानि नृप तीर्थानि कुण्डाद्यायतनानि च ।
अङ्गानि गिरिराजस्य किं भूयः श्रोतुमिच्छसि ॥ ४०

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारदबहुलाश्व-
संवादे गिरिराजतीर्थवर्णनं नाम
सप्तमोऽध्यायः ॥ ७

बहुलाश्व उवाच

केषु केषु तदङ्गेषु किं किं तीर्थं समाश्रितम् ।
वद देव महाभाग त्वं परावरवित्तमः ॥ १

नारद उवाच

यत्र यस्य प्रसिद्धिः स्यात्तदङ्गं परमं विदुः ।
क्रमतो नास्त्यङ्गचयो गिरिराजस्य मैथिल ॥ २
यथा सर्वगतं ब्रह्म सर्वाङ्गानि च तस्य वै ।
विभूतेर्भावतः शश्वत् तथा वक्ष्यामि मानद ॥ ३
शृङ्गारमण्डलस्याधो मुखं गोवर्द्धनस्य च ।
यत्रान्नकूटं कृतवान् भगवान् व्रजवासिभिः ॥ ४
नेत्रे वै मानसीगङ्गा नासा चन्द्रसरोवरः ।
गोविन्दकुण्डो ह्यधरौ चिबुकं कृष्णकुण्डकः ॥ ५
राधाकुण्डस्तस्य जिह्वा कपोलौ ललितासरः ।
गोपालकुण्डः कर्णौ च कर्णान्त. कुसुमाकरः ॥ ६
मौलिचिह्ना शिला तस्य ललाटं विद्धि मैथिल ।
शिरश्चित्रशिला तस्य ग्रीवा वै वादनीशिला ॥ ७
कान्दुकं पार्श्वदेशं सदौष्णिहं कटिरुच्यते ।
द्रोणतीर्थं पृष्ठदेशे लौकिकं चोदरे स्मृतम् ॥ ८
कदम्बखण्डमुरसि जीवः शृङ्गारमण्डलम् ।
श्रीकृष्णपादचिह्नं तु मनस्तस्य महात्मनः ॥ ९
हस्तचिह्नं तथा बुद्धिरैरावतपदे पदः ।
सुरभेः पादचिह्नेषु पक्षौ तस्य महात्मनः ॥ १०
पुच्छकुण्डे तथा पुच्छं वत्सकुण्डे बलं स्मृतम् ।
रुद्रकुण्डे तथा क्रोधः कामः शक्रसरोवरे ॥ ११

कुबेरतीर्थे चोद्योगं ब्रह्मतीर्थे प्रसन्नताम् ।
यमतीर्थे ह्यहङ्कारं वदन्तीत्थं पुराविदः ॥ १२
एवमङ्गानि सर्वत्र गिरिराजस्य मैथिल ।
कथितानि मया तुभ्यं सर्वपापहराणि च ॥ १३
गिरिराजविभूतिन्तु यः शृणोति नरोत्तमः ।
स गच्छेद्धाम परमं गोलोकं योगिदुर्लभम् ॥ १४

समुत्थितोऽसौ हरिवक्षसो गिरि
गोवर्द्धनो नाम गिरीन्द्रराजराट् ।
समागतो ह्यत्र पुलस्त्यतेजसा
यद्दर्शनाज्जन्म पुनर्न विद्यते ॥ १५

इति श्रीगर्गाचार्यसंहितायां गिरिराजखण्डे नारदबहुलाश्व-
संवादे गिरिराजविभूतिवर्णनं नाम
अष्टमोऽध्यायः ॥ ८

बहुलाश्व उवाच

अहो गोवर्द्धनः साक्षाद्गिरिराजो हरिप्रियः।
तत्समानं न तीर्थं हि विद्यते भूतले दिवि॥ १
कदा बभूव श्रीकृष्णवक्षसोऽयं गिरीश्वरः।
एतद्वद महाबुद्धे त्वं साक्षाद्धरिमानसः॥ २

नारद उवाच

गोलोकोत्पत्तिवृत्तान्तं शृणु राजन् महामते।
चतुष्पदार्थदं नृणामाद्यलीलासमन्वितम्॥ ३
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः।
परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् प्रभुः॥ ४
प्रत्यग्धामा स्वयंज्योतीरमुमानो निरन्तरम्।
यत्र कालः कलयतामीश्वरो धाममानिनाम्॥ ५
राजन्न प्रभवेन् माया न महांश्च गुणाः कुतः।
न विशन्ति क्वचिद्राजन्मनश्चित्तो मतिह्यहम्॥ ६
स्वधाम्नि ब्रह्म साकारमिच्छया व्यरचीकरत्।
प्रथमं चाभवच्छेषो विसश्वेतो बृहद्वपुः॥ ७
तदुत्सङ्गे महालोको गोलोको लोकवन्दितः।
यं प्राप्य भक्तिसंयुक्तः पुनरावर्तते नहि॥ ८
असङ्ख्यब्रह्माण्डपतेर्गोलोकाधिपतेः प्रभोः।
पुनः पादाब्जसम्भूता गङ्गा त्रिपथगामिनी॥ ९
पुनर्वामांसतस्तस्य कृष्णाभूत् सरितां वरा।
रेजे शृङ्गारकुसुमैर्यथोष्णिड्मुद्रिता नृप॥ १०
श्रीरासमण्डलं दिव्यं हेमरत्नसमन्वितम्।
नानाशृङ्गारपटलं गुल्फाभ्यां श्रीहरेः प्रभोः॥ ११

सभाप्राङ्गणवीथीभिर्मण्डपैः परिवेष्टितः ।
वसन्तमाधुर्यधरः कूजत्कोकिलसारसः ॥ १२
मयूरैः षट्पदैर्व्याप्तः सरोभिः परिसेवितः ।
जातो निकुञ्जो जङ्घाभ्यां श्रीकृष्णस्य महात्मनः ॥१३
वृन्दावनञ्च जानुभ्यां राजन् सर्ववनोत्तमम् ।
लीलासरोवरः साक्षादूरुभ्यां परमात्मनः ॥१४
कटिदेशात् स्वर्णभूमिर्दिव्यरत्नखचितप्रभा ।
उदरे रोमराजेश्च माधव्यो विस्तृता लता. ॥१५
नानापक्षिगणैर्व्याप्ता ध्वनद्भ्रमरभूषिताः ।
सुपुष्पफलभारैश्च नताः सत्कुलजा इव ॥१६
श्रीनाभिपङ्कजात्तस्य पङ्कजानि सहस्रशः ।
सरःसु हरिलोकस्य तानि रेजुरितस्ततः ॥१७
त्रिवलीप्रान्ततो वायुर्मन्दगात्यतिशीतलः ।
जत्रुदेशाच्छुभा जाता मथुरा द्वारकापुरी ॥१८
भुजाभ्यां श्रीहरेर्जाताः श्रीदामाद्यष्टपार्षदाः ।
नन्दाश्च मणिबन्धाभ्यामुपनन्दाः कराग्रतः ॥१९
श्रीकृष्णबाहुमूलाभ्यां सर्वे वै वृषभानवः ।
कृष्णरोमसमुद्भूताः सर्वे गोपगणा नृप ॥२०
श्रीकृष्णमनसो गावो वृषा धर्मधुरन्धराः ।
बुद्धेर्यवसगुल्मानि बभूवुर्मैथिलेश्वर ॥२१
तद्वामांसात् समुद्भूतं गौरं तेजः स्फुरत्प्रभम् ।
लीला श्रीर्भूश्च विरजा तस्माज्जाता हरेः प्रियाः ॥२२
लीलातीव प्रिया तस्य तां राधान्तु विदुः परे ।
श्रीराधाया भुजाभ्यान्तु विशाखा ललिता सखी ॥२३
सहचर्यस्तथा गोप्यो राधारोमोद्भवा नृप ।
एवं गोलोकरचनां चकार मधुसूदनः ॥२४

विधाय सर्वं निजलोकमित्थं
श्रीराधया तत्र रराज राजन् ।
असङ्ख्यलोकाण्डपतिः परात्मा
परः परेशः परिपूर्णदेवः ॥ २५
तत्रैकदा सुन्दररासमण्डले
स्फुरत्क्वणन्नूपुरशब्दसङ्कुले ।
सुच्छत्रमुक्ताफलदामजावृत
स्रवद्बृहद्बिन्दुविराजिताङ्गणे ॥ २६
श्रीमालतीनां सुदितानजालतः
स्वतः स्रवत्सन्मकरन्दगन्धिते ।
मृदङ्गतालध्वनिवेणुनादिते
सुकण्ठगीतादिमनोहरे परे ॥ २७
श्रीसुन्दरी रासरसे मनोरमे
मध्यस्थितं कोटिमनोजमोहनम् ।
जगाद राधा परिमूर्जया गिरा
कृत्वा कटाक्षं रसदानकौशलम् ॥ २८

राधोवाच

यदि रासे प्रसन्नोऽसि मम प्रेम्णा जगत्पते ।
तदाहं प्रार्थनां त्वत्तः करोमि मनसि स्थिताम् ॥ २९

भगवानुवाच

इच्छां वरय वामोरु या ते मनसि वर्त्तते ।
न देयं यदि यद्वस्तु प्रेम्णा दास्यामि तत् प्रिये ॥ ३०

राधोवाच

वृन्दावने दिव्यनिकुञ्जपार्श्वे
कृष्णातटे रासरसाय योग्यम् ।

रहःस्थलं त्वं कुरुतात् मनोज्ञ
मनोरथोऽयं मम देवदेव ॥ ३१

नारद उवाच

तथास्तु चोक्त्वा भगवान् रहोयोग्यं विचिन्तयन् ।
नेत्राभ्यां पङ्कजाभाभ्यां हृदयं सददर्श ह ॥ ३२
तदैव कृष्णहृदयाद्गोपीव्यूहस्य पश्यतः ।
निर्गतं सजलं तेजोऽनुरागस्येव चाङ्कुरम् ॥ ३३
पतितं रासभूमौ तद्ववृधे पर्वताकृति ।
रत्नधातुमयं दिव्यं सुनिर्झरदरीवृतम् ॥ ३४
कदम्बबकुलाशोकलताजालमनोहरम् ।
मन्दारकुन्दवृन्दाढ्यं सुपक्षिगणसङ्कुलम् ॥ ३५
क्षणमात्रेण वैदेह लक्षयोजनविस्तृतम् ।
शतकोटियोजनानां लम्बितं शेषवत् पुनः ॥ ३६
ऊर्ध्वं समुन्नतं जातं पञ्चाशत्कोटियोजनम् ।
करीन्द्रवत् स्थितं शश्वत् पञ्चाशत्कोटिविस्तृतम् ॥ ३७
कोटियोजनदीर्घाङ्गैः शृङ्गाणां शतकैः स्फुरत् ।
उच्चकैः स्वर्णकलशैः प्रासादमिव मैथिल ॥ ३८
गोवर्द्धनाख्यं तच्चाहुः शतशृङ्गं तथा परे ।
एवं भूत तु तदपि वर्द्धितु मनसोत्सुकम् ॥ ३९
कोलाहले तदा जाते गोलोके भयविह्वले ।
वीक्ष्योत्थाय हरिः साक्षाद्धस्तेनाशु तताड तम् ॥ ४०
किं वर्द्धसे भो प्रच्छन्नं लोकमाच्छाद्य तिष्ठसि ।
किंवा नचैते वसितुं तच्छान्तिमकरोद्धरिः ॥ ४१
संवीक्ष्य तं गिरिवरं प्रसन्ना भगवत्प्रिया ।
तस्मिन् रहःस्थले राजन् रराज हरिणा सह ॥ ४२

सोऽयं गिरिवरः साक्षाच्छ्रीकृष्णेन प्रणोदितः ।
सर्वतीर्थमयः श्यामो घनश्यामसुतः प्रियः ॥ ४३
भारतात् पश्चिमदिशि शाल्मलीद्वीपमध्यतः ।
गोवर्द्धनो जन्म लेभे पत्न्यां द्रोणाचलस्य च ॥ ४४
पुलस्त्येन समानीतो भारते व्रजमण्डले ।
वैदेह तस्यागमनं मया तुभ्यं पुरोदितम् ॥ ४५
यथा पुरा वर्धितुमुत्सुकोऽयं
तथा पिधानं भविता भुवो वा ।
विचिन्त्य शापं मुनिना परेशो
द्रोणात्मजायेति ददौ क्षयार्थम् ॥ ४६

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारदबहुलाश्व-
संवादे गिरिराजोत्पत्तिवर्णनं नाम
नवमोऽध्यायः ॥ ९

नारद उवाच

अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
यस्य श्रवणमात्रेण महापापं प्रणश्यति ॥ १

विजयो ब्राह्मणः कश्चिद्गौतमीतीरवासकृत्।
आययौ स्वमृणं नेतुं मथुरां पापनाशिनीम् ॥ २
कृत्वा कार्यं गृहं गच्छन् गोवर्द्धनतटीं गतः।
वर्तुल तत्र पाषाणं चैकं जग्राह मैथिल ॥ ३

शनैश्शनैर्वनोद्देशे निर्गतो व्रजमण्डलात्।
अग्रे ददर्श चायातं राक्षस घोररूपिणम् ॥ ४

हृदये च मुखं यस्य त्रयः पादा भुजाश्च षट्।
हस्तत्रयश्च स्थूलौष्ठौ नासा हस्तसमुन्नता ॥ ५
सप्तहस्ता ललज्जिह्वा कण्टकाभास्तनूरुहाः।
अरुणे अक्षिणी दीर्घे दन्ता वक्रा भयङ्कराः ॥ ६
तं दृष्ट्वा ब्राह्मणो राजन् कम्पितावयवो भृशम्।
तत्रास्थितोऽभूद्रुदितो न समर्थः पलायितुम् ॥ ७
राक्षसो घुर्घुरं शब्दं कृत्वा चापि बुभुक्षितः।
आययौ सम्मुखे राजन् ब्राह्मणस्य स्थितस्य च ॥ ८

गिरिराजोद्भवेनासौ पाषाणेन जघान तम्।
गिरिराजशिलास्पर्शात् त्यक्त्वासौ राक्षसीं तनुम् ॥ ९

पद्मपत्रविशालाक्षः श्यामसुन्दरविग्रहः।
वनमाली पीतवासा मुकुटी कुण्डलान्वितः ॥ १०

वंशीधरो वेत्रहस्तः कामदेव इवापरः।
भूत्वा कृताञ्जलिर्विप्रं प्रणनाम मुहुर्मुहुः ॥ ११

सिद्ध उवाच

धन्यस्त्वं ब्राह्मणश्रेष्ठ परत्राणपरायणः ।
त्वया विमोचितोऽहं वै राक्षसत्वान्महामते ॥ १२
पाषाणस्पर्शमात्रेण कल्याणं मे बभूव ह ।
न कोऽपि मां मोचयितुं समर्थो हि त्वया विना ॥ १३

ब्राह्मण उवाच

विस्मितस्तव वाक्येऽहं न त्वां मोचयितुं क्षमः ।
पाषाणस्पर्शेऽपि फलं न जाने वद सुव्रत ॥ १४

सिद्ध उवाच

गिरिराजो हरे रूपः श्रीमान् गोवर्द्धनो गिरिः ।
तस्य दर्शनमात्रेण नरो याति कृतार्थताम् ॥ १५
गन्धमादन यात्रायां यत्फलं लभते नरः ।
तस्मात् कोटिगुण पुण्यं गिरिराजस्य दर्शने ॥ १६
पञ्चवर्षसहस्राणि केदारे यत्तपः फलम् ।
तच्च गोवर्द्धने विप्र क्षणेन लभते नरः ॥ १७
मलयाद्रौ स्वर्णभारदानस्यापि च यत् फलम् ।
तस्मात् कोटिगुणं पुण्यं गिरिराजे हि माशिकम् ॥ १८
पर्वते मङ्गलप्रस्थे यो दद्याद्धेमदक्षिणाम् ।
स याति विष्णुसारूप्यं युक्तः पापशतैरपि ॥ १९
तत्पदं हि नरो याति गिरिराजस्य दर्शनात् ।
गिरिराजसमं पुण्यमन्यत्तीर्थे न विद्यते ॥ २०
ऋषभाद्रौ कूटकाद्रौ कोल्लकाद्रौ तथा नरः ।
सुवर्णशृङ्गयुक्तानां गवां कोटीर्ददाति यः ॥ २१
महापुण्यं लभेत् सोऽपि विप्रान् सम्पूज्य यत्नतः ।
तस्माल्लक्षगुणं पुण्यं गिरौ गोवर्द्धने द्विज ॥ २२

ऋष्यमूकस्य सह्यस्य तथा देवगिरेः पुनः ।
यात्रायां लभते पुण्यं समस्ताया भुवः फलम् ॥ २३
गिरिराजस्य यात्रायां तस्मात् कोटिगुणं फलम् ।
गिरिराजसमं तीर्थं न भूतं न भविष्यति ॥ २४
श्रीशैले दशवर्षाणि कुण्डे विद्याधरे नरः ।
स्नानं करोति सुकृती शतयज्ञफलं लभेत् ॥ २५
गोवर्धने पुच्छकुण्डे दिनैकं स्नानकृन्नरः ।
कोटियज्ञफलं साक्षात् पुण्यमेति न संशयः ॥ २६
वेङ्कटाद्रौ वारिधारे महेन्द्रे विन्ध्यपर्वते ।
यज्ञं कृत्वा ह्यश्वमेधं नरो नाकपतिर्भवेत् ॥ २७
गोवर्द्धनेऽस्मिन् यो यज्ञं कृत्वा दत्वा सुदक्षिणाम् ।
नाके पदं संविधाय स विष्णोः पदमाव्रजेत् ॥ २८
चित्रकूटे पयस्विन्यां श्रीरामनवमीदिने ।
पारियात्रे तृतीयायां वैशाखस्य द्विजोत्तम् ॥ २९
कुकुभाद्रौ च पूर्णायां नीलाद्रौ द्वादशीदिने ।
इन्द्रकीले च सप्तम्यां स्नानं दानं तपः क्रियाः ॥ ३०
तत्सर्वं कोटिगुणितं भवतीत्थं हि भारते ।
गोवर्द्धने तु तत् सर्वमनन्तं जायते द्विज ॥ ३१
गोदावर्यां गुरौ सिंहे मायापुर्यान्तु कुम्भगे ।
पुष्करे पुष्पनक्षत्रे कुरुक्षेत्रे रविग्रहे ॥ ३२
चन्द्रग्रहे तु काश्यां वै फाल्गुने नैमिषे तथा ।
एकादश्यां शूकरे च कार्त्तिक्यां गणमुक्तिदे ॥ ३३
जन्माष्टम्यां मधोः पूर्यां खाण्डवे द्वादशीदिने ।
कार्त्तिक्यां पूर्णिमायान्तु वटेश्वरमहावटे ॥ ३४
मकरार्के प्रयागे तु बर्हिष्मत्यां हि वैधृतौ ।
अयोध्यासरयूतीरे श्रीरामनवमीदिने ॥ ३५

एवं शिवचतुर्दश्यां वैजनाथवने शुभे ।
तथा दर्शे सोमवारे गङ्गासागरसङ्गमे ॥ ३६
दशम्यां सेतुबन्धे च श्रीरङ्गे सप्तमीदिने ।
एषु दानं तपः स्नान जपं देवद्विजार्चनम् ॥ ३७
तत्सर्वं कोटिगुणित भवतीह द्विजोत्तम ।
तत्तुल्यं पुण्यमाप्नोति गिरौ गोवर्द्धने वरे ॥ ३८
गोविन्दकुण्डे विशदे यः स्नाति कृष्णमानसः ।
प्राप्नोति कृष्णसारूप्य मैथिलेन्द्र न संशयः ॥ ३९
अश्वमेधसहस्राणि राजसूयशतानि च ।
मानसीगङ्गया तुल्य न भवन्ति गिरौ वरे ॥ ४०
त्वया विप्र कृतं साक्षाद् गिरिराजस्य दर्शनम् ।
स्पर्शनञ्च ततः स्नानं न त्वत्तोऽप्यधिको भुवि ॥ ४१
न मन्यसे चेन्मां पश्य महापातकिनं परम् ।
गोवर्द्धनशिलास्पर्शात् कृष्णसारूप्यतां गतम् ॥ ४२

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारदबहुलाश्व-
संवादे गिरिराजमाहात्म्यवर्णनं नाम
दशमोऽध्यायः ॥ १०

नारद उवाच

इति श्रुत्वा सिद्धवाक्यं ब्राह्मणो विस्मयं गतः ।
पुनः पप्रच्छ तं राजन् गिरिराजप्रभाववित् ॥ १

ब्राह्मण उवाच

पुरा जन्मनि कस्त्वं भोस्त्वया किं कलुषं कृतम् ।
सर्वं वद महाभाग त्वं साक्षाद्दिव्यदर्शनः ॥ २

सिद्ध उवाच

पुरा जन्मनि वैश्योऽहं धनी वैश्यसुतो महान् ।
आबाल्याद्द्यूतनिरतो विटगोष्ठीविशारदः ॥ ३
वेश्यारतः कुकर्माहं मदिरामदविह्वलः ।
मात्रा पित्रा भार्ययापि भर्त्सितोऽहं सदा द्विज ॥ ४
एकदा तु मया विप्र पितरौ गरदानतः ।
मारितौ च तथा भार्या खड्गेन पथि मारिता ॥ ५
गृहीत्वा तद्धनं सर्वं वेश्यया सहितः खलः ।
दक्षिणाशाञ्च गतवान् दस्युकर्मातिनिर्दय ॥ ६
एकदा तु मया वेश्या निःक्षिप्ता ह्यन्धकूपके ।
दस्युना हि मया पाशैर्मारिताः शतशो नराः ॥ ७
धनलोभेन भो विप्र ब्रह्महत्याशतं कृतम् ।
क्षत्रहत्यावैश्यहत्याः शूद्रहत्याः सहस्रशः ॥ ८
एकदा मांसमानेतुं मृगान् हन्तुं वने गतम् ।
सर्पोऽदशत् पदा स्पृष्टो दुष्टं मां निधनं गतम् ॥ ९
संताड्य मुद्गरैर्घोरैर्यमदूता भयङ्कराः ।
बद्ध्वा मां नरकं निन्युर्महापातकिनं खलम् ॥ १०

मन्वन्तरन्तु पतितः कुम्भीपाके महाखले ।
कल्पैकं तप्तभूमौ च महादुःखं गतः खलः ॥ ११
चतुरशीतिलक्षाणां नरकाणां पृथक् पृथक् ।
वर्षं वर्षं निपतितो निर्गतोऽहं यमेच्छया ॥ १२
ततस्तु भारते वर्षे प्राप्तोऽहं कर्मवासनाम् ।
दशवारं सूकरोहं व्याघ्रोऽहं सप्तजन्मसु ॥ १३
उष्ट्रोऽहं जन्मशतक महिषः शतजन्मसु ।
सर्पोऽहं जन्मसाहस्रं मारितो दुष्टमानवैः ॥ १४
एवं वर्षायुतान्ते तु निर्जले विपिने द्विज ।
राक्षसश्चेदृशो जातो विकरालो महाखलः ॥ १५
कस्य शूद्रस्य देहं वै समारुह्य व्रजं गतः ।
वृन्दावनस्य निकटे यमुनानिकटाच्छुभात् ॥ १६
समुत्थिता यष्टिहस्ताः श्यामलाः कृष्णपार्षदाः ।
तैस्ताडितो धर्षितोऽहं व्रजभूमौ पलायितः ॥ १७
बुभुक्षितो बहुदिनैस्त्वां खादितुमिहागतः ।
तावत्त्वया ताडितोऽहं गिरिराजाश्मना मुने ॥ १८
श्रीकृष्णकृपया साक्षात् कल्याणं मे बभूव ह ।

नारद उवाच

एवं प्रवदतस्तस्य गोलोकाच्च महारथः ॥ १९
सहस्रादित्यसङ्काशो हयायुतसमन्वितः ॥ २०
सहस्रचक्रध्वनिभृल्लक्षपार्षदमण्डितः ।
मञ्जीरकिङ्किणीजाली मनोयायी समागतः ॥ २१
पश्यतस्तस्य विप्रस्य तमानेतुं विदेहराट् ।
तमागतं रथं दिव्यं नेमतुर्विप्रनिर्जरौ ॥ २२
ततः समारुह्य रथं स सिद्धो
विरञ्जयन् मैथिल मण्डलं दिशाम् ।

श्रीकृष्णलोकं प्रययौ परात्परं
निकुञ्जलीलाललितं मनोहरम् ॥ २३
विप्रोऽपि तस्मात् पुनरागतो गिरिं
गोवर्द्धनं सर्वगिरीन्द्रदैवतम् ।
प्रदक्षिणीकृत्य पुनः प्रणम्य तं
ययौ गृह मैथिल तत्प्रभावविन् ॥ २४
इदं मया ते कथितं प्रचण्डं
सुमुक्तिदं श्रीगिरिराजखण्डम् ।
श्रुत्वाः जनः पापपरोऽपि चण्डं
स्वप्ने न पश्येद् यममुग्रदण्डम् ॥ २५
यः शृणोति गिरिराजयशस्य
गोपराजनवकेलिरहस्यम् ।
देवराज इव सोऽत्र समेति
नन्दराज इव शान्तिममुत्र ॥ २६

इति श्रीगर्गसंहितायां गिरिराजखण्डे नारदबहुलाश्व-
संवादे गिरिराजप्रभाववर्णने सिद्धमोक्षो नाम
एकादशोऽध्यायः ॥ ११

इति तृतीयः गिरिराजखण्डः समाप्तः ॥

# गर्गसंहितायां गिरिराजखण्डे पाठान्तरादिप्रदर्शनम्

अत्र च ख पुस्तकाभावोऽवगन्तव्यः

१।२ तदेव चरितं इति मु० पु० ।

१।३ वार्षिक हि० इति मु० पु० ।

१।७ ०गणाश्च सर्वे भुञ्जन्ति० इति मु० पु० ।

१।८ ०कालमनन्तमेव हि० इति मु० पु० ।

१।१२ ०थेच्छास्ति तथा कुरु व्रज ।। इति क० मु० पु० ।

१।१६ ०मन्त्रेण ह्रदे स्नानं० इति मु० पु० ।

१।१८ ०निचयं दत्त्वा दीपा० इति मु० पु० ।

१।२७ गोमयैर्गोधनः कार्यस्तदाकारः परोन्नतः ।। इति क० ग० पु० ।

१।३० शालग्रामस्य देवस्य सेवनं० इति मु० पु०

२।२ ०समुत्सुको गर्गयुतः० इति मु० पु० ।

२।३ क्रमव्यत्यासेन श्लोकोऽयं मु० पुस्तके वर्त्तते तथैवचात्र स्थापितोऽस्माभिः ।

२।१३ ०शैलवरस्य सम्मुखा० इति मु० पु० ।

कपालभिन्नास्थि० इति मु० पु० ।

०मालागरलैविभूषितः ।। इति क० ग० पु० ।

२।१४ ०गिरिराजमण्डलम् ।। इति मु० पु० ।

२।१६ ०रूप्याङ्करीव० इति ग० पु० ।

०रुक्ष्याङ्करीव० इति क० पु० ।

२।१६ ०गोपगणैः प्रहर्षितैः । इति मु० पु० ।

२।२० ०इवाध्वरे जपै० इति मु० पु० ।

०इवाध्वरे तपै० इति ग० पु० ।

२।२२ ऊचुः स्वयं वीक्ष्य० इति मु० पु० ।

०मानसान्ताः ।। इति ग० पु० ।

०मानसास्ताः ॥ इति क० पु०।

२।२३ जातोऽसि गोपै० इति ग० पु० ।

२।२६ ०रनिच्छया ते ॥ इति ग० पु० ।

३।१ ०यागस्य शासनम् । इति क० पु० ।

३।४ ०केचित्कर्पूरवत्प्रभाः । इति मु० पु० ।
नानाविधाश्च ये मेघा० इति मु० पु० ।
०केचिन्नीलपङ्कज० इति ग० पु० ।

३।५ ०श्चञ्चला च याः ॥ इति क० ग० पु० ।

३।७ ०वज्राघाताना०इतिग०पु०।

३।८ ०ह्यजद् भूखण्ड० इति मु० पु०

३।६ ०सकुटुम्बा जिगीषवः । इति सवर्त्रादर्शे दृश्यते । परन्तु प्रकरणानुरोधेनात्र ०कुटुम्बैर्जिजीविषवः । इति भवितुमर्हति ।

३।१३ सवत्सकं गोकुलञ्च गोपानाह०। इति मु० पु० ।

३।१६ ०स्वपुष्करेणैव च० इति मु० पु० ।

३।१७ ०व्रजवल्लभेशाः । इति ग० पु० ।

३।१६ ०श्च लकुटान० इति क० ग० पु० ।

३।३४ ०ज्ञात्वापर० इति मु० पु० ।

४।५ गद्यभागे–०गोपालाय० इति नास्ति ग० मु० पु० ।
०मन्मथ० इति नास्ति ग० पु० ।
०तुभ्यं० इति नास्ति क० ग० पु० ।

४।७ ०भूत्वा प्रणनाम० इति मु० पु० ।

४।११ ०भूत्वोऽभवद्०इति क० पु० ।
०हर्य्यानन्दा० इति क० ग० पु० ।

४।१३ तद्देव पाद० इति मु० पु० ।

४।१५ तत्र वै मानसी० इतिमु०पु० ।

४।१८ ०वै० इति नास्ति क० ग० पु० ।

५।१ ०माहुर्यशोदयम् ॥ इति मु०

पु० ।
५।४ ०कमलं गज० इति मु० पु० ।
५।५ अयं जातः कृष्णवर्णा एतत्० इति मु० पु० ।
५।७ ०चास्य चोत्पत्ति० क० ग० पु० ।
५।८ ०गोपान् क्रोधप्रपूरितान् ॥ इति ग० मु० पु० ।
५।११ विसर्गौ च० इति क० ग० पु० ।
५।१६ ०तस्मात् राधापतिः० इति० क० पु० ।
५।२४ ०ज्ञातेर्मेदसमन्विता.॥ इति नास्ति ग० पु० ।
तत्स्थले च ज्ञाते हे गोपेश्वर भूपते । इति ५।२५ श्लोकान्तिमांशः वर्त्तते ।
५।२५ गोपा ऊचुः इति नास्ति क० ग० पु० ।
श्लोकपूर्वार्द्धं नास्ति ग० पु० ।
श्लोकोत्तरार्द्धस्थं नन्दराजं त्यज० इत्यन्तोभागः नास्ति ग० पु० ।
५।२८ भवनाख्याति०इतिग०पु० ।
५।२९ अद्यस्त्वां० इति क० ग० पु० ।
अद्य त्वं० इति मु० पु० ।
५।३७ ०राधिकाज्ञया ॥ इति मु० पु० ।
६।१ ऊचु पुनःशान्ति० इति मु० पु० ।
६।६ नारद उवाच इति नास्ति ग० पु० ।
६।१० एकैकायसमु[illegible]० इति मु० पु० ।
०येपु भक्ता च०इति क०पु० ।
६।१३ ०विचारन्तु वरं० इति ग० पु० ।
६।२९ ०नभः स्थले ॥ इति मु० पु० ।
६।३० ०नन्दो नत्वा० इति ग० पु० ।
७।२ ०वनञ्च गोलोक० इति मु० पु० ।
७।१२ ०कन्दुकं स्मृतम् ॥ इति मु० पु० ।
७।१४ मुष्णिषायत्र० इति मु० पु० ।
औष्णीषं नाम० इति मु० पु० ।
७।१८ ०बलान्नेष्ये सदा० इति मु० पु० ।

०गिरिराजभूमेः ॥ इति क० मु० पु० ।

७।१६ ०पोथयामास० इति मु० पु० ।

७।२२ ०पत्राणां कृत्वा० इति मु० पु० ।

७।२३ ०द्रोणमासीन्नृपे० इति ग० पु० ।

७।३१ गोवर्द्धने गिरौ० इति मु० पु० ।

८।५ नेत्रे वै० इति मु० पु० ।

८।६ राधाकुण्डे० इति क० पु० ।

८।८ ०देशाश्च औष्णीषं० इति मु० पु० ।

८।६ ०चिह्नन्तु० इति मु० पु० ।

८।१० ०चिह्नं० इति मु० पु० ।

०पदं पदम् । इति मु० पु० ।

८।११ ०क्रोधं कामं० इति क० ग० पु० ।

६।३ ०त्पत्तिवदतां० इति ग० पु० ।

६।५ ०रममाणो निरन्तरम् । इति मु० पु० ।

६।७ ०त्रिश्वश्वेतो० इति मु० पु० ।

६।११ ०पटलगुल्फाभ्यां० इति मु० पु० ।

६।१२ ०कोकिलसङ्कुलः ॥ इति मु० पु० ।

६।१५ ०रोमराजिभ्यो० इति मु० पु० ।

६।२० ०वाहुस्कन्धाभ्यां० इति क० पु० ।

६।२२ ०वामांससमु० इति ग० पु० ।

६।२३ लीलावती प्रिया० इति मु० पु० ।

६।२६ ०न्नूपुररासक्कुले । इति क० ग० पु० ।

०दामजामृत० इति क० ग० पु० ।

६।२६ ०त्वां तु करोमि० इति मु० पु० ।

०मनसोत्थिताम् ॥ इति क० ग० पु० ।

६।३० ०कुरु तन्मनोज्ञं० इति मु० पु० ।

६।३२ स्त्रनेत्रपङ्कजाभ्यान्तु० इति मु० पु० ।

६।३५ मन्दारकन्द० इति मु०.पु० ।

९।३७ ०सञ्चारात्कोटिविस्तृतम् ॥ इति ग० पु० ।

९।३९ ०वर्द्धितं मनसो० इति मु० पु० ।

९।४० नास्ति ग० पु० ।

९।४१ ०भो· प्रच्छिन्न० इति मु० पु० ।

९।४३ ०घनश्याम सुरप्रियः ॥ इति मु० पु० ।

९।४५ वैदेह चास्या० इति ग० पु० ।

१०।१४ ०स्पर्शनफलं० इति मु० पु० ।

१०।१८ ०हि मासिकम् ॥ इति क० मु० पु० ।

१०।२० ०मन्यत्तीर्थेन० इति क० पु० ।

१०।२१ ०कोलकाद्रौ० इति मु० पु० ।

१०।२८ गोवर्द्धने तु० इति ग० पु० ।
नाकेशपदसंविष्णो श्री०इति ग० पु० ।
नाके पदं संविधार्य्य० इति क० पु० ।

१०।३० श्लोकस्य पूर्वोत्तरार्द्धे व्यत्ययेन वर्तेते क० ग० पु० ।

१०।३२ ०पूर्यान्तु कुम्भके । इति मु० पु० ।

१०।३६ नास्ति ग० पु० ।

१०।३७ पूर्वार्द्धे नास्ति ग० पु० ।

१०।३९ ०स्नात्वा कृष्णमानसः । इति क० ग० पु० ।

११।३ ०विटवैखगोष्ठी० इति ग० पु० ।

११।४ ०कुमार्गोऽहं० इति मु०पु० ।

११।७ ०महापाशैर्मा० इति क० ग० पु० ।

११।११ ०तप्तसूर्मौ च० इति मु० पु० ।
०दुःखमतस्त्वलम् ॥ इति ग० पु० ।

११।१२ चतुराशीति० इति क० ग० पु० ।

११।१३ ०हं शतजन्मसु । इति मु० पु० ।

११।१४ पूर्वार्द्धे नास्ति क० ग० पु० ।

११।१७ ०व्रजभूमौ पलायितः ॥ इति नास्ति क० ग० पु० ।

११।१८ पूर्वार्द्धे नास्ति क० ग० पु० ।
उत्तरार्द्धेऽपि तावत्त्वया ताडितोऽहं० इत्यन्तो भागः नास्ति क० ग० पु० ।

११।२१ ०किङ्किणीजाली० इति मु० पु० ।

श्रीगणेशाय नमः ।

# गर्गसंहिता

## ( माधुर्यखण्डः )

अतसीकुसुमोपमेयकान्ति
र्यमुनाकूलकदम्बमूलवर्ती ।
नवगोपबधूविलासशाली
वनमाली वितनोतु मङ्गलानि ॥ १
परिकरीकृतपीतपटं हरिं
शिखिकिरीटनतीकृतकन्धरम् ।
लकुटवेणुकरं चलकुण्डलं
पटुतरं नटवेषधरं भजे ॥ २

बहुलाश्व उवाच

श्रुतिरूपाद्यो गोप्यो भूतपूर्वाद्वरान्मुने ।
कथं श्रीकृष्णचन्द्रेण जाताः पूर्णमनोरथाः ॥ ३
गोपालकृष्णचरितं पवित्रं परमाद्भुतम् ।
एतद्वद महाबुद्धे त्वं परावरवित्तमः ॥ ४

नारद उवाच

श्रुतिरूपाश्च या गोप्यो गोपानां सुकुले व्रजे ।
लेभिरे जन्म वैदेह शेषशायिवराच्छ्रुतात् ॥ ५
कमनीयं नन्दसूनुं वीक्ष्य वृन्दावने च ताः ।
वृन्दावनेश्वरीं वृन्दां भेजिरे तद्वरेच्छया ॥ ६

वृन्दादत्ताद्वराद् यासु प्रसन्नो भगवान् हरिः ।
नित्यं तासां गृहे याति रासार्थं भक्तवत्सलः ॥ ७
एकदा तु निशीथिन्या व्यतीते प्रहरद्वये ।
रासार्थं भगवान् कृष्णः प्राप्तवांस्तद्गृहान् नृप ॥ ८
तदा उत्कण्ठिता गोप्यः कृत्वा तत्पूजनं परम् ।
पप्रच्छुः परया भक्त्या गिरा मधुरया प्रभुम् ॥ ९

गोप्य ऊचुः

कथं नचागतः शीघ्रं नो गृहान् वृजिनार्दन ।
उत्कण्ठितानां गोपीनां त्वयि चन्द्रे चकोरवत् ॥ १०

भगवानुवाच

यो यस्य चित्ते वसति न स दूरे कदाचन ।
खे सूर्यं कमलं भूमौ दृष्ट्वेदं स्फुटति प्रियाः ॥ ११
भाण्डीरे मे गुरुः साक्षाद्दुर्वासा भगवान् मुनिः ।
आगतोऽद्य प्रियास्तस्य सेवार्थं गतवानहम् ॥ १२
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ १३
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १४
स्वगुरुं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्या सेवेत सर्वदेवमयो गुरुः ॥ १५
तस्मात्तत्पूजनं कृत्वा नत्वा तत्पादपङ्कजम् ।
आगतोऽहं विलम्बेन भवतीनां गृहान् प्रियाः ॥ १६

नारद उवाच

श्रुत्वा तत्परमं वाक्यं गोप्यः सर्वास्तु विस्मिताः ।
कृताञ्जलिपुटा ऊचुः श्रीकृष्णं नम्रकन्धराः ॥ १७

मुनिरुवाच

गोप्यः परमहंसोऽहं गतकृत्यो हि निष्क्रियः ।
तस्मान्मुखे मे दातव्यं स्वं स्वं चाप्यशनं करैः ॥ २९

नारद उवाच

एवं विदारिते तेन मुखे गोप्योऽतिहर्षिताः ।
षट्पञ्चाशत्तमान् भोगान् स्वान् स्वान् सर्वाः समाक्षिपन् ॥३०
क्षिपन्तीनाञ्च गोपीनां पश्यन्तीनां मुनीश्वरः ।
जग्रास कोटिशो भारान् भोगान् सर्वान् क्षुधातुरः ॥ ३१
विस्मितानाञ्च गोपीनां पश्यन्तीनां परस्परम् ।
इत्थं शून्यानि पात्राणि बभूवुर्नृपसत्तम ॥ ३२
अथ गोप्यो मुनिं शान्तं नत्वा तं भक्तवत्सलम् ।
विस्मिताः प्रणताः प्राहुः सर्वाः पूर्णमनोरथाः ॥ ३३

गोप्य ऊचुः

मुने आगमने पूर्वं कृष्णोक्तवचसा नदीम् ।
तीर्त्वागतास्त्वत्समीपं दर्शनार्थं शुभेच्छया ॥ ३४
इतः कथं गमिष्यामः सन्देहोऽयं महानभूत् ।
तद्विधेहि नमस्तुभ्यं येन पन्था लघुर्भवेत् ॥ ३५

मुनिरुवाच

सुखेनातः प्रगन्तव्यं भवतीभिर्यदा स्वतः ।
यमुनामेत्य चैतद्वै वक्तव्यं मार्गहेतवे ॥ ३६
यदि दूर्वारसं पीत्वा दुर्वासाः केवलं क्षितौ ।
व्रती निरन्नो निर्वारिर्वर्तते पृथिवीतले ॥ ३७
तर्हि नो देहि मार्गं वै कालिन्दि सरितां वरे ।
इत्युक्ते वचने कृष्णा मार्गं वो दास्यति स्वतः ॥ ३८

तमः प्रकृतिदुर्मर्षी रजः प्रकृतिरानतिः ।
क्रियाऽक्रिया कृतिर्ग्लानिः सात्त्विक्याध्यात्मिकी वृषा ॥ ९९
सेवा शिखामणिर्वृद्धिराहूतिः सुमतिर्घृभूः ।
रज्जुर्द्विदाम्नी षड्वर्गा संहिता सौख्यदायिनी ॥ १००
उक्तिः प्रोक्तिर्देशभाषा प्राकृतिः पिङ्गलोद्भवा ।
नागभाषा नागभूषा नागरी नगरी नगा ॥ १०१
नौर्नौका भवनौर्भाव्या भवसागरसेतुका ।
मनोमयी दारुमयी सैकती सिकतामयी ॥ १०२
लेख्या लेप्या मणिमयी प्रतिमा हेमनिर्मिता ।
शैली शैलेभवा शीला शीकराभा चलाचला ॥ १०३
अस्थिता स्वस्थिता तूली वैदिकी तान्त्रिकी विधिः ।
सन्ध्या सन्ध्याभ्रवसना वेदसन्धिः सुधामयी ॥ १०४
सायन्तनीशिखा वेध्या सूक्ष्मा जीवकलाकृतिः ।
आत्मभूता भाविताऽणवी प्रह्वी कमलकर्णिका ॥ १०५
नीराजनी महाविद्या कन्दली कार्यसाधिनी ।
पूजा प्रतिष्ठा विपुला पुनन्ती पारलौकिकी ॥ १०६
शुक्ला शुक्तिर्मौक्तिकाभा प्रतीतिः परमेश्वरी ।
विराजोष्णिग् विराट्वेणी वेणुका वेणुनादिनी ॥ १०७
आवर्त्तिनी वार्तिकदा वार्त्ता वृत्तिर्विमानगा ।
रासाढ्या रासिनी रासी रासमण्डलमण्डली ॥ १०८
गोपगोपेश्वरी गोपी गोपीगोपालवन्दिता ।
गोचारिणी गोपनदी गोपानन्दप्रदायिनी ॥ १०९
पशव्यदा गोपसेव्या कोटिशो गोगणावृता ।
गोपानुगा गोपवती गोविन्दपदपादुका ॥ ११०
वृषभानुसुता राधा श्रीकृष्णवशकारिणी ।
कृष्णप्राणाधिका शश्वद्रसिका रसिकेश्वरी १११

अवटोदा ताम्रपर्णी कृतमाला विहायसी ।
कृष्णा वेणी भीमरथी तापी रेवा महापगा ॥ ११२
वैयासकी च कावेरी तुङ्गभद्रा सरस्वती ।
चन्द्राभागा वेत्रवती ऋषिकुल्या ककुद्मती ॥ ११३
गौतमी कौशिकी सिन्धुर्बाणगङ्गातिसिद्धिदा ।
गोदावरी रत्नमाला गङ्गा मन्दाकिनी बला ॥ ११४
स्वर्णदी जाह्नवी वेला वैष्णवी मङ्गलालया ।
बाला विष्णुपदी प्रोक्ता सिन्धुसागरसङ्गता ॥ ११५
गङ्गासागरशोभाढ्या सामुद्री रत्नदा धुनी ।
भागीरथी स्वर्धुनीभूः श्रीवामनपदच्युता ॥ ११६
लक्ष्मी रमा रामणीया भार्गवी विष्णुवल्लभा ।
सीतार्चिर्जानकीमाता कलङ्करहिता कला ॥ ११७
कृष्णपादाब्जसम्भूता सर्वा त्रिपथगामिनी ।
धरा विश्वम्भरानन्ता भूमिर्धात्री क्षमामयी ११८
स्थिरा धरित्री धरणिरुर्वी शेषफणस्थिता ।
अयोध्या राघवपुरी कौशिकी रघुवंशजा ॥ ११९
मथुरा माथुरी पन्था यादवी ध्रुवपूजिता ।
मायापूर्बिल्वनीलाद्रिर्गङ्गाद्वारविनिर्गता ॥ १२०
कुशावर्तमयी ध्रौव्या ध्रुवमण्डलमध्यगा ।
काशी शिवपुरी शैवा वैन्ध्या वाराणसी शिवा ॥ १२१
अवन्तिका देवपुरी प्रोज्ज्वलोज्जयिनीजिता ।
द्वारावती द्वारकामा कुशभूता कुशस्थली ॥ १२२
महापुरी सप्तपुरी नन्दिग्रामस्थलस्थिता ।
शालग्रामशिलादित्या शम्भलग्राममध्यगा ॥ १२३
वंशगोपालिनी क्षिप्रा हरिमन्दिरवर्तिनी ।
बर्हिष्मती हस्तिपुरी शक्रप्रस्थनिवासिनी ॥ १२४

दाण्डकी सैन्धवी जम्बूः पौष्करी पुष्करप्रसूः ।
उत्पलावर्तगमना नैमिषी नैमिषावृता ॥ १२५
कुरुजाङ्गलभूः काली हैमवत्यार्बुदी बुधा ।
शूकरक्षेत्रविदिता श्वेतवाराहधारिता ॥ १२६
सर्वतीर्थमयी तीर्था तीर्थानां तीर्थकारिणी ।
हारिणी सर्वदोषाणां दायिनी सर्वसम्पदाम् ॥ १२७
वर्द्धिनी तेजसां साक्षाद्गर्भवासनिकृन्तनी ।
गोलोकधामधनिनी निकुञ्जनिजमञ्जरी ॥ १२८
सर्वोत्तमा सर्वपुण्या सर्वसौन्दर्यशृङ्खला ।
सर्वतीर्थोपरिगता सर्वतीर्थाधिदेवता ॥ १२९
नाम्नां सहस्रं कालिन्द्याः कीर्तिदं कामदं परम् ।
महापापहरं पुण्यमायुर्वर्द्धनमुत्तमम् ॥ १३०
एकवारं पठेद्रात्रौ चौरेभ्यो न भयं भवेत् ।
द्विवारं प्रपठेन्मार्गे दस्युभ्यो न भयं क्वचित् ॥ १३१
द्वितीयान्तु समारभ्य पठेत् पूर्णावधिं द्विजः ।
दशवारमिदं भक्त्या ध्यात्वा देवीं कलिन्दजाम् ॥ १३२
रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात् ।
गुर्विणी जनयेत् पुत्रं विद्यार्थी पण्डितो भवेत् ॥ १३३
मोहनं स्तम्भनं शश्वद्वशीकरणमेव च ।
उच्चाटनं घातनञ्च शोषणं दीपनं तथा ॥ १३४
उन्मादनं तापनञ्च निधिदर्शनमेव च ।
यद्यद्वाञ्छति चित्तेन तत्तत् प्राप्नोति मानवः ॥ १३५
ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ।
वैश्यो निधिपतिर्भूयाच्छूद्रः श्रुत्वा तु निर्मलः ॥ १३६
पूजाकाले तु यो नित्यं पठते भक्तिभावतः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १३७

शतवारं पठेन्नित्यं वर्षावधिमतः परम् ।
पटलं पद्धतिं कृत्वा स्तवञ्च कवचं तथा ॥ १३८
सप्तद्वीपमहीराज्यं प्राप्नुयान्नात्र संशयः ॥ १३९
निष्कारणं पठेद् यस्तु यमुनाभक्तिसंयुतः ।
त्रैवर्ग्यमेत्य सुकृती जीवन्मुक्तो भवेदिह ॥ १४०
निकुञ्जलीलाललितं मनोहरं
कलिन्दजाकूललताकदम्बकम् ।
वृन्दावनोन्मत्तमिलिन्दशब्दितं
व्रजेत् स गोलोकमिदं पठेच्च यः ॥ १४१

इति श्रीगर्गसंहितायां माधुर्यखण्डे सौभरिमान्धातृ-
संवादे यमुनासहस्रनामकथनं नाम
एकोनविंशोऽध्यायः ॥१९

नारद उवाच

इति कृष्णास्तवं श्रुत्वा मान्धाता नृपसत्तमः ।
अयोध्यां प्रययौ वीरो नत्वा श्रीसौभरिं मुनिम् ॥ १
इदं मया ते कथितं गोपीनां चरितं शुभम् ।
महापापहरं पुण्यं किं भूयः श्रोतुमिच्छसि ॥ २

बहुलाश्व उवाच

श्रुतं तव मुखाद् ब्रह्मन् गोपीनां वर्णनं परम् ।
यमुनायाश्च पञ्चाङ्गं महापातकनाशनम् ॥ ३
श्रीकृष्णः सबलः साक्षाद्गोलोकाधिपतिः प्रभुः ।
अग्रे चकार कां लीलां ललितां व्रजमण्डले ॥ ४

नारद उवाच

एकदा चारयन् गाः स्वाः सबलो गोपबालकैः ।
भाण्डीरे यमुनातीरे बाललीलां चकार ह ॥ ५
विहारं कारयन् बालैर्वाह्यवाहकलक्षणम् ।
विजहार वने कृष्णो दर्शयन् गा मनोहराः ॥ ६
तत्रागतो गोपरूपी प्रलम्बः कंसनोदितः ।
न ज्ञातो बालकैः सोऽपि हरिणा विदितोऽभवत् ॥ ७
विहारे विजयं रामं नेतुं कोऽपि न मन्यते ।
उवाह तं प्रलम्बोऽसौ भाण्डीराद् यमुनातटम् ॥ ८
अवरोहणतो दैत्यो मथुरां गन्तुमुद्यतः ।
दधार घनवद्रूपं गिरीन्द्र इव दुर्गमः ॥ ९
बभौ बलो दैत्यपृष्ठे सुन्दरो लोलकुण्डलः ।
आकाशस्थः पूर्णचन्द्रः सतडिज्जलदो यथा ॥ १०

दैत्यं भयङ्करं वीक्ष्य बलदेवो महाबलः ।
रुषा हन्‌न् मुष्टिना तं शिरस्यद्रिं यथाद्रिभित्‌ ॥ ११
विशीर्णमस्तको दैत्यो यथा वज्रहतो गिरिः ।
पपात भूमौ सहसा चालयन्‌ वसुधातलम्‌ ॥ १२
तज्ज्योतिर्निर्गतं दीर्घं बले लीनं बभूव ह ।
तदैव ववृषुर्देवाः पुष्पैर्नन्दनसम्भवैः ॥
अभूज्जयजयारावो दिवि भूमौ नृपेश्वर ॥ १३
एवं श्रीबलदेवस्य चरितं परमाद्भुतम्‌ ।
मया ते कथितं राजन्‌ किं भूयः श्रोतुमिच्छसि ॥ १४

बहुलाश्व उवाच

कोऽयं दैत्यः पूर्वकाले प्रलम्बो रणदुर्मदः ।
बलदेवस्य हस्तेन मुक्तिं प्राप कथं मुने ॥ १५

नारद उवाच

शिवस्य पूजनार्थं हि यक्षराट्‌ स्ववने शुभे ।
कारयामास पुष्पाणां रक्षां यक्षैरितस्ततः ॥ १६
तदप्यस्यापि जगृहुः पुष्पाणि प्रस्फुटन्ति च ।
ततः क्रुद्धो ददौ शापं यक्षराट्‌ धनदो बली ॥ १७
ये गृह्णन्त्यस्य पुष्पाणि स्वे चान्ये सुरमानवाः ।
भवितारोऽसुराः सर्वे मच्छापात्‌ सहसा भुवि ॥ १८
हूहूसुतोऽथ विजयो विचरंस्तीर्थभूमिषु ।
वनं चैत्ररथं प्राप्तो गायन्‌ विष्णुगुणान्‌ पथि ॥ १९
वीणापाणिरजानन्‌ यो गन्धर्वः सुमनांसि च ।
गृहीत्वा सोऽसुरो जातो गन्धर्वत्वं विहाय तत्‌ ॥ २०
तदैव शरणं प्राप्तः कुबेरस्य महात्मनः ।
नत्वा तत्प्रार्थनां चक्रे कृताञ्जलिपुटः शनैः ॥२१

तस्मै प्रसन्नो राजेन्द्र कुबेरोऽपि वरं ददौ ।
त्वं विष्णुभक्तः शान्तात्मा मा शोकं कुरु मानद ॥२२
द्वापरान्ते च ते मुक्तिर्बलदेवस्य हस्ततः ।
भविष्यति न सन्देहो भाण्डीरे यमुनातटे ॥२३

नारद उवाच

हूहूसुतः स गन्धर्वः प्रलम्बोऽभून्महाऽसुरः ।
कुबेरस्य वराद्राजन् परं मोक्षं जगाम ह ॥२४

इति श्रीगर्गसंहितायां माधुर्यखण्डे नारदबहुलाश्व-
संवादे प्रलम्बवधो नाम
विंशोऽध्यायः ॥२०

नारद उवाच

अथ क्रीडाप्रसक्तेषु गोपेषु सबलेषु च ।
तृणलोभेन विविशुर्गावः सर्वा महद्वनम् ॥१
ता आनेतुं गोपबाला. प्राप्ता मुञ्जाटवीं पराम् ।
सम्भूतस्तत्र दावाग्निः प्रलयाग्निसमो महान् ॥२
गोभिर्गोपाः समेतास्ते श्रीकृष्णं सबलं हरिम् ।
वदन्तः पाहि पाहीति भयार्ताः शरणं गताः ॥३
वीक्ष्य वह्निभयं स्वानां कृष्णो योगेश्वरेश्वरः ।
न्यमीलयत मा भैष्ट लोचनानीत्यभाषत ॥४
तथाभूतेषु गोपेषु तमग्निं भयकारकम् ।
अपिबद् भगवान् देवो देवानां पश्यतां नृप ॥५
एवं पीत्वा महावह्निं नीत्वा गोपालगोगणम् ॥
प्राप्तोऽभूद् यमुनापारं शुभाशोकवने हरिः ॥६
तत्र क्षुत्पीडिता गोपाः श्रीकृष्णं सबलं हरिम् ।
कृताञ्जलिपुटा ऊचुः क्षुधार्ताः स्मो वयं प्रभो ॥७
तदा तान् प्रेषयामास यज्ञ आङ्गिरसे हरिः ।
ते गत्वा तं यज्ञवरं नत्वोचुर्विमलं वचः ॥८

गोपा ऊचुः

गोपालबालैः सबलः समागतो
गाश्चारयञ्छ्रीव्रजराजनन्दनः ।
क्षुत्संयुतेऽस्मै समणाय भूसुराः
प्रयच्छताश्वन्नमनङ्गमोहिने ॥९

नारद उवाच

न किञ्चिदूचुस्ते सर्वे वचः श्रुत्वा द्विजा नृप ।
गोपा निराशा आगत्य प्रत्यूचुः सबलं हरि म् ॥१०

गोपा ऊचुः

त्वमस्यधीशो व्रजमण्डले बली
श्रीगोकुले नन्दपुरोग्रदण्डधृक् ।
न वर्तते दण्डमलं मधोः पुरि
प्रचण्डचण्डांशुमहस्तव स्फुरत् ॥११

नारद उवाच

पुनस्तान् प्रेषयामास तत्पत्नीभ्यो हरिः स्वयम् ।
यज्ञवाटं पुनर्गत्वा नत्वा विप्रप्रियास्तदा ॥१२
कृताञ्जलिपुटा ऊचुर्गोपाः कृष्णप्रणोदिताः ॥१३

गोपा ऊचुः

गोपालबालैः सबलः समागतो
गाश्चारयञ्छ्रीव्रजराजनन्दनः ।
क्षुत्संयुतेऽस्मै सगणाय चाङ्गनाः
प्रयच्छताश्वन्नमनङ्गमोहिने ॥१४

नारद उवाच

कृष्णं समागतं श्रुत्वा कृष्णदर्शनलालसाः ।
चतुर्विधान्नं पात्रैश्च नीत्वा सर्वद्विजाङ्गनाः ॥१५
त्यक्त्वा सद्यो लोकलज्जां कृष्णपार्श्वं समाययुः ।
अशोकानां वने रम्ये कृष्णातीरे मनोहरे ॥ १६
यथाश्रुतं तथा दृष्टं श्रीहरे रूपमद्भुतम् ।
प्राप्यानन्दं गताः सर्वास्तुरीयं योगिनो यथा ॥ १७

भगवानुवाच

धन्या यूयं दर्शनार्थमागता हे द्विजाङ्गनाः ।
प्रतियात गृहान् शीघ्रं निःशङ्का भूमिदेवताः ॥ १८
युष्माकन्तु प्रभावेण पतयो वो द्विजातयः ।
सद्यो यज्ञफलं प्राप्य युष्माभिः सह निर्मलाः ॥ १९

गमिष्यन्ति परं धाम गोलोकं प्रकृतेः परम् ।

नारद उवाच

अथ नत्वा हरिं सर्वा आजग्मुर्यज्ञमण्डलम् ।। २०

ता दृष्ट्वा ब्राह्मणाः सर्वे स्वात्मानं धिक् प्रचक्रिरे ।

दिदृक्षवस्ते श्रीकृष्णं कंसाद्भीता नचागताः ॥ २१

भुक्त्वान्नं सबलः कृष्णो गोपालैः सह मैथिल ।

गाः पालयन् आजगाम वृन्दारण्यं मनोहरम् ॥ २२

इति श्रीगर्गसंहितायां माधुर्यखण्डे नारदबहुलाश्व-
संवादे दावाग्निमोक्षविप्रपत्नीदर्शनं नाम
एकविंशोऽध्यायः ॥ २१

नारद उवाच

एकदा नन्दराजोऽसौ कृत्वा चैकादशीव्रतम् ।
द्वादश्यां यमुनां स्नातुं गोपालैर्जलमाविशत् ॥ १
तं गृहीत्वा पाशिभृत्यः पाशिलोकं जगाम ह ।
तदा कोलाहले जाते गोपानां मैथिलेश्वर ॥ २
आश्वास्य सर्वान् भगवान् गतवान् वारुणीं पुरीम् ।
भस्मीचकार सहसा पुरीदुर्गं हरिः स्वयम् ॥ ३
कोटिमार्तण्डसङ्काशं दृष्ट्वा प्रकुपितं हरिम् ।
नत्वा कृताञ्जलिः पाशी परिक्रम्याह धर्षितः ॥ ४

वरुण उवाच

नमः श्रीकृष्णचन्द्राय परिपूर्णतमाय च ।
असङ्ख्यब्रह्माण्डभृते गोलोकपतये नमः ॥ ५
चतुर्व्यूहाय महसे नमस्ते सर्वतेजसे ।
नमस्ते सर्वभावाय परस्मै ब्रह्मणे नमः ॥ ६

केनापि मूढेन ममानुगेन
कृतं परं हेलनमद्य देव ।
तत्क्षम्यतां भो शरणागतं मां
परेश भूमन् परिपाहि पाहि ॥७

नारद उवाच

इति प्रसन्नो भगवान् नन्दं नीत्वा सुपूजितः ।
सौख्यं प्रकाशयन् बन्धून् व्रजमण्डलमाययौ ॥ ८
नन्दराजमुखाच्छ्रुत्वा प्रभावं श्रीहरेर्महत् ।
गोपीगोपगणा ऊचुः श्रीकृष्णं नन्दनन्दनम् ॥ ९
यदि त्वं भगवान् साक्षाल्लोकपालैः सुपूजितः ।
दर्शयाशु परं लोकं वैकुण्ठं तर्हि नः प्रभो ॥ १०

नीत्वा सर्वांस्ततः कृष्ण एत्य वैकुण्ठमन्दिरम् ।
दर्शयामास रूप स्वं ज्योतिर्मण्डलमध्यगम् ॥ ११
सहस्रभुजसंयुक्तं किरीटकटकोज्ज्वलम् ।
शङ्खचक्रगदापद्मवनमालाविराजितम् ॥ १२
असङ्ख्यकोटिमार्तण्डसङ्काशं शेषसंस्थितम् ।
चामरान्दोलदिव्याभं ब्रह्माद्यैः परिसेवितम् ॥ १३
तदैव तान् गोपगणान् पार्षदास्ते गदाधराः ।
ऋजुं कृत्वा नतिं धृत्वा दूरे स्थाप्य प्रयत्नतः ॥ १४
चकितानिव तान् वीक्ष्य प्रोचुस्ते पार्षदा गिरा ।
रे रे तूष्णीं प्रभवत मा वक्तव्यं वनेचराः ॥ १५
भाषणं मा प्रकुरुत न दृष्टा किं सभा हरेः ।
वेदा वदन्ति चात्रैव साक्षाद्देवे स्थिते प्रभौ ॥ १६
इति शिक्षां गता गोपा हर्षिता मौनमास्थिताः ।
मनस्यूचुरयं कृष्ण उच्चसिंहासनस्थितः ॥ १७
अस्मान् दूरादधः कृत्वास्माभिर्वक्ति न कर्हिचित् ।
तस्माद् व्रजाद्वरं नास्ति कोऽपि लोको न सौख्यदः ।
यत्रानेन स्वभ्रात्रापि वार्त्ता स्याद्धि परस्परम् ॥ १८
इति प्रवदतस्तान् वै नीत्वा श्रीभगवान् हरिः ।
व्रजमागतवान् राजन् परिपूर्णतमः प्रभुः ॥ १९

इति श्रीगर्गसंहितायां माधुर्यखण्डे नारदबहुलाश्व-
संवादे नन्दादिवैकुण्ठदर्शनं नाम
द्वाविंशोऽध्यायः ॥२२

नारद उवाच

एकदा नृप गोपालाः शकटै रत्नपूरितैः ।
वृषभानूपनन्दाद्या आजग्मुश्चाम्बिकावनम् ।। १
भद्रकालीं पशुपतिं पूजयित्वा विधानतः ।
ददुर्दानं द्विजातिभ्यः सुप्तास्तत्र सरित्तटे ॥ २
तत्रैको निर्गतो रात्रौ सर्पो नन्दं पदेऽग्रहीत् ।
कृष्ण कृष्णेति चुक्रोश नन्दोऽतिभयविह्वलः ॥ ३
तदोल्मुकैर्गोपबालास्तेदुराजगरं नृप ।
पदं सोऽपि न तत्याज सर्पोऽथ स्वमर्णि यथा ॥ ४
तताड स्वपदा सर्पं भगवान् लोकपावनः ।
त्यक्त्वा तदैव सर्पत्वं भूत्वा विद्याधरः कृती ॥ ५
नत्वा कृष्णं परिक्रम्य कृताञ्जलिपुटोऽवदत् ।

सुदर्शन उवाच

अहं सुदर्शनो नाम विद्याधरवरः प्रभो ।
अष्टावक्रं मुनिं दृष्ट्वा हसितोऽस्मि महाखलः ।। ६
मह्यं शापं ददौ सोऽपि त्वं सर्पो भव दुर्मते ।
तच्छापादद्य मुक्तोऽहं कृपया तव माधव ।। ७

त्वत्पादपद्ममकरन्दरजः कणानां
स्पर्शेन दिव्यपदवीं सहसा गतोऽस्मि ।
तस्मै नमो भगवते भुवनेश्वराय
यो भूरिभारहरणाय भुवोऽवतारः ।। ८

नारद उवाच

इति नत्वा हरिं कृष्णं राजन् विद्याधरस्तु सः ।
जगाम वैष्णवं लोकं सर्वोपद्रववर्जितम् ।। ९

नन्दाद्या विस्मिताः सर्वे ज्ञात्वा कृष्णं परेश्वरम् ।
अम्बिकावनतः शीघ्रमाययुर्व्रजमण्डलम् ॥ १०
इदं मया ते कथितं श्रीकृष्णचरितं शुभम् ।
सर्वपापहरं पुण्यं किं भूयः श्रोतुमिच्छसि ॥ ११

बहुलाश्व उवाच

अहो श्रीकृष्णचन्द्रस्य चरितं परमाद्भुतम् ।
श्रुत्वा मनो मे तच्छ्रोतुमतृप्तं पुनरिच्छति ॥ १२
अग्रे चकार कां लीलां लीलया व्रजमण्डले ।
हरिर्व्रजेशः परमो वद देवर्षिसत्तम ॥ १३

इति श्रीगर्गसंहितायां माधुर्यखण्डे नारदबहुलाश्व-
संवादे सुदर्शनोपाख्यानं नाम
त्रयोविंशोऽध्यायः ॥ २३

नारद उवाच

एकदा शैलदेशेषु सबलो भगवान् हरिः।
कृत्वा निलायनक्रीडां चौरपालकलक्षणाम् ॥ १
तत्र व्योमासुरो दैत्यो बालान् मोषायितान् बहून्।
नीत्वा नीत्वाद्रिदर्याञ्च विनिःक्षिप्य पुनः पुनः ॥ २
शिलया पिदधे द्वार मयपुत्रो महाबलः।
सत्यचौरञ्च त ज्ञात्वा भगवान् मधुसूदनः।
गृहीत्वा पातयामास भुजाभ्यां भूमिमण्डले ॥ ३
तदा मृत्यु गतो दैत्यस्तज्ज्योतिर्निर्गत स्फुरत्।
दशदिक्षु भ्रमद् राजन् श्रीकृष्णे लीनतां गतम् ॥ ४
तदा जय जयारावो दिवि भूमौ बभूव ह।
पुष्पाणि ववृषुर्देवाः परमानन्दसंवृताः ॥ ५

बहुलाश्व उवाच

कोऽयं पूर्वं कुशलकृद् व्योमो नामाथ तद्वद।
येन कृष्णे घनश्यामे लीनोऽभूद्दामिनी यथा ॥ ६

नारद उवाच

आस तु काश्यां भीमरथो राजा दानपरायणः।
यज्ञकृन् मानदो धन्वी विष्णुभक्तिपरायणः ॥ ७
राज्ये पुत्रं सन्निवेश्य जगाम मलयाचलम्।
तपस्तत्र समारेभे वर्षाणां लक्षमेव हि ॥ ८
तस्याश्रमे पुलस्त्योऽसौ शिष्यवृन्दैः समागत.।
तं दृष्ट्वा नोत्थितो मानी राजर्षिर्न नतोऽभवत् ॥ ९
शापं ददौ पुलस्त्योऽपि दैत्यो भव महाखल।
ततस्तच्चरणोपान्ते पतितं शरणागतम् ॥ १०

उवाच मुनिशार्दूलः पुलस्त्यो दीनवत्सलः ।
द्वापरान्ते माथुरे च पुण्ये श्रीव्रजमण्डले ॥ ११
यदुवंशपतेः साक्षाच्छ्रीकृष्णस्य भुजौजसा ।
ईप्सिता योगिभिर्मुक्तिर्भविष्यति न संशयः ॥ १२

नारद उवाच

सोऽयं भीमरथो राजा मयदैत्यसुतोऽभवत् ।
श्रीकृष्णभुजवेगेन मुक्तिं प्राप विदेहराट् ॥ १३
एकदा गोपघोषेषु दैत्योऽरिष्टो महाबलः ।
आगतो नादयन् खं गान् तटान् शृङ्गैर्विदारयन् ॥ १४
गोप्यो गोपा गोगणाश्च वीक्ष्य तं दुद्रुवुर्भयात् ।
भगवान् दैत्यहा देवो मा भैष्टेत्यभयं ददौ ॥ १५
गृहीत्वा त तु शृङ्गेषु नोदयामास माधवः ।
सोऽपि त नोदयामास श्रीकृष्णं योजनद्वयम् ॥ १६
पुच्छे गृहीत्वा तं कृष्णो भ्रामयित्वा भुजौजसा ।
भूपृष्ठे पोथयामास कमण्डलुमिवार्भकः ॥ १७
अरिष्टः पुनरुत्थाय क्रोधसंरक्तलोचनः ।
शृङ्गैश्च रोहितं शैलं समुत्पाट्य महाबलः ॥ १८
गर्जयन् घनवद्वीरः कृष्णोपरि समाक्षिपत् ।
कृष्णः शैलं सङ्गृहीत्वा तस्योपरि समाक्षिपत् ॥ १९
शैलस्यापि प्रहारेण किञ्चिद् व्याकुलमानसः ।
भूमौ तताड शृङ्गाग्रान्निर्गतं तैर्जलं भुवः ॥ २०
श्रीकृष्णस्तञ्च शृङ्गेषु गृहीत्वा भ्रामयन् मुहुः ।
भूपृष्ठे पातयामास वातः पद्ममिवोद्धृतम् ॥ २१
तदैव वृषरूपत्वं त्यक्त्वा विप्रवपुर्धरः ।
नत्वा श्रीकृष्णपादाब्जं प्राह गद्गदया गिरा ॥ २२

द्विज उवाच

बृहस्पतेश्च शिष्योऽहं वरतन्तुर्द्विजोत्तमः।
बृहस्पतिसमीपे च पठितुं गतवानहम्॥ २३
पादौ कृत्वा स्थितोऽभूवं पश्यतस्तस्य सम्मुखे।
तदा रुषाह स मुनिर्वृषवत्त्वं स्थितः पुरः॥ २४
गुरुहेलनतस्तस्मात्त्वं वृषो भव दुर्मते।
तेन शापाद् वृषोऽभूवं वङ्गदेशेषु माधव॥ २५
असुराणां प्रसङ्गेनासुरत्वं गतवानहम्।
त्वत्प्रसादाद् विमुक्तोऽहं शापतोऽसुरभावतः॥ २६
श्रीकृष्णाय नमस्तुभ्यं वासुदेवाय ते नमः।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः॥ २७

नारद उवाच

इत्युक्त्वा श्रीहरिं नत्वा साक्षाच्छिष्यो बृहस्पतेः।
द्योतयन् भुवनं राजन् विमानेन दिवं ययौ॥ २८
इदं मया ते कथितं खण्डं माधुर्य्यसंज्ञितम्।
सर्वपापहरं पुण्यं कृष्णप्राप्तिकरं परम्॥ २९
कामदं पठतां शश्वत् किं भूयः श्रोतुमिच्छसि॥ ३०

इति श्रीगर्गसंहितायां माधुर्यखण्डे नारदबहुलाश्व-
संवादे व्योमासुरारिष्टासुरवधो नाम
चतुर्विंशोऽध्यायः॥ २४

इति श्रीगर्गसंहितायां चतुर्थं माधुर्यखण्डं सम्पूर्णम्।

२।१४ श्लोकपूर्वार्द्धं नास्ति ख० पु० ।

२।१५ ०श्यामलाङ्गी० इति क० पु० ।

०पद्मलोचना । इति ख० पु० ।

३।१ मैथिलीनां० इति मु० पु० ।

३।४ ०स्नात्वा श्रीयमुना० इति ख० पु० ।

०भगवद्गुणाम् ॥ इति क० ख० ग० पु० ।

३।८ प्रतीच्छत स्व० इति मु० पु० ।

३।६ राजन्त्यस्ताः० इति ख० मु० पु० ।

३।११ ०निर्दयोऽसि । इति क० पु० ।

३।१५ आह मन्दस्मितः० इति मु० पु० ।

४।७ ०चाग्निजलयोर्मध्यां० इति मु० पु० ।

४।१३ ०विनिधाय बाहु० इति मु० पु० ।

४।१५ ०कृतं कदापि० इति मु० पु० ।

५।२ ०चम्पिका नाम० इति क० ख० पु० ।

०चम्पको नाम० इति ग० पु० ।

५।४ भार्या च षट्० इति क० पु० ।

भार्याषट् सुसहस्रा० इति ख० पु० ।

भार्या षट् सहस्रा० इति ग० पु० ।

०वन्ध्यत्वं ताः० इति क० ख० पु० ।

५।५ ०भूयान्मेऽत्राशुभं नृप । इति मु० पु० ।

५।१० अनपत्येन दुःखेन० इति मु० पु० ।

५।११ श्लोकोऽयं नास्ति क० ख० पु० ।

याज्ञवल्क्य उवाच इत्यपि नास्ति क० ख० पु० ।

५।१५ तेनैव ते सर्वं ऋणं देवर्षि पितॄणां प्रभो । मुच्यते नृप शार्दूल० इति क० ख० ग० पु० ।

५।१७ किं वर्णाः कीदृशो रूपो० इति क० ख० ग० पु० ।

५।२० बुधेऽष्टम्याम० इति ख० पु०

५।२२ ०भविष्यति चतुर्भुजः। इति ग० मु० पु०।

६।१२ ०पुत्रास्तु पुरा जाता० इति मु० पु०।

७।२ ०मुवाच सः॥ इति मु० पु०।

७।३ ०दूरे तस्मै० इति मु० पु०।

७।६ यदू गोपिका........... स्वकीयम्॥ इति नास्ति ग० पु०।

७।७ प्रथम.पादः नास्ति ग०पु०।

७।६ ०विमलो यथेन्द्र० इति ग० मु० पु०।

७।२१ ०चक्र आत्मनिवे० इति ग० मु० पु०।

७,२२ ०भक्तवत्सलः॥ इति मु० पु०।

७।२८ श्लोकापरार्द्धं नास्ति क० ख० पु०।

०तन्मनः शुभाः॥ इति ग० पु०।

८।२ ०दिशि स्वतः। इति क० ख० पु०।

८।७ ०द्भूतं शुभम्॥ इति मु० पु०।

८।१० वत्सरस्यैकादशीनां० इति मु० पु०।

८।११ मुरवेचवधा० (?) इति ख० ग० पु०।

सुरासुरवधा० इति मु० पु०।

८।१३ उत्पन्ना च तथा० इति ख० पु०।

८।१४ आमलकी ततः० इति मु० पु०।

८।१५ श्लोकापरार्द्धं नास्ति ग० पु०।

८।१६ श्लोकपूर्वार्द्धं नास्ति ग० पु०।

श्लोकापरार्द्धेऽपि पापाङ्कुशा रमा चैव इति नास्ति ग० पु०।

पाशाङ्कुशा रमा० इति मु० पु०।

८।१६ ०वस्त्रो विनिर्मलः। इति मु० पु०।

०हरिं नतः॥ इति मु० पु०।

८।२५ ०दद्यात् स दक्षिणां पुनः।

इति ग० मु० पु० ।
८।२६ ०भोजनमैथुने ॥ इति मु० पु० ।
८।२७ विष्णुव्रते च कर्त्तव्ये० इति मु० पु० ।
८।२८ नास्ति ग० पु० ।
८।२९ ०वितथभोजनम् । इति ख० ग० मु० पु० ।
०मैथुने ॥ इति मु० पु० ।
८।३० पिष्टापिष्टमसूरां० इति मु० पु० ।
पुष्टिषष्टि मसूरां० इति ग० पु० ।
८।३३ ०त्याज्यो गङ्गाघटो यथा ॥ इति० मु० पु० ।
८।३४ ०यथा वृद्धिं० इति मु० पु० ।
८।३७ नास्ति ग० पु० ।
८।३८ नास्ति ग० पु० ।
८।३९ ०कृत्वैकादशी० इति मु० पु० ।
श्लोकपूर्वार्द्धं नास्ति ग० पु० ।
८।४८ नास्ति ग० पु० ।
८।४९ नास्ति ग० पु० ।
९।१ विडम्बयन्ती ते० इति क० ग० पु० ।
विडम्बयन्ति ते० इति ख० पु० ।
९।४ वैषानेन पुरा राज्ञा० इति ग० पु० ।
वैशन्तेन पुरा राज्ञा० इति मु० पु० ।
९।५ ०कृता येन राज्यं० इति ख० ग० मु० पु० ।
९।६ ०समानिनः ॥ इति ख० पु० ।
९।७ ०एकादशीव्रतम् । इति मु० पु० ।
९।१० ०समुत्पन्ने० इति मु० पु० ।
९।१२ ०पत्न्या गतः० इति ग० मु० पु० ।
९।२० ०स पुरा ययौ ॥ इति मु० पु० ।
९।२१ ०प्राप्तः सदा वै० इति मु० पु० ।
९।२४ एकादशीदिनेनापि० इति ग० मु० पु० ।
१०।१५ याः पारमेष्ठ्य० इति मु० पु० ।
०रजः सुभक्तः ॥ इति मु०

पु० ।

११।३ ०श्रीसख्योऽपि समुद्रजाः॥ इति मु० पु० ।

११।४ ०स्तदाजनपदाश्रिताः। इति मु० पु० ।

११।५ ०प्रसादार्थं० इति मु० पु० । श्लोकपूर्वार्द्धं व्यत्ययेन दृश्यते मु० पु० ।

११।६ तासां प्रेम० इति मु० पु० । ०कृष्णो वै तद्गृहान्० इति मु० पु० ।

११।१२ एवं ताः० इति मु० पु० ।

११।१८ युस्माकमाज्ञया वक्ष्ये सर्वेषां० इति मु० पु० ।

११।२० यदिसौत्रैव० इति ख० मु० पु० ।
०योऽस्ति वै मुने। इति मु० पु०

११।२१ दुर्लभं दुर्घटं भावं० इति क० ख० ग० पु० ।

११।२३ ०मिलिताद्यासु० इति क० ख० ग० पु० ।

१२।५ ता राधिका सहचर्य्यः० इति क० ख० ग० पु० ।

१२।७ ०ते पुरवने व्रजभू० इति ग० मु० पु० ।

१२।६ ०भूमण्डले च सधनुष्क घनो० इति मु पु० ।
०भूमण्डले सधनुषेव० इति क० ग० पु० ।

१२।१० ०हस्तागृहीत० इति मु० पु० ।

१२।१२ ०प्रक्षालितं करतलं० इति ग० मु० पु० ।

१२।१५ उपहस्ता.० इति ख० ग० पु० ।
रक्तहस्ताः० इति मु० पु० ।

१३।२ ०नीतिमान् मरः॥ इति मु० पु० ।

१३।५ ०घोषं चक्रे० इति मु० पु० ।

१३।८ ०नित्यं गत्वा० इति क० पु० ।
०प्रेमास्पदसमा० इति ग० मु० पु० ।

१३.६ ०ऊचुस्तं परं० इति मु० पु० ।

१३।१४ ०कृतं कदापि प्रेम्णौ० इति मु० पु० ।

१४।४ ०वार्षिकं स० इति मु० पु० ।

१४।५ वार्षिकन्तु करं० इति मु० पु० ।

१४।११ ताभ्यः सार्द्धं० इति क० ख० पु० ।

०दंशिना युद्धे० इति ख० पु० ।

ताभिः सार्द्धं० इति ग० पु० ।

१४।१३ ०र्जयकातरः ।। इति क० ख० पु० ।

०र्भयकातरः ।। इति ग० पु० ।

१४।१५ दूत उवाच इति नास्ति मु० पु० ।

१४।२० पादे च० इति मु० पु० ।

१४।२७ चिक्षेप सम्मुखे० इति मु० पु० ।

१४।३२ ०सर्वे ते मौन० इति क० पु० ।

१५।२ ०वरात् तास्तु० इति मु० पु० ।

०पृथिव्या दोहना० इति मु० पु० ।

१५।३ ०पुरन्ध्र्यो या जाता० इति ग० मु० पु० ।

१५।५ ०श्रीपतिं परम् ।। इति ख० पु० ।

१५।६ ०रुत व्रजे ।। इति ग० पु० ।

०मधुव्रते ।। इति मु० पु० ।

१५।८ ०कल्पवृक्षमनोहरे ।। इति ग० मु० पु० ।

१५।११ ०श्रीकृष्णं इत्यारभ्य श्लोकान्तं यावत् नास्ति क० ख० पु० ।

१५।१२ नागेन्द्रकन्यकाः सर्वा० इति नास्ति क० ख० पु० ।

१५।१५ ०हानिः परा० इति मु० पु० ।

१६।६ ०अधिमेदिनी । इति मु० पु० ।

०पापापहारिणी ।। इति मु० पु० ।

१६।१२ ०राज्याधिपत्यत्वं० इति क० ख० ग० पु० ।

१६।१३ ०त्रिमासावधिमाश्रितम् । इति क० ख० ग० पु० ।

१७।५ ०कृष्णरूपं त्वमेव० इति क० ख० ग० पु० ।

१७।६ ०सुरनगरवनान्० इति क० ख० पु० ।

१७।८ ०मालास्ति वा सुन्दरी । इति

मु० पु० ।

१८।१ ०पद्धतिं यथा । इति ग० मु० पु० ।

१८।८ ०ककुद्मतीम् ॥ इति मु० पु० ।

१८।११ ०यूथीभूतायै० इति नास्ति मन्त्रशरीरे क० पु० ।

१८।१३ ०देशिकः ॥ इति मु० पु० ।

१८।१६ ०प्रादात्तेभ्यः सुभो० इति क० ख० ग० पु० ।

१६।३ ०ध्याये मार्त्तण्ड० इति ग० मु० पु० ।

१६।५ ०मण्डलमण्डिता ॥ इति मु० पु० ।

१६।७ ०पल्लववासिनी ॥ इति क० ख० पु० ।

१६।६ ०कुञ्जद्वारनिर्गता । इति मु० पु० ।

१६।१० ०मिश्रा निर्जलाभा० इति मु० पु० ।

१६।११ ०ब्रह्माण्डभाविनी ॥ इति क० ख० पु० ।

१६।१२ ०लोकगता० इति ख० ग० पु० ।

१६।१५ ०बुद्धिजा रचिताम्बरा । इति क० पु० ।

१६।१७ गाण्डिवीभा० इति क० पु० ।

०कृष्णां वर० इति मु० पु० ।

१६।१६ स्वकीय० इति क० ख० पु० ।

०स्वीया स्वीयार्थसाधिनी । इति क० ख० मु० पु० ।

१६।२० सोमाभा० इति मु० पु० ।

१६।२५ ०मानदा प्राज्ञा० इति मु० पु० ।

ओङ्कारिणी जनत्कारी० इति क० पु० ।

१६।२६ काञ्चनीमयी । इति क० ख० ग० पु० ।

१६।२७ श्रीहारिणा० इति मु० पु० ।

१६।२६ ०दन्तधरा हेम० इति मु० पु० ।

१६।३१ ०लक्ष्म्या मथुरा० इति क० ख० पु० ।

१६।३३ ०प्रोन्नता सुष्टा० इति क० ख० पु० ।

१६।३२ ०गतिर्गात्रागङ्गा० इति क० पु० ।

१६।३६ वृन्दावनवना० इति मु०

पु० ।
१६।३७ ०प्रस्थाख्यातेतरा० इति क० पु० ।
०प्रस्था छातेतरा (?) इति ख० ग० पु० ।
१६।३८ ०दुर्दुरी धरा। इति मु० पु० ।
१६।४० प्लवारूपा० इति क० ख० पु० ।
स्नवारूपा० इति ग० पु० ।
१६।४३ ०कुसुमाम्बरभा० इति मु० पु० ।
१६।४४ ०राजप्रभूर्भूरि० इति मु० पु० ।
१६।४६ ०टवीनन्दनदी० इति क० ख० पु०
१६।४७ काकली० इति मु० पु० ।
०भाण्डारकुश० इति मु० पु० ।
१६।४९ ०नानावर्णसम० इति मु० पु० ।
१६।५१ ०रङ्गभूमाढ्या० इति मु० पु० ।
१६।५५ ताम्रालालाताम्री० इति ग० मु० पु० ।
१६।५६ ०लिप्तवाणी० इति मु० पु० ।
१६।५८ ०पांसुला च० इति मु० पु० ।
सूर्यकोटिप्रभा० इति मु० पु० ।
०सूर्यसमुद्भवा ॥ इति मु० पु० ।
१६।६० ०सावर्ण्यानुभवा० इति मु० पु० ।
१६।६२ चन्द्रावती० इति ग० मु० पु० ।
०नुगांशुका। इति मु० पु० ।
०गरिमंयी ॥ इति ख० पु० ।
०गरिमयी ॥ इति क० पु० ।
०गरीमशी ॥ इति ग० पु० ।
१६।६३ धनाश्री० इति क० पु० ।
१६।६४ ०गौरी वैराटी० इति क० ख० ग० पु० ।
१६।६५ ०गानक्रियामात्र० इति मु० पु० ।
१६।६६ वैराग़री सोरठी० इति मु० पु० ।
१६।६७ कामाकारश्रीः० इति क० पु० ।

०श्रीकल्याणी० इति मु० पु० ।

१६।६६ ०सुधासौध० इति ग० मु० पु० ।

१६।७२ ०वासिनी प्रौढ्या० इति क० पु० ।

०वासिनी प्रौष्या० इति ख० ग० पु० ।

०रामा नीरुजा० इति ग० मु० पु० ।

१६।७८ ०पौरुषा० इति मु० पु० ।

१६।७६ चिछनासदस० (!) इति क० ख० ग० पु० ।

०दृष्टिर्दृश्या० इति मु० पु० ।

१६।८० ०वायुरहो० इति क० ख० पु० ।

१६।८४ पराशरी सैव सृष्टिः ० इति मु० पु० ।

०द्भगवतार्चिता ॥ इति मु० पु० ।

१६।८५ ०पुण्यांशा शास्त्र० इति क० ख० पु० ।

१६।८७ नास्ति ग० पु० ।

१६।८८ पुलोमजा शचीन्द्राणी इति नास्ति ग० पु० ।

०वेदी देववरा० इति ग० मु० पु० ।

वायुना० इति मु० पु० ।

१६।६० ०दत्ता द्युतिः० इति मु० पु० ।

०पुष्टभावना ॥ इति मु० पु० ।

१६।६६ ०दाशुगा ॥ इति मु० पु० ।

१६।६७ ईर्षा० इति मु० पु० ।

०ष्णाभिधा० इति मु० पु०

१६।९६ ०दुर्मर्षा० इति क० ख० पु० ।

०रानितिः । इति मु० पु० ।

१६।१०१ मुक्ति. प्रोक्तिः० इति मु० पु० ।

०प्रकृतिः पिङ्ग० इति मु० पु० ।

नागभावा० इति मु० पु० ।

१६।१०५ ०भाविता एवी० इति ग० पु० ।

१६।१०७ ०मैक्तिका च० इति ग० मु० पु० ।

१६।१०६ गोपा गोपीश्वरी० इति क० ख० ग० पु० ।

१६।११० ०गोकोटिर्गोगणावृता । इति क० ख० पु० ।

१६।११२ ०महार्य्यका: ॥ इति क०

गः पुः ।

१६।११३ वैकायसी चः इति कः पुः ।

वैहायसी चः इति खः पुः ।

वैयासकी चः इति गः पुः ।

१६।११५ ०पदी प्रोच्याः इति कः खः गः पुः ।

१६।११६ स्थिता धरित्रीः इति गः मुः पुः ।

०कौशली रघुः इति कः खः पुः ।

१६।१२१ ०पुरी शेषा विन्ध्याः इति मुः पुः ।

१६।१२२ द्वारावरा द्वारकामाः इति कः पुः ।

१६।१२५ दाडिमी सैन्धवीः इति मुः पुः ।

गण्डकी सैन्धवीः इति गः पुः ।

१६।१३६ ०श्रुत्वातिनिर्मलः ॥ इति कः खः पुः ।

२०।८ विहारविजयं इति कः खः गः पुः ।

२०।१० आकाशस्थेः इति कः खः गः पुः ।

२०।१७ ०प्रस्फुरन्ति च । इति मुः पुः ।

२०।२० नास्ति खः पुः ।

०रजानन् वैः इति मुः पुः ।

२१।६ ०यमुनापारेः इति मुः पुः ।

२१।६ क्षुत्संयुतोऽस्मैः इति कः खः गः मुः पुः ।

२१।१५ चक्रुस्तथान्नं पात्रेषुः इति मुः पुः ।

२२।७ ०मद्य चैवम् । इति मुः पुः ।

२२।८ ०नीत्वा सुजीवितम् । इति मुः पुः ।

२२।६ ०श्रीहरे स्तुतम् । इति मुः पुः ।

२२।१६ भाषणं माद्यः इति खः पुः ।

२२।१८ ०द्वरो नास्तिः इति मुः पुः ।

२३।६ ०महाबलः ॥ इति गः मुः पुः ।

२३।१२ ०रिच्छते ॥ इति कः खः गः पुः ।

२४।३ शिलया पिदधौ० इति मु० पु० ।

२४।१४ ०गोपवेषेषु० इति मु० पु० ।

२४।१७ श्लोकोत्तरार्द्धं नास्ति ग० पु० ।

२४।१८ नास्ति ग० पु० ।

२४।१९ श्लोकोत्तरार्द्धं नास्ति क० ख० पु० ।

२४।२१ ०पोथयामास० इति मु० पु० ।

०मिवोद्धतम् ॥ इति मु० पु० ।

२४।२४ ०पश्यतस्तस्य सम्मुखे । इति नास्ति ग० पु० ।

श्लोकोत्तरार्द्धं नास्ति ग० पु० ।

२४।२५ श्लोकपूर्वार्द्धं नास्ति ग० पु० ।

०हेलन कृत्तस्मा० इति मु० पु० ।

तेन शापाद् वृषोऽभूवं० इति नास्ति ग० पु० ।

२४।२६ ०सादाद्विनिर्मुक्तो शापतो० इति ख० पु० ।

२४।२९ ०माधुर्यमद्भुतम् । इति मु० पु० ।

श्रीगणेशाय नमः ।

# गर्गसंहिता

## ( मथुराखण्डः )

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥ १

बहुलाश्व उवाच

मथुरायां किं चरित्रं कृतवान् भगवान् मुने ।
कथं जघान कंसाख्यमेतन्मे ब्रूहि तत्त्वतः ॥ २

नारद उवाच

अथैकदाहं मथुरां पुरीं परां
विलोकितुं चागतवान् नृपेश्वर ।
कर्तुं परं दैत्यवधोद्यमं हरेः
परस्य साक्षान्मनसा प्रणोदितः ॥ ३
सिंहासने च प्रह्वते पुरन्दरात्
सितातपत्रे चलचारुचामरे ।
स्थितं नृपं कंसमुरङ्गदुःसहं
प्रावोचमेवं शृणु तत्प्रपूजितः ॥ ४
यशोदायाः सुता जाता या त्वद्धस्ताद्दिवं गता ।
देवक्यां कृष्ण उत्पन्नो रोहिणीनन्दनो बलः ॥ ५
स्वमित्रे नन्दराजे च न्यस्तौ पुत्रौ भवद्भयात् ।
तवारी रामकृष्णौ द्वौ वसुदेवेन दैत्यराट् ॥ ६

पूतनाद्या ह्यरिष्टान्ता दैत्या ये त्वद्भटोत्कटाः ।
याभ्यां हता वनोद्देशे ते मृत्यू तौ स्मृतौ किल ॥ ७
एवमुक्तो भोजपतिः क्रोधाच्चलितविग्रहः ।
जग्राह निशितं खड्ग शौरिं हन्तुं सभातले ॥ ८
मया निवारितः सोऽपि विस्तृतैर्निगडैर्दृढैः ।
बध्वा तं भार्यया सार्द्धं कारागारे रुरोध ह ॥ ९
इत्युक्त्वा तं मयि गते केशिनं दैत्यपुङ्गवम् ।
रामकृष्णवधार्थाय प्रेषयामास दैत्यराट् ॥ १०
चाणूरादीन् समाहूय महामात्यं द्विपस्य च ।
कार्यभारकराँल्लोकान् प्राहेदं भोजराड् बली ॥११

कंस उवाच

हे कूट हे तोशलक हे चाणूर महाबल ।
रामकृष्णौ च मे मृत्यू दर्शितौ नारदेन वै ॥ १२
भवद्भिरिह सम्प्राप्तौ हन्येतां मल्ललीलया ।
मल्लभूमिश्च संयुक्तां कुरुताशु शुभावहाम् ॥ १३
द्विपं कुवलयापीडं रङ्गद्वारि मदोत्कटम् ।
प्रस्थाप्य तेन हन्तव्यौ महामात्र ममाहितौ ॥ १४
चतुर्दश्यान्तु कर्तव्यो धनुर्यागः प्रशान्तये ।
अमावास्यादिने लोका मल्लयुद्धं भवेदिह ॥ १५

नारद उवाच

इत्युक्त्वा स्वजनान् कंसोऽक्रूरमाहूय सत्वरम् ।
रहसि प्राह राजेन्द्र मन्त्रं मन्त्रिजनप्रियम् ॥ १६

कंस उवाच

भो भो दानपते मन्त्रिन् शृणु मे परमं वचः ।
गच्छ नन्दव्रजं प्रातः कुरु कार्यं महामते ॥ १७

आसाते तत्र मे शत्रू वसुदेवसुतौ किल ।
दर्शितौ नारदेनापि देवदेवर्षिणा भृशम् ॥ १८
सोपायनैर्गोपगणैर्नन्दराजादिभिः सह ।
मथुरादर्शनमिषाद्रथेनानय मा चिरम् ॥ १९
द्विपेन वा महामल्लैर्घातयिष्यामि तौ शिशू ।
तत्पश्चान्नन्दराजञ्च वसुदेवसहायकम् ॥ २०
वृषभानुवरं पश्चान्नवनन्दोपनन्दकान् ।
पश्चाच्छौरिं हनिष्यामि देवकं तत्सहायकम् ॥ २१
उग्रसेनञ्च पितरं वृद्धं राज्यसमुत्सुकम् ।
तत्पश्चाद् यादवान् सर्वान् हनिष्यामि न संशयः ॥ २२
एते देवगणाः सर्वे जाता मन्त्रिन् महीतले ।
शकुनिर्मे महामित्रं बली चन्द्रावतीपतिः ॥ २३
भूतसन्तापनो दुष्टो वृकः शम्बर एव च ।
कालनाभो महानाभो हरिश्मश्रुस्तथैव च ॥ २४
एते मित्राणि मे सन्ति मदर्थे प्राणदा बलात् ।
श्वशुरोऽपि जरासन्धो द्विविदो मे सखा स्मृतः ॥ २५
बाणासुरश्च नरको मय्येव कृतसौहृदः ।
एतैः सर्वां महीं जित्वा बध्वा देवान् सवासवान् ॥ २६
क्षिप्त्वा मेरुगुहादुर्गे कुबेरं द्रव्यनायकम् ।
त्रैलोक्यराज्यन्तु सदा करिष्यामि न संशयः ॥ २७
कवीनां त्वं कविरिव गिरां गीष्पतिवद् भुवि ।
एतत् कार्यञ्च कर्तव्यं त्वया दानपते त्वरम् ॥ २८

अक्रूर उवाच

त्वया कृतो यदुपते मनोरथमहार्णवः ।
दैवेच्छयायं भवति गोष्पदं तद्विनार्णवः ॥ २९

कंस उवाच

विसृज्य दैवं कुरुते बलिष्ठो
दैवं समाश्रित्य हि निर्बलश्च ।
कालात्मनोर्नित्यगयोः प्रभावान्
निराकुलस्तिष्ठतु कर्मयोगी ॥ ३०

नारद उवाच

एवमुक्त्वा मन्त्रिवरं समुत्थाय सभास्थलात् ।
किञ्चित् प्रकुपितः कंसः शनैरन्तःपुरं ययौ ॥ ३१

इति श्रीगर्गसंहितायां मथुराखण्डे
नारदबहुलाश्वसंवादे कंसमन्त्रो नाम
प्रथमोऽध्यायः ॥ १

नारद उवाच

अथ केशी महादैत्यो हयरूपी मदोत्कटः ।
एत्य वृन्दावनं रम्यं जगर्ज घनवद्बली ॥ १
यस्य पादप्रताडेन निपेतुः शाखिनो दृढाः ।
पुच्छघातेन गगने खण्डं खण्डं ययुर्घनाः ॥ २
तं वीक्ष्य दुःसहजवं गोपगोपीगणा भृशम् ।
भयातुरा मैथिलेन्द्र श्रीकृष्णं शरणं ययुः ॥ ३
मा भैष्टेत्यभयं दत्त्वा भगवान् वृजिनार्दनः ।
कटौ पीतपटं बध्वा हन्तुं दैत्यं प्रचक्रमे ॥ ४
हरिं पश्चिमपादाभ्यां सन्तताड महासुरः ।
चालयन् पृथिवीं राजन् नादयन् व्योममण्डलम् ॥ ५
गृहीत्वा पादयोर्दैत्यं भ्रामयित्वा भुजेन खे ।
चिक्षेप योजनं कृष्णो वातः पद्ममिवोद्धृतम् ॥ ६
पुनरागतवान् सोऽपि क्रोधपूरितविग्रहः ।
पुच्छेन श्रीहरिं देवं सन्तताड प्रजाङ्गणे ॥ ७
पुच्छे गृहीत्वा तं कृष्णो भ्रामयित्वा भुजौजसा ।
योजनानां शतं राजँश्चिक्षेप गगने बलात् ॥ ८
आकाशात् पतितः सोऽपि किञ्चिद्व्याकुलमानसः ।
समुत्थाय पुनर्दैत्यो जगर्ज घनवद्बली ॥ ९
सटा विधुन्वन् रोमाणि वालं खे चालयन् मुहुः ।
महीं निर्जरयन् पादैरुत्पपात हरेः पुरः ॥ १०
तताड मुष्टिना तं वै भगवान् मधुसूदनः ।
तस्य मुष्टिप्रहारेण मूर्च्छितो घटिकाद्वयम् ॥ ११

मस्तकेन गलोद्देशे समुद्धृत्य हरिं हयः ।
भूमण्डलादुत्पपात गगने लक्षयोजनम् ॥ १२
तयोर्युद्धमभूद्धोरं गगने प्रहरद्वयम् ।
पादैर्दन्तैः सटाभिश्च पुच्छतीक्ष्णखुरैर्नृप ॥ १३
गृहीत्वा तं हरिर्दोर्भ्यां भ्रामयित्वा त्वितस्ततः ।
आकाशात् पातयामास कमण्डलुमिवार्भकः ॥ १४
विह्वलो घटिकामात्रं पुनरुत्थाय सत्वरः ।
जग्राह हस्ते श्रीकृष्णं चर्वयन् तत्तनुं शुभाम् ॥ १५
भुजं प्रवेशयामास तन्मुखे भगवान् हरिः ।
तस्योदरे गतो बाहुर्ववृधे रोगवद् भृशम् ॥ १६
तदा तु लेण्डं कृतवान् रुद्धवायुर्महासुरः ।
खण्डीभूतोदरः सद्यो ममार हयरूपधृक् ॥ १७
देहाद्विनिर्गतः सद्यो मुकुटी कुण्डलान्वितः ।
दिव्यरूपधरः कृष्णं प्राञ्जलिः प्रणनाम ह ॥ १८

कुमुद उवाच

शक्रस्यानुचरोऽहं वै कुमुदो नाम माधव ।
तेजस्वी रूपवान् वीरो जिष्णुच्छत्रभ्रमिं दधत् ॥ १९
वृत्रासुरवधे पूर्वं ब्रह्महत्याप्रशान्तये ।
यज्ञं चकार नाकेशो वाजिमेधं क्रतूत्तमम् ॥ २०
अश्वमेधहयं शुभ्रं श्यामकर्णं मनोजवम् ।
तमारुरुक्षुर्दुष्टोऽहं चोरयित्वा तलं गतः ॥ २१
ततो मरुद्गणैर्नीतं पाशबद्धं महाखलम् ।
शशाप मां बलारातिस्त्वं रक्षो भव दुर्मते ॥ २२
हयाकृतिस्ते सम्भूयाद्भूमौ मन्वन्तरद्वयम् ।
तच्छापादद्य मुक्तोऽहं सद्यस्त्वत्स्पर्शनात् प्रभो ॥ २३

किङ्करं कुरु मां देव त्वदङ्घ्रौ लग्नमानसम् ।
नमस्तुभ्यं भगवते सर्वलोकैकसाक्षिणे ॥ २४

नारद उवाच

प्रदक्षिणीकृत्य हरिं परेश्वरं
विमानमारुह्य महोज्ज्वलं परम् ।
वैकुण्ठलोकं कुमुदो ययौ त्वरं
विराजयन् मैथिल मण्डलं दिशाम् ॥ २५

इति श्रीगर्गसंहितायां मथुराखण्डे
नारदबहुलाश्वसंवादे केशिवधो नाम
द्वितीयोऽध्यायः ॥ २

नारद उवाच

अक्रूरो रथमारुह्य कर्तुं कार्यं नृपस्य वै।
प्रहर्षितो मैथिलेन्द्र प्रययौ नन्दगोकुलम्॥ १
परां भक्तिं ह्युपगतः श्रीकृष्णे पुरुषोत्तमे।
एवं विचारयन् बुद्ध्या पथि गच्छन् महामतिः॥ २

अक्रूर उवाच

किं भारते वा सुकृतं कृतं मया
निष्कारणं दानमलं क्रतूत्तमम्।
तीर्थाटनं वा द्विजसेवनं शुभं
येनाद्य द्रक्ष्यामि हरिं परेश्वरम्॥ ३
तपः सुतप्तं किमलं पुरा कृतं
सत्सेवनं भक्तियुतं मया कृतम्।
येनैव मे दर्शनमद्य दुर्लभं
श्रीकृष्णदेवस्य पुरो भविष्यति॥ ४
तेषां भवो वै सफलो महीतले
यत्रं ग्रगामी भगवान् सुरेश्वरः।
कृत्वाथ तद्दर्शनमद्य दुर्लभं
सद्यः कृतार्थो भवितास्मि सर्वतः॥ ५

नारद उवाच

इत्थं सञ्चिन्तयन् कृष्णं पश्यञ्छकुनमुत्तमम्।
सन्ध्यायां गोकुलं प्राप्तो रथस्थो गान्दिनीसुतः॥ ६
कृष्णपादाब्जचिह्नानि यवाङ्कुशयुतानि च।
तद्रागयुक्परागाणि रजांसि स ददर्श कौ॥ ७

तद्दर्शनौत्सुक्यभक्तिभावानन्दसमाकुलः ।
रथात् समुत्पत्य तेषु लुठंश्चाश्रु मुमोच सः ॥ ८
येषां श्रीकृष्णदेवस्य भक्तिः स्याद् ‌दि मैथिल ।
तेषामाब्रह्मणः सर्वं तृणवज्जगतः सुखम् ॥ ९
रथारूढस्ततोऽक्रूरः क्षणान्नन्दपुरं गतः ।
घोषेषु सबलं कृष्णमागच्छन्त ददर्श ह ॥ १०

देवौ पुराणौ पुरुषौ परेशौ
पद्मेक्षणौ श्यामलगौरवर्णौ ।
यथेन्द्रनीलध्वजवज्रशैलौ
समाश्रितौ तौ पथि रामकृष्णौ ॥ ११
बालार्कमौली वसनं तडिद्द्युती
वर्षाशरन्मेघरुचं दधानौ ।
दृष्ट्वा स तूर्णं स्वरथान्नतोऽङ्घ्रौ
तयोर्नतो भक्तियुतः पपात ॥ १२
नताननं बाष्पकलाकुलेक्षणं
रोमाञ्चितं वीक्ष्य हरिः परेश्वरः ।
दोर्भ्यां समुत्थाप्य घृणातुरोऽश्रु
मुमोच भक्तं परिरभ्य माधवः ॥ १३
एवं मिलित्वा सबलश्च त हरिः
सद्यः समानीय वरासनं ददौ ।
निवेद्य गां चातिथये सुभोजनं
रसावृतं प्रेमयुतो ह्युपाहरत् ॥ १४
तमाह नन्दः परिरभ्य दोर्भ्यां
महो कथं जीवसि कंसराज्ये ।
गतत्रपो यो निजघान बालान्
स्वसुः कथं सोऽन्यजनेष मोही ॥ १५

गृहं गते नन्दवरे हरि स्तं
पप्रच्छ सर्वं कुशलं स्वपित्रोः ।
तथा यदूनां किल बान्धवानां
कंसस्य सर्वां विपरीतबुद्धिम् ॥ १६

अक्रूर उवाच

परश्वोऽहनि हे देव हन्तुं शौरिं समुद्यतः ।
खड्गपाणिर्भोजराजो नारदेन निवारितः ॥ १७
दुःखिता बान्धवाः सर्वे यादवा भयविह्वलाः ।
सकुटुम्बाः कंसभयाद् भ्रमन् देशान्तरं गताः ॥ १८
अद्यैव यादवान् हन्तुं देवान् जेतुं समुद्यतः ।
अन्यत् किमपि कौ कर्तुमिच्छते दैत्यराड् बली ॥ १६
तस्माद्भवद्भ्यां गन्तव्यं कुशलं कर्तुमव्ययम् ।
भवन्तौ हि विना कार्यं किञ्चिन्न स्यात् सतां प्रभू ॥ २०

नारद उवाच

अथ तस्य वचः श्रुत्वा सबलो भगवान् हरिः ।
नन्दराजमतेनाह गोपान् कार्यकरानिदम् ॥ २१

भगवानुवाच

नन्दराजोऽपि सबलो वृद्धैर्गोपगणैरहम् ।
नन्दा नवोपनन्दाश्च तथा षड्वृषभानवः ॥ २२
मथुरान्तु गमिष्यन्ति सर्वे प्रातः समुत्थिताः ।
सर्वन्तु गोरसं तस्माद्दधिदुग्धघृतादिकम् ॥ २३
गृहीत्वैकत्र कर्तव्यं सोपायनमतः परम् ।
रथांश्च शकटैः सार्द्धं समर्थान् कुरुताशु वै ॥ २४

नारद उवाच

इति श्रुत्वा कार्यकरा गोपाः सर्वे गृहे गृहे ।
शृण्वन्तीनां गोपिकानामूचुः सर्वं यथोदितम् ॥ २५

तच्छ्रुत्वोद्विग्नहृदया गोप्यो विरहविह्वलाः ।
परस्परं वाक्यमूचुः सर्वास्ता हि गृहे गृहे ॥ २६

प्रस्थानस्य च वार्तेयं श्रीकृष्णस्य महात्मनः ।
वृषभानुवरस्यापि गृहे प्राप्ता नृपेश्वर ॥ २७

गमिष्यतो भर्तुरतीव दुःखिता
श्रुत्वाथ वार्तां सदसि ह्यकस्मात् ।
सम्प्राप मूर्च्छां वृषभानुनन्दिनी
रम्भेव भूमौ पतिता मरुद्धता ॥ २८

काश्चित् परिम्लानमुखश्रियोऽभवन्
प्रकङ्कणीभूतकराङ्गुलीयकाः ।
सद्यः श्लथद्भूषणकेशबन्धना
श्चित्रार्पितारम्भ इवावतस्थिरे ॥ २९

श्रीकृष्ण गोविन्द हरे मुरारे
काश्चिद्वदन्त्यः स्वगृहेऽतिविह्वलाः ।
विसृज्य कर्माणि गृहस्य सर्वतो
योगीव चानन्दगता नृपेश्वर ॥ ३०

काश्चित् समर्थास्तु परस्परं वचः
समेत्य राजन् युगपत् सखीजनम् ॥
ऊचुः स्खलद्गद्गदकण्ठवाचः
स्वतः स्रवद्बाष्पकलावहद्दृशः ॥ ३१

गोप्य ऊचुः

अहोऽतिनिर्मोहि जनस्य चित्रं
परं चरित्रं गदितुं न योग्यम् ।
मुखेन चान्यद् हृदिभाव्यमन्यद्
देवो न जानाति कुतो मनुष्यः ॥ ३२

रासेऽपि यद्यद्वदितं तु तत्तद्
विहाय गन्तुं समवस्थितोऽयम्।
गते पुरीं प्राणपतावहोऽस्मिन्
किं किं न कष्टं बत नो भविष्यत्॥ ३३

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे अक्रूरागमनं नाम
तृतीयोऽध्यायः॥ ३

नारद उवाच

राजन्नेवं वदन्तीनां गोपीनां विरहं परम् ।
विज्ञाय भगवान् देवः शीघ्रं तासां गृहान् ययौ ॥ १
यावत्यो योषितो राजंस्तावद्रूपधरो हरिः ।
स्वयं सम्बोधयामास वाग्भिः सर्वाः पृथक् पृथक् ॥ २
श्रीराधामन्दिरं गत्वा दृष्ट्वा राधाञ्च मूर्च्छिताम् ।
रहः स्थितां सखीसङ्गे ननाद मुरलीकलम् ॥ ३
श्रुत्वा वंशीध्वनिं राधा सहसोत्थाय चातुरा ।
नेत्रे उन्मील्य ददृशे श्रीगोविन्दं समागतम् ॥ ४
पद्मिनीव गतानन्दं पद्मिनी पद्मिनीपतिम् ।
वीक्ष्योत्थायागतायास्मै सादरेणासनं ददौ ॥ ५
अश्रुपूर्णमुखीं दीनां राधां कमललोचनाम् ।
शोचन्तीं भगवानाह मेघगम्भीरया गिरा ॥ ६

भगवानुवाच

विमनास्त्वं कथं भद्रे मा शोकं कुरु राधिके ।
अथवा गन्तुकामं मां श्रुत्वासि विरहातुरा ॥ ७
भुवो भारावताराय कंसादीनां वधाय च ।
ब्रह्मणा प्रार्थितः साक्षाज्जातोऽहं वै त्वया सह ॥ ८
मथुरां हि गमिष्यामि हरिष्यामि भुवो भरम् ।
शीघ्रमत्रागमिष्यामि करिष्यामि शुभं तव ॥ ९

नारद उवाच

इत्युक्तवन्तं जगदीश्वरं हरिं
राधा पतिं प्राह वियोगविह्वला ।

दावाग्निना दावलतेव मूर्च्छिता-
श्रुकम्परोमाञ्चितभावसंवृता ॥ १०

राधोवाच

भुवो भरं हर्तुमलं पुरीं व्रज
कृतं परं मे शपथं शृणु त्वतः ।
गते त्वयि प्राणपते च विग्रहं
कदाचिदत्रैव न धारयाम्यहम् ॥ ११
यदाथ मे त्वं शपथं न मन्यसे
द्वितीयवारं कथयामि वा कथम् ।
प्राणोऽधरे गन्तुमतीविह्वलः
कर्पूरधूलेः कणवद्गमिष्यति ॥ १२

भगवानुवाच

वचनं वै स्वनिगमं दूरीकर्तुं क्षमोऽस्म्यहम् ।
भक्तानां वचनं राधे दूरीकर्तुं न च क्षमः ॥ १३
श्रीदामशापात् पूर्वस्माद्गोलोके कलहान्मम ।
शतवर्षं ते वियोगो भविष्यति न संशयः ॥ १४
मा शोकं कुरु कल्याणि वरं मे स्मर राधिके ।
मासं मासं वियोगे ते दर्शनं मे भविष्यति ॥ १५

राधोवाच

मासं प्रति वियोगं मे दातुं स्वं दर्शनं हरे ।
चेन्नागमिष्यसि तदासून् दुःखात् सन्त्यजाम्यहम् ॥ १६
लोकाभिराम जनभूषण विश्वदीप
कन्दर्पमोहन जगद्वृजिनार्तिहारिन् ।
आनन्दकन्द यदुनन्दन नन्दसूनो
अद्यागमस्य शपथं कुरु मे पुरस्त्वम् ॥ १७

भगवानुवाच

रम्भोरु मासं प्रति ते वियोगे
चेन्नागमिष्ये शपथं गवां मे ।
निःसंशयं निष्कपटं वचस्त्व
मवेहि राधे कथितं मया यत् ॥ १८

यो मित्रतां निष्कपटं करोति
निष्कारणो धन्यतम: स एव ।
विधाय मैत्री कपटं विदध्यात्
तं लम्पटं हेतुपटं नरं धिक् ॥ १९

कर्मेन्द्रियाणीह यथा रसादीं
स्तथा सकामा मुनयः सुखं यत् ।
मनाङ् न जानन्ति हि नैरपेक्ष्यं
गूढं परं निर्गुणलक्षणं तत् ॥ २०

जानन्ति सन्तः समदर्शिनो ये
दान्ता महान्त: किल नैरपेक्षा: ।
ते नैरपेक्ष्यं परमं सुखं मे
ज्ञानेन्द्रियादीनि यथा रसादीन् ॥ २१

सर्वं हि भावं मनस: परस्परं
न ह्येकतो भामिनि जायते तत: ।
प्रेमैव कर्तव्यमतो मयि स्वत:
प्रेम्णा समानं भुवि नास्ति किञ्चित् ॥ २२

यथाहि भाण्डीरवटे मनोरथो
बभूव राधे हि तथा भविष्यति ।
अहैतुकं प्रेम च सद्भिराश्रितं
तच्चापि सन्तः किल निर्गुणं विदुः ॥ २३

ये राधिकायां त्वयि केशवे मयि
भेदं न कुर्वन्ति हि दुग्धशौक्ल्यवत् ।
त एव मे ब्रह्मपदं प्रयान्ति तद्
अहैतुकस्फूर्जितभक्तिलक्षणाः ॥ २४
ये राधिकायां त्वयि केशवे मयि
पश्यन्ति भेदं कुधियो नरा भुवि ।
ते कालसूत्रं प्रपतन्ति दुःखिता
रम्भोरु यावत् किल चन्द्रभास्करौ ॥ २५

नारद उवाच

एवमाश्वास्य तां राधां सर्वगोपीगणं तथा ।
आययौ नन्दभवनं भगवान् नयकोविदः ॥ २६
अथ सूर्योदये जाते नन्दाद्याः शकटैर्बलिम् ।
नीत्वा रथान् समारुह्य सर्वे श्रीमथुरां ययुः ॥२७
आरुह्य रामकृष्णाभ्यां स्वरथं गान्दिनीसुतः ।
प्रयाणमकरोद् राजन् मथुरां द्रष्टुमुद्यतः ॥ २८
कोटिशः कोटिशो गोप्यो मार्गे मार्गे समास्थिताः ।
पश्यन्त्यस्तन्निर्गमनं क्रोधाढ्या मोहविह्वलाः ॥ २९
क्रूर क्रूरेति चाक्रूरं वदन्त्यः परुषं वचः ।
रुरुधुः सर्वतो यानं यथार्कं सरथं घनाः ॥ ३०
अक्रूरस्य रथं राजन् निजघ्नुर्यष्टिभिर्भृशम् ।
अश्वांस्तथा सारथिञ्च भगवद्विरहातुराः ॥ ३१
अश्वास्तत्र समुत्पेतुस्ताडितास्त इतस्ततः ।
गोपीद्व्यङ्गुलिघातेन सारथिः पतितो रथात् ॥३२
विहाय लज्जां लोकस्य समाकृष्य रथाद्बलात् ।
कङ्कणैस्तेदुरक्रूरं पश्यतोः कृष्णरामयोः ॥ ३३

गोपीयूथबलं दृष्ट्वा सबलो भगवान् हरिः ।
गोपीः सम्बोधयामास रक्षित्वा गान्दिनीसुतम् ॥ ३४
सन्ध्यायामागमिष्यामि मा शोकं कुरुताङ्गनाः ।
पश्यतश्चास्य मद्धास्यं मा कुर्वन्तु व्रजौकसः ॥ ३५

इत्येवमुक्त्वा सरथः समागतो-
ऽक्रूरेण कृष्णो बलदेवसंयुतः ।
तुरङ्गमैर्वेगमयैर्मनोहरै
र्ययौ पुरीं यादववृन्दमण्डिताम् ॥ ३६
यावद्रथः केतुरुताश्वरेणु-
रालक्ष्यते तावदतीवमोहात् ।
स्थिता ह्यभूवन् पार्थचित्रवत् ताः
स्मृत्वा हरेर्वाक्यमुतागताशाः ॥ ३७

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे मथुराप्रयाणं नाम
चतुर्थोऽध्यायः ॥ ४

नारद उवाच

हरिरक्रूररामाभ्यां मथुरोपवनं गतः ।
यमुनानिकटं स्थित्वा वारि पीत्वा रथं ययौ ॥ १
अक्रूरस्तावनुज्ञाप्य स्नातुं श्रीयमुनां गतः ।
नित्यनैमित्तिकं कर्तुं विवेश विमले जले ॥ २
जले चागाधगम्भीरे महावर्तसमाकुले ।
ददर्श रामकृष्णौ तौ वदन्तौ गान्दिनीसुतः ॥ ३
विस्मितस्तौ रथेऽपश्यत् पुनर्वारिस्थितौ नृप ।
ददर्श तत्र सर्पेन्द्रं कुण्डलीभूतमास्थितम् ॥ ४
तस्योत्सङ्गे महालोकं गोलोकं लोकवन्दितम् ।
गोवर्द्धनाद्रियमुनावृन्दारण्यमनोहरम् ॥ ५
असङ्ख्यकोटिमार्तण्डज्योतिषां मण्डले प्रभुम् ।
परिपूर्णतमं साक्षाच्छ्रीकृष्णं पुरुषोत्तमम् ॥ ६
कोटिमन्मथलावण्यं रासमण्डलमध्यगम् ।
राधया सहितं देवं तत्राक्रूरो ददर्श ह ॥ ७
ज्ञात्वा कृष्णं परं ब्रह्म नत्वा नत्वा पुनः पुनः ।
कृताञ्जलिपुटोऽक्रूरः स्तुतिं चक्रेऽतिधर्षितः ॥ ८

अक्रूर उवाच

नमः श्रीकृष्णचन्द्राय परिपूर्णतमाय च ।
असङ्ख्याण्डाधिपतये गोलोकपतये नमः ॥ ९
श्रीराधापतये तुभ्यं व्रजाधीशाय ते नमः ।
नमः श्रीनन्दपुत्राय यशोदानन्दनाय च ॥ १०
देवकीसुत गोविन्द वासुदेव जगत्पते ।
यदूत्तम जगन्नाथ पाहि मां पुरुषोत्तम ॥ ११

वाणी सदा ते गुणवर्णने स्यात्
कर्णौ कथायां मम दोश्च कर्मणि ।
मनः सदा त्वच्चरणारविन्दयो-
र्दृशौ स्फुरद्धामविशेषदर्शने ॥ १२

नारद उवाच

एवं संस्तुवतस्तस्य पश्यतो विस्मितस्य च ।
तत्रैवान्तर्दधे कृष्णः सलोको भगवान् प्रभुः ॥ १३
नत्वा तञ्च तदाक्रूरः कृत्वा नैमित्तिकं विधिम् ।
ज्ञात्वा कृष्णं परं ब्रह्म विस्मितो रथमाययौ ॥ १४
दिनात्यये रामकृष्णावनयद् गान्दिनीसुतः ।
रथेन वायुवेगेन स्निग्धगम्भीरनादिना ॥ १५
पुरस्योपवने तत्र वीक्ष्य नन्दं यदूत्तमः ।
अक्रूरं प्राह विहसन् मेघगम्भीरया गिरा ॥ १६

भगवानुवाच

मथुरायां हि गन्तव्यं भवता स्वरथेन वै ।
गोपालैः सहितः पश्चादागमिष्यामि मानद ॥ १७

अक्रूर उवाच

देवदेव जगन्नाथ गोविन्द पुरुषोत्तम ।
सहाग्रजः सगोपालो गच्छ मे मन्दिरं प्रभो ॥ १८
पादारविन्दरजसा पवित्रीकुरु मद्गृहम् ।
त्वां विना न गमिष्यामि मन्दिरं स्वं जगत्पते ॥ १९

भगवानुवाच

गृहं तवागमिष्यामि हत्वा वै यादवाहितम् ।
सबलो बान्धवैः सार्द्धं करिष्यामि प्रियं तव ॥ २०

नारद उवाच

अथ तत्र स्थिते कृष्णे सोऽक्रूरो मथुरां गतः ।
निवेद्य चेदं कंसाय ततः स्वभवनं ययौ ॥ २१
अथापराह्णे सबलं गोविन्दं बालकैः पुरीम् ।
द्रष्टुमभ्युदितं वीक्ष्य नन्दो वाक्यमथाब्रवीत् ॥ २२
आर्जवेन पुरीं वीक्ष्यागन्तव्यं भवता किल ।
न गोकुलं विद्धि चैनां कंसराज्ये महाभये ॥ २३
तथास्तु चोक्त्वा भगवान् वृद्धैर्नन्दप्रणोदितैः ।
गोपालैर्बालकैः सार्द्धं सबलो गतवान् पुरीम् ॥ २४
प्रासादैर्गगनस्पर्शैर्हेमरत्नखचिद्गृहैः ।
शोभितां दुर्गसंयुक्तां देवधानीमिवस्थिताम् ॥ २५
कालिन्दीरत्नसोपानैश्चलदूर्मिकुतूहलैः ।
अलकामिव शोभाढ्यां दिव्यनारीनरैर्युताम् ॥ २६
प्रेक्षन् श्रीमथुरां कृष्णो धनिनां मन्दिराणि च ।
पश्यन् गोपालकैः सार्द्धं राजमार्गं विवेश ह ॥ २७

श्रुत्वागतं तं वसुदेवनन्दनं
बहुश्रुता वै मथुरापुराङ्गनाः ।
त्यक्त्वाथ कर्माणि विसृज्य ताः शिशून्-
द्रष्टुं व्यधावन् उदधिं यथापगाः ॥ २८

काश्चित्तु हर्म्यात् किल जालदेशात्
कुड्यात्तु काश्चित् पटतो गवाक्षात् ।
विनिर्गता द्वारकपाटदेशात्
तच्चत्वरात् तं ददृशुः पुरन्ध्यः ॥ २९

एकं चलत्कुन्तलमानने स्वे
किमग्रगानान्तु मनांसि हर्तुम् ।

पश्चात् कृतं मौलितले दधानं
किं पृष्ठगानां हरणं द्वितीयम् ॥ ३०
पीताम्बरार्द्धं बलितं स्फुरत्कटा-
बद्धं तदंसे जलदे यथा तडित् ।
पद्मं करे स्वे हृदि वैजयन्तीं
स्रज दधानं वसुदेवनन्दनम् ॥ ३१
विलोक्य सर्वा मुमुहुः पुरस्त्रियो
विलोलपाठीननवीनकुण्डलम् ।
बालार्कहेमाङ्गदबाहुमण्डलं
राजन् असङ्ख्याण्डपतिं परात्परम् ॥ ३२

पुरन्ध्र्य ऊचुः

अहो वृन्दावनं रम्यं यत्र सन्निहितो ह्ययम् ।
धन्या गोपगणाः सर्वे पश्यन्त्येनं मनोहरम् ॥ ३३
धन्या गोपरमण्यस्ता याभिः किं सुकृतं कृतम् ।
पिबन्ति या रासरङ्गे मुहुश्चास्याधरामृतम् ॥ ३४

नारद उवाच

राजमार्गे रङ्गकारं रजकं यान्तमुन्मदम् ।
गोपालानुमतेनैव प्राह तं मधुसूदनः ॥ ३५
देहि नो मित्र वासांसि रुचिराणि महामते ।
दातुस्ते हि परं श्रेयो भविष्यति न संशयः ॥ ३६
प्रज्वलन् कृष्णवाक्येन घृतेनाग्निर्यथा भृशम् ।
कंसभृत्यो महादुष्टः प्राहेदं पथि माधवम् ॥ ३७

रजक उवाच

ईदृशान्येव वस्त्राणि पितृभिर्वः पितामहैः ।
धारितानि किमुद्वृत्तास्तेन कौपीनधारकाः ॥ ३८

याताशु वन्या नगरात् सर्वे वै जीवितेच्छया ।
कारागारे कारयामि युष्मान् वस्त्राहरानहम् ॥ ३६

नारद उवाच

एवं प्रवदतस्तस्य रजकस्य यदूत्तमः ।
जहार मस्तकं सद्यः कराग्रेणैव लीलया ।
तज्ज्योतिः श्रीघनश्यामे लीनं जातं विदेहराट् ॥ ४०
सद्यस्तदनुगाः सर्वे वासः कोशान् विसृज्य वै ।
दुद्रुवुः सर्वतो राजन् शरत्काले यथा घनाः ॥ ४१
गृहीत्वात्मप्रिये वस्त्रे स्थितयो रामकृष्णयोः ।
जगृहुर्गोपबालास्ते राजमार्गजना अपि ॥ ४२
तद्धारणाविदो बाला वासांसि रुचिराणि च ।
अस्तव्यस्तं परिदधुः श्रीकृष्णस्य प्रपश्यतः ॥ ४३
वीक्ष्य तौ वायकः कश्चित् श्रीकृष्णबलदेवयोः ।
विचित्रवर्णैर्वासोभिर्दिव्यं वेषं चकार ह ॥ ४४
तथान्येषां शिशूनाञ्च यथायोग्यं विधाय सः ।
राजन् परमया भक्त्या पुनः कृष्णं ददर्श ह ॥ ४५
प्रसन्नो भगवांस्तस्मै प्रादात् सारूप्यमात्मनः ।
बलं श्रियं तथैश्वर्यं बलदेवो ददौ पुनः ॥ ४६

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे मथुरायां श्रीकृष्णप्रवेशो नाम
पञ्चमोऽध्यायः ॥ ५

नारद उवाच

अथ गोपालकैः सार्द्धं श्रीकृष्णो नन्दनन्दनः ।
गृहं जगाम सबलः सुदाम्नो दाममालिनः ॥ १
दृष्ट्वा तौ स समुत्थाय नमस्कृत्य कृताञ्जलिः ।
पुष्पसिंहासने स्थाप्य प्राह गद्गदया गिरा ॥ २

सुदामोवाच

धन्यं कुलं मे भवनञ्च जन्म
त्वय्यागते देव कुलानि सप्त ।
मातुः पितुः सप्त तथा प्रियाया
वैकुण्ठलोकं गतवन्ति मन्ये ॥ ३
भूभारमाहर्तुमलं यदोः कुले
जातौ युवां पूर्णतमौ परेश्वरौ
नमो युवाभ्यां मम दीनदीनं
गृहं गताभ्यां जगदीश्वरौ परौ ॥ ४

नारद उवाच

इत्युक्त्वा पुष्परचनालङ्कारान् मधुपध्वनीन् ।
निवेद्य मकरन्दांश्च मालाकारो ननाम ह ॥ ५
धृत्वा तत्पुष्पनिचयं सबलो भगवान् हरिः ।
दत्वा गोपेभ्य आरात्तं प्राह प्रहसिताननः ॥ ६
गरीयसी मत्पदाब्जे भक्तिर्भूयात् सदा तव ।
मद्भक्तानान्तु सङ्गः स्यान्मत्सारूप्यमिहैव हि ॥ ७
बलदेवो ददौ तस्मै श्रियं चान्वयवर्द्धिनीम् ।
उत्थाय तौ ततो राजन् अन्यां वीथीं प्रजग्मतुः ॥ ८

यान्तीं स्त्रियं पद्मनेत्रां पाटीरालेपभाजनम् ।
बिभ्रतीं युवतीं कुब्जां पथि पप्रच्छ माधवः ॥ ९

भगवानुवाच

का त्वं कस्य प्रिया सुभ्रूः कस्यार्थं चन्दनं त्विदम् ।
देह्यावयोर्येन तव चिरं श्रेयो भविष्यति ॥ १०

सैरन्ध्र्युवाच

दास्यस्मि सुन्दरवर कुब्जा नाम महामते ।
मद्धस्तोत्पेशि पाटीरं जातं भोजपतेः प्रियम् ॥ ११
अद्यापि कंसदास्यस्मि साम्प्रतं तव चाद्यतः ।
हस्तिशुण्डादण्डसमे भुजदण्डेऽस्ति मे मनः ॥ १२
युवां विना कोऽन्यतमोऽनुलेपं कर्तुमर्हति ।
युवयोस्तु समं रूपं त्रैलोक्ये नहि विद्यते ॥ १३

नारद उवाच

उभाभ्यां सा ददौ सान्द्रं हर्षिता ह्यनुलेपनम् ।
अथतावङ्गरागेण रामकृष्णौ विरेजतुः ॥ १४
जगृहुश्चन्दनं दिव्यं किञ्चित् किञ्चिद् व्रजार्भकाः ।
त्रिवक्रामथ तां कृष्ण ऋज्वीं कर्तुं मनो दधे ॥ १५

आक्रम्य पद्भ्यां प्रपदेऽङ्गुलिद्वयं
प्रोत्तानहस्तेन विभुः परेश्वरः ।
प्रगृह्य नृणां चिबुके प्रपश्यतां
वक्रां तनुं तामुदनीनमद्धरिः ॥ १६
तदैव सा यष्टिसमानविग्रहा
दीप्त्या च रम्भां क्षिपतीव रूपिणी ।
भूत्वा गृहीत्वाह हरिं तु वाससि
शुचिस्मिता जातमनोजविह्वला १७

सैरन्ध्र्युवाच

गच्छाशु हे सुन्दरवर्य मद्गृह
त्यक्तुं भवन्तं किल नोत्सहेऽहम् ।
प्रसीद सर्वज्ञ रसज्ञ मानद
त्वया भृशं प्रोन्मथितं मनो मम ॥ १८

नारद उवाच

तदैव गोपा जहसुः परस्परम्
अहो किमेतत् करतालनिःस्वनै ।
प्रहस्य रामस्य हरिः प्रपश्यत
स्तद्याच्यमानो ह्यवदत् परं वचः ॥ १९

भगवानुवाच

अहोऽतिधन्या मथुरापुरीयं
वसन्ति यत्रैव जनास्तु सौम्याः ।
येऽज्ञातपान्थान् स्वगृहं नयन्ति
दृष्ट्वा पुरीं धाम तवागमिष्ये ॥ २०

नारदउवाच

एवमुक्त्वोत्तरीयान्तं समाकृष्य गिरार्द्रया ।
राजमार्गं व्रजन् कृष्णो वैश्यानाढ्यान् ददर्श ह ॥ २१
पुष्पताम्बूलगन्धाद्यैः फलैर्दुग्धफलैर्हरिम् ।
सम्पूज्य स्वापणे स्थाप्य नेमुरग्रधियो विशः ॥ २२

वैश्या ऊचुः

भवेच्चेदत्र ते राज्यं तावकान् स्मरतात् तदा ।
वयं तव प्रजा देव राज्ये प्राप्ते न कः स्मरेत् ॥ २३

नारद उवाच

पप्रच्छ सुस्मितो वैश्यान् कोदण्डस्थानमच्युतः ।
न ते तमूचुः सुधियः कोदण्डे भङ्गशङ्कया ।। २४
तद्रूपगुणमाधुर्यमोहिता ये च माथुराः ।
कौमार पश्यैहि धनुरित्यूचुस्तद्दिदृक्षवः ।। २५
तैर्दृष्टेन पथा कृष्णः प्रविष्टो धनुषः स्थलम् ।
मैत्रीं कुर्वन् वयस्यैश्च माथुरैः पुरबालकैः ।। २६
यथैन्द्रं हेमचित्राढ्यं कोदण्डं सप्ततालकम् ।
पुरुषैः पञ्चसाहस्रैर्नेतुं योग्यं बृहद्भरम् ।। २७
अष्टधातुमयं क्लिष्टं लक्षभारसमं परम् ।
चतुर्दश्यां पौरजनै रचितं यज्ञमण्डपे ।। २८
भार्गवेण पुरा दत्तं यदुराजाय माधवः ।
ददर्श कुण्डलीभूतं साक्षाच्छेषमिव स्थितम् ।। २९
वार्य्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ।
पश्यतां तत्र पौराणां सज्यं कृत्वाथ लीलया ।। ३०
आकृष्य कर्णपर्यन्तं दोर्दण्डाभ्यां हरिर्धनुः ।
बभञ्ज मध्यतो राजन् इक्षुदण्डं गजो यथा ।। ३१
भज्यमानस्य धनुषष्टङ्कारोऽभूत्तडित्स्वनः ।
ननाद तेन ब्रह्माण्डं सप्तलोकैर्बिलैः सह ।।
विचेलुर्दिग्गजास्तारा पजन्खण्डमण्डलम् ।। ३२
तदैव बधिरीभूता पृथिव्यां जनमण्डली ।
कंसस्य हृदयं शब्दो विददार घटीद्वयम् ।। ३३
तद्रक्षिणः प्रकुपिता उत्थिता आततायिनः ।
ग्रहीतुकामाः श्रीकृष्णं प्रत्यूचुर्बध्यतामिति ।। ३४
अथ तानागतान् वीक्ष्य सशस्त्रान् बलकेशवौ ।
कोदण्डशकले नीत्वा जघ्नतुर्दुर्मदान् भृशम् ।। ३५

यस्त्वेव सर्वाङ्गमनोहरः सखि
स एव नेत्रेण कथं समीक्ष्यते ॥ ४३
अङ्गे ह्यङ्गे सुन्दरे नन्दसूनोः
प्राप्तं प्राप्तं यत्र यत्रापि नेत्रम् ।
तस्मात्तस्मान्नाम तल्लब्धसौख्यं
लावण्याब्धौ मग्नवल्लग्नचित्तम् ॥ ४४

नारद उवाच

दृष्ट्वा दिने यं व्रजराजनन्दनं
स्वप्नेऽपि तद्वद्ददृशुः पुरस्त्रियः ।
गोप्यः कथं तं मधुरं न सस्मरु-
र्याभिः कृतं मैथिल रासमण्डलम् ॥ ४५

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे मथुरादर्शनं नाम
षष्ठोऽध्यायः ॥ ६

नारद उवाच

रजकस्य शिरश्छेदं कंसो वै रक्षिणां वधम् ।
धनुर्भङ्गं ततः श्रुत्वा परं त्रासमुपागतः ॥ १
तत्क्षणाद्दुर्निमित्तानि वामाङ्गस्फुरणानि च ।
प्रपश्यन् अङ्गभङ्गानि न निद्रां प्राप दैत्यराट् ॥ २
स्वप्ने प्रेतैः समायुक्तस्तैलाभ्यक्तो दिगम्बरः ।
जपास्रङ् महिषारूढो दक्षिणाशां जगाम सः ॥ ३
प्रातःकाले समुत्थाय कार्यभारकरान् जनान् ।
आहूय कारयामास मल्लक्रीडामहोत्सवम् ॥ ४
विशालाजिरसंयुक्ते हेमस्तम्भसमन्विते ।
सभामण्डपदेशाग्र्ये रङ्गभूमिर्बभूव ह ॥ ५
वितानैर्हेमसङ्काशैर्मुक्तादामबिलम्बिभिः ।
सोपानैर्हेममञ्चैश्च रङ्गभूमिर्बभौ नृप ॥ ६
राजमञ्चे रत्नमये मकरन्दार्चिते शुभे ।
शक्रसिंहासनं तत्र सोपबर्हणमण्डलम् ॥ ७
आतपत्रेण दिव्येन चन्द्रमण्डलचारुणा ।
हंसाभैर्व्यजनैर्युक्तं चामरैर्वज्रमुष्टिभिः ॥ ८
दशहस्तोच्छ्रितं शश्वद्विश्वकर्मविनिर्मितम् ।
तदारुह्य बभौ कंसोऽद्रिशृङ्गे मृगराडिव ॥ ९
गायकाः प्रजगुस्तत्र ननृतुर्वारयोषितः ।
नेदुर्मृदङ्गपटहतालभेर्यानकादयः ॥ १०
राजानो मण्डलेशाश्च पौरा जानपदा नृप ।
ददृशुर्मल्लयुद्धं ते मञ्चे मञ्चे समास्थिताः ॥ ११

चाणूरो मुष्टिकः कूटः शलस्तोशल एव च।
व्यायाममुद्गरैर्युक्ता युयुधुस्ते परस्परम् ॥ १२
नन्दराजादयो गोपाः कंसाहुता नताननाः।
दत्त्वा बलिं परं तस्मै एकस्मिन् मञ्च आश्रिताः ॥ १३
बाणासुरजरासन्धनरकाणां पुरान्नृप।
अन्येषां शम्बरादीनां सकाशाद्भूभुजां तथा ॥
बलयश्चाययू राजन् यदुराजाय तत्र वै ॥ १४
अथ तौ रामकृष्णौ द्वौ मायाबालकविग्रहौ
मल्ललीलादर्शनार्थं ययतू रङ्गमण्डपम् ॥ १५
गोमूत्रचयसिन्दूरकस्तूरीपत्रभृन्मुखम्।
स्रवन्मदं महामत्तं रत्नकुण्डलमण्डितम् ॥ १६
गजं कुवलयापीडं रङ्गद्वारमवस्थितम्।
वीक्ष्य कृष्णो महामात्रं प्राह गम्भीरया गिरा ॥ १७
आकर्षयाङ्ग नागेन्द्रं मार्गं कुरु ममेच्छया।
नचेत् त्वां पातयिष्यामि सनागं भूमिमण्डले ॥ १८
महामात्रस्तदा क्रुद्धो नोदयामास तं गजम्।
चीत्कारमुत्कटं दिक्षु कुर्वन्तं नन्दसूनवे ॥ १९
गृहीत्वा तं हरिं सद्यः शुण्डादण्डेन नागराट्।
उज्जहार ततस्तस्मान्निर्गतो भारभृद्धरिः ॥ २०
तत्पादेषु विलीनोऽभूत् प्रभ्रश्न् सन्नितस्ततः।
वृन्दावननिकुञ्जेषु वृक्षेषु च यथा हरिः ॥ २१
करे जग्राह तन्नागः शुण्डादण्डेन चाङ्घ्रिषु।
निष्पीड्य शुण्डां हस्ताभ्यां हरिः पश्चाद्विनिर्गतः ॥ २२
तिर्यग्भूतश्च तं नागो ग्रहीतुमुपचक्रमे।
मुष्टिना तं घातयित्वा पुरो दुद्राव माधवः ॥ २३

तमन्वधावन्नागेन्द्रो मथुरायां विदेहराट् ।
कोलाहले तदा जाते हरिस्तस्मादितो ययौ ॥ २४
पुच्छे गृहीत्वा तं नागं बलदेवो महाबलः ।
चकर्ष भुजदण्डाभ्यां फणिनं गरुडो यथा ॥ २५
प्रहसन् भगवान् कृष्णो गृहीत्वा तं करे बलात् ।
चकर्ष भुजदण्डाभ्यां कूपरज्जुं यथा नरः ॥ २६
द्वयोराकर्षणान्नागो विह्वलोऽभून्नृपेश्वर ।
महामात्रास्तदा सप्त रुरुहुस्तं गजं बलात् ॥ २७
नीता गजास्तथा चान्यैः कृष्णं हन्तुं शतत्रयम् ॥ २८
अङ्कुशास्फालनात् क्रुद्ध मत्तेभं पुनरागतम् ।
श्रीकृष्णो भगवान् साक्षाद्बलदेवस्य पश्यतः ॥ २६
शुण्डादण्डे सङ्गृहीत्वा भ्रामयित्वा त्वितस्ततः ।
पातयामास भूपृष्ठे कमण्डलुमिवार्भकः ॥ ३०
दूरे प्रपतितास्तस्य महामात्रा इतस्ततः ।
सर्वेषां पश्यतां नागः सद्यो वै निधनं गतः ॥ ३१
तज्ज्योतिः श्रीघनश्यामे लीनं जातं विदेहराट् ।
दन्तावुत्पाट्य तस्यापि रामकृष्णौ महाबलौ ।
निजघ्नतुर्महामात्रान् मृगान् केसरिणौ यथा ॥ ३२
द्विपे हतेऽपि ये चान्ये महामात्रा इतस्ततः ।
विदुद्रुवुर्यथा मेघा वर्षाकाले गते सति ॥ ३३
एवं हत्वा द्विपं गोपैः शेषैस्तैः प्रेक्षणोत्सुकैः ।
जयारावै रामकृष्णौ श्रमवारिमदाङ्कितौ ॥ ३४
परिश्रमारुणमुखौ रङ्गं विविशतुस्त्वरम् ।
दन्तपाणी महावेगौ यथाशामनिलानलौ ॥ ३५

मल्लाश्च मल्लश्च नरा नरेन्द्रं
स्त्रियः स्मरं गोपगणा व्रजेशम् ।

बहुलाश्व उवाच

अग्रे चकार किं साक्षाद्भगवान् व्रजमण्डले ।
राधायै गोपिकाभ्यश्च कथं स्विद्दर्शनं ददौ ॥ १
गोपीमनोरथं कृत्वा मथुरामाजगाम ह ।
एतन्मे ब्रूहि विप्रेन्द्र त्वं परावरवित्तमः ॥ २

नारद उवाच

सन्ध्यायां राधयाहूतः श्रीकृष्णो भगवान् स्वयम् ।
एकान्ते शीतलं शश्वज्जगाम कदलीवनम् ॥ ३
स्फारास्फुरन्मेघगृहं रम्भाचन्दनचर्चितम् ।
कृष्णामरुत्सीकरञ्च सुधारश्मिगलत्सुधम् ॥ ४
एतादृशं वनं राधावियोगानलवर्चसा ।
भस्मीभूतं हि सततं कृष्णाशा तां हि रक्षति ॥ ५
तत्रैव सर्वे गोपीनां शतयूथाः समागताः ।
तस्यै निवेदनं चक्रुर्माधवागमनस्य हि ॥ ६
उत्थाय सहसा साक्षाद्वृषभानुवरात्मजा ।
आनेतुमाययौ कृष्णं सखीभिः परिवारिता ॥ ७
ददावासनपाद्यार्घानुपचारान् मनोहरान् ।
वदन्ती सादरं वाक्यं कुशलं कुशलाधिका ॥ ८
युवकन्दर्पकोटीनां माधुर्यहारिणं हरिम् ।
दृष्ट्वा राधा जहौ दुःखं ब्रह्म ज्ञात्वा गुणं यथा ॥ ९
प्रसन्ना तत्र शृङ्गारमकरोत् कीर्तिनन्दिनी ।
तया नोऽकारि शृङ्गारः पान्थे कृष्णे गते सति ॥ १०
न चन्दनञ्च ताम्बूलं भोजनञ्च सुधासमम् ।
न कृतं दिव्यशयनं हास्यं वा न कृतं क्वचित् ॥ ११

परिपूर्णतमं कृष्णं परिपूर्णतमप्रिया ।
आनन्दाश्रूणि मुञ्चन्ती प्राहगद्गदया गिरा ॥ १२

राधोवाच

कियद् दूरे यदुपुरीमागतः किं करोषि हि ।
किं वदेयं रहो दुःखं भवतोऽशेषसाक्षिणः ॥ १३
सौदासराजमहिषी दमयन्ती च मैथिली ।
नास्त्यत्र कां पुरस्कृत्य वदेयं विरह रिपुम् ॥ १४
मत्समानाश्च या गोप्यो गदितुं न क्षमाः क्वचित् ।
शरच्चन्द्रं चकोरीव मयूरीव घनं नवम् ।
श्रीवृन्दावनचन्द्रं त्वां घनश्यामं समुत्सहे ॥ १५
तव सख्योद्धवेनात्र धन्येन त्वं प्रदर्शितः ।
अन्यः कोऽपि व्रजे नास्ति यस्य प्रेम्णा त्वमागतः ॥ १६

नारद उवाच

एवं वदन्ती सततं रुदन्तीं
परां प्रियां वीक्ष्य घृणातुराङ्गः ।
आश्वासयामास नयेन सद्यः
प्रगृह्य दोर्भ्यां स्रवदम्बुनेत्रः ॥ १७

भगवानुवाच

मा शोकं कुरु राधे त्वं त्वत्प्रीत्याहं समागतः ।
आवयोर्भेदरहितं तेजश्चैकं द्विधा जनैः ॥ १८
यथा हि दुग्धधावल्ये तथावां सर्वदा शुभे ।
यत्राहं त्वं सदा तत्र विश्लेषो नहि चावयोः ॥ १९
पूर्णं ब्रह्म परश्चाहं तटस्था त्वं जगत्प्रसूः ।
विश्लेष आवयोर्मध्ये मृषाज्ञानेन पश्यसत् ॥ २०

यथाकाशस्थितो नित्य वायुः सर्वत्रगो महान् ।
तथा जलं सूक्ष्मरूपं तेजो व्याप्तं यथैधसि ॥ २१
अन्तर्बहिर्यथा पृथ्वी पृथग्भूता वरानने ।
तथा विकाररहितोऽमलर्वांस्त्रगुणैरहम् ॥ २२
तथा त्वं पश्य मद्भावं सदानन्दो भवेत्ततः ।
अहं ममेति भावेन द्वितीयोऽस्ति वरानने ॥ २३

यावद्घनो मध्यगतस्तदुत्थितः
स्वरूपमर्कं नहि दृक् प्रपश्यति ।
तावत् परात्मानमसौ प्रधानजै
र्गुणैस्तथा तेषु गतेषु पश्यति ॥ २४
गुणेषु सक्त किल बन्धनाय
रक्त मनः पुंसि च मुक्तये स्यात् ।
मनो द्वयोः कारणमाहुरारा
ज्जित्वाथ तत् कौ विचरेदसङ्गः ॥ २५
सर्वं हि भावं मनसः परात्परं
न ह्येकतो भामिनि जायते ततः ।
प्रेमैव कर्तव्यमतो मयि स्वतः
प्रेम्णा समानं भुवि नास्ति किञ्चित् ॥ २६

नारद उवाच

इति वाक्यं हरेः श्रुत्वा प्रसन्ना कीर्तिनन्दिनी ।
गोपिकाभिः समं कृष्णं पूजयामास माधवम् ॥ २७
अथ रात्र्यां हरिः साक्षात् कार्त्तिक्यां रासमण्डलम् ।
गत्वा ननाद मुरलीं गोपीभी राधया सह ॥ २८
यमुनानिकटे राजन् राधया राधिकापतिः ।
रामाभिः सुन्दरीभिश्च रासरङ्गे रराज ह ॥ २९

यावतीर्गोपिका रासे तावद्रूपधरो हरिः ।
रेमे वृन्दावने दिव्ये हरिर्वृन्दावनेश्वरः ॥ ३०
क्वणन्नूपुरमञ्जीरो वनमालाविराजितः ।
पीताम्बरः पद्महारी प्रभातार्ककिरीटधृक् ॥ ३१
विद्युल्लतास्फुरत्प्रोद्यद्धेमकुण्डलमण्डिता ।
वेत्रभृद् वादयन् वंशीं नटवेषो घनद्युतिः ॥ ३२
स्फुरत्कौस्तुभरत्नाढ्यः प्रचलत्स्निग्धकुन्तलः ।
रराज राधया रासे यथा रत्या रतीश्वरः ॥ ३३
शच्या शक्रो यथा स्वर्गे घनश्चञ्चलया यथा ।
वृन्दया वृन्दकारण्ये तथा वृन्दावनेश्वरः ॥ ३४
वृन्दावनञ्च पुलिनं वनान्युपवनानि च ।
पश्यन् गोपीगणैः सार्द्धं गिरिं गोवर्द्धनं ययौ ॥ ३५
गोपीनां शतयूथानां मानं वीक्ष्य व्रजेश्वरः ।
भगवान् राधया साकं तत्रैवान्तरधीयत ॥ ३६
अथ गोवर्द्धनाद्दूरे सुन्दरं योजनत्रयम् ।
श्रीखण्डगन्धसंयुक्तं स ययौ रोहिताचलम् ॥ ३७
लताकुञ्जनिकुञ्जांश्च पश्यन् जल्पन् तया सह ।
विचचार गिरौ रम्ये काञ्चनोलतिकालये ॥ ३८
तत्र देवसरो रम्यं बद्रिनाथेन निर्मितम् ।
पाठीनकूर्मनक्रादिहंससारससङ्कुलम् ॥ ३९
सहस्रदलपद्मैश्च मण्डितं तदितस्ततः ।
भ्रमरध्वनिसंयुक्तं पुंस्कोकिलरुतावृतम् ॥ ४०
विकसत्पद्मगन्धाढ्ये तत्तीरे मन्दमारुते ।
रमया राधया सार्द्धं माधवो निषसाद ह ॥ ४१
तत्तीरे प्रतपस्यन्तमृभुं नाम महामुनिम् ।
पदैकेन स्थितं शश्वच्छ्रीकृष्णध्यानतत्परम् ॥ ४२

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
निरन्नं निर्जलं शान्तं श्रीकृष्णस्तं ददर्श ह ॥ ४३

प्रच्छन्नं वीक्ष्य तं राधां हसन्तीं प्राह माधवः ।
माहात्म्यं कुरु भक्तोऽयं पश्य भक्तिं महामुनेः ॥ ४४

हे ऋभो इति कृष्णेन प्रोक्तमुच्चैर्वचः शुभम् ।
न श्रुतं तेन किं श्रद्धा चरमं प्रापितेन वै ॥ ४५
हरिस्तदा तद्धृदयाद् बभूवाशु तिरोहितः ।
ध्यानाद्गतं हरिं वीक्ष्य मुनीन्द्रश्चातिविस्मितः ॥ ४६

नेत्रे उन्मील्य ददृशे श्रीकृष्णं राधयागतम् ।
घनं चञ्चलयेवाढ्यं रञ्जयन्तं दिशो दश ॥ ४७

उत्थाय सद्यो हरिभक्तितत्परः
प्रदक्षिणीकृत्य हरिं सराधिकम् ।
प्रणम्य मूर्ध्ना निपपात पादयो
रुवाच कृष्णं बहुगद्गदाक्षरः ॥ ४८

ऋभुरुवाच

नमः कृष्णाय कृष्णायै राधायै माधवाय च ।
परिपूर्णतमायै च परिपूर्णतमाय च ॥ ४९
घनश्यामाय देवाय श्यामायै सततं नमः ।
रासेश्वराय सतत रासेश्वर्य्यै नमो नमः ॥ ५०
गोलोकातीवलीलाय लीलावत्यै नमो नमः ।
असङ्ख्याण्डाधिदेव्यै चासङ्ख्याण्डनिधये नमः ॥ ५१

भूभारहाराय भुवं गताभ्यां
मच्छान्तये चात्र समागताभ्याम् ।
परस्परं सन्धितविग्रहाभ्यां
नमो युवाभ्यां हरिराधिकाभ्याम् ॥ ५२

नारद उवाच

इत्युक्त्वा कृष्णपादाब्जे प्रक्षरद्बाष्पलोचनः ।
प्रेमानन्दसमायुक्तो जहौ प्राणान् महामुनिः ॥ ५३
तदैव निर्गतं ज्योतिर्दशसूर्यसमप्रभम् ।
परिभ्रमन् दशदिशः श्रीकृष्णे लीनतां गतम् ॥ ५४
भक्तस्य भक्तिं श्रीकृष्णो वीक्ष्य वै प्रेमलक्षणाम् ।
आनन्दाश्रुकलां मुञ्चन् प्रेम्णा तं प्राजुहाव ह ॥५५
पुनः श्रीकृष्णपादाब्जात् कृष्णसारूप्यवान् मुनिः ।
निर्गतः कोटिकन्दर्पसन्निभोऽतिनताननः ॥ ५६
दोर्भ्यां प्रगृह्य हृदये तं निधाय कृपाकरः ।
आश्वास्य कल्याणकरं करं दिव्यं दधार ह ॥ ५७

प्रदक्षिणीकृत्य हरिश्च राधिकां
प्रणम्य चारुह्य रथं मनोहरम् ।
गोलोकलोकं प्रययावृभुर्मुनि
र्विरञ्जयन् मैथिल मण्डलं दिशाम् ॥ ५८
श्रीराधिका विस्मयमागता भृशं
दृष्ट्वा परां मुक्तिमृभोर्महामुनेः
आनन्दवारीणि विमुञ्चती चिरं
जगाद कृष्णं वृषभानुनन्दिनी ॥ ५९

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे रासोत्सवे ऋभुमोक्षो नाम
विंशोऽध्यायः ॥ २०

राधोवाच

धन्योऽयं मुनिशार्दूलस्त्वद्भक्तः प्रेमवान् महान् ।
त्वत्सारूप्यं जगामासौ त्वमप्यश्रुमुखो यतः ॥ १
अस्य देहक्रियां कर्तुं योग्योऽसि वृजिनार्दन ।
तपसा चास्य देहोऽयं प्रस्फुरत्यमलाकृतिः ॥ २

नारद उवाच

वदन्त्यां तत्र राधायां तद्देहोऽप्यभवत् सरित् ।
वहती पापहन्त्री च दृश्यते रोहिते गिरौ ॥ ३
तद्देहस्यापि सरितं वीक्ष्य राधातिविस्मिता ।
नन्दराजात्मजं प्राह वृषभानुवरात्मजा ॥ ४

राधोवाच

कथं जलत्वमापन्नो देहोऽयं वै महामुनेः ।
एतन्मे संशयं देव छेत्तुमर्हस्यशेषवित् ॥ ५

भगवानुवाच

प्रेमलक्षणया भक्त्या संयुतोऽयं मुनीश्वरः ।
तस्मादस्य तु देहोऽयं रम्भोरु द्रवतां गतः ॥ ६
दृष्ट्वा त्वया मां वरदं हर्षितोऽभून्महामुनिः ।
जलत्वं प्राप तद्देहो यथाहं द्रवतां पुरा ॥ ७

राधोवाच

द्रवतां त्वं कथं प्राप्तो देवदेव दयानिधे ।
एतच्चित्रं हि मे जातं सर्वं त्वं वद विस्तरात् ॥ ८

भगवानुवाच

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
यस्य श्रवणमात्रेण पापहानिः परं भवेत् ॥ ९

मन्नाभिपङ्कजाज्जातः पुरा ब्रह्मा प्रजापतिः ।
असृजत् प्रकृतिं शश्वत्तपसा मद्वरोजितः ॥ १०
उत्सङ्गान्नारदो जज्ञे ब्रह्मणः सृजतः शुभे ।
भक्त्युन्मत्तो मत्पदानि निजगौ पर्यटन् महीम् ॥ ११
एकदा नारदं प्राह देवो ब्रह्मा प्रजापतिः ।
प्रजाः सृज महाबुद्धे वृथा चङ्क्रमणं त्यज ॥ १२
नारदस्तद्वचः श्रुत्वा प्राहेदं ज्ञानतत्परः ।
न सृजामि पितः सृष्टिं शोकमोहादिकारिणीम् ॥ १३
करिष्यामि हरेर्भक्तिं तत्कीर्तनसमन्विताम् ।
त्वमपि सृष्टिरचनां त्यज दुःखातुरो भृशम् ॥ १४
क्रुद्धः शशाप तं ब्रह्मा प्राह प्रस्फुरिताधरः ।
सदा गानपरः कल्पं गन्धर्वो भव दुर्मते ॥ १५
एवं तच्छापतो राधे गन्धर्व उपबर्हणः ।
बभूव गन्धर्वपतिः कल्पमात्रं सुरालये ॥ १६
एकदा ब्रह्मणो लोके स्त्रीभिः परिवृतो गतः ।
सुन्दरीषु मनः कृत्वा जगौ तालविवर्जितम् ॥ १७
पुनर्ब्रह्मा तं शशाप त्वं शूद्रो भव दुर्मते ।
अथासौ ब्रह्मशापेन दासीपुत्रो बभूव ह ॥ १८
सत्सङ्गेन पुना राधे प्राप्तोऽभूद् ब्रह्मपुत्रताम् ।
भक्त्युन्मत्तो मत्पदानि निजगौ पर्यटन् महीम् ॥ १९
मुनीन्द्रो वैष्णवश्रेष्ठो मत्प्रियो ज्ञानभास्करः ।
परं भागवतः साक्षान्नारदो मे मनः सदा ॥ २०
एकदा नारदो लोकान् पश्यन् वै गानतत्परः ।
इलावृतं नाम खण्डं गतवान् सर्वतो गतिः ॥ २१
यत्र जम्बूनदी श्यामा जम्बूफलरसोद्भवा ।
तया जाम्बुनदं नाम सुवर्णं भवति प्रिये ॥ २२

तद्देशे वेदनगरं रत्नप्रासादनिर्मितम् ।
ददर्श नारदो योगी दिव्यनारीनरैर्युतम् ॥ २३
कांश्चिद्वै पादरहितान् विगुल्फान् जानुवर्जितान् ।
विजङ्घान् जघनव्यङ्गान् कृशोरून् कुब्जमध्यकान् ॥ २४
श्लथद्वाहूश्चलत्स्कन्धान् नताननविकन्धरान् ।
स्त्रीजनान् पुरुषांश्चासावङ्गभङ्गान् ददर्श ह ॥ २५
अहो किमेतच्चित्रं हि सर्वान् दृष्ट्वावदन्मुनिः ।
सर्वे यूयं पद्ममुखा दिव्यदेहाः शुभाम्बराः ॥ २६
किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ।
वादित्रसंहताः सर्वे रम्यगानपरायणाः ॥ २७
अङ्गभङ्गाः कथं यूयं वदताशु ममैव हि ।
इत्युक्तास्तेन ते सर्वे प्रत्यूचुर्दीनमानसाः ॥ २८

रागा ऊचुः

महादुःखं मुने जातमस्माकं तनुषु स्वतः ।
तस्याग्रे कथनीयं वै दूरीकर्त्तुं च यः क्षमः ॥ २९
रागा वयं वेदपुरे वसामः सर्वदा मुने ।
अङ्गभङ्गा वयं जाताः कारणं शृणु मानद ॥ ३०
जातो हिरण्यगर्भस्य पुत्रो नारद नामभाक् ।
प्रेमोन्मत्तो विकालेन गायन् ध्रुवपदानि च ।
विचचार महीमेतां स्वेच्छया स महामुनिः ॥ ३१
विकालैस्तस्य गानैश्च विस्वरैस्तालवर्जितैः ।
विमानैश्च वयं सर्वे अङ्गभङ्गा बभूविम ॥ ३२
इति श्रुत्वाथ तद्वाक्यं नारदो विस्मितोऽभवत् ।
उवाच गतमानोऽसौ रागान् परिहसन्निव ॥ ३३

वराभयं पुस्तकवल्लकीयुतं
परं दधानां विमले करद्वये ।
नमाम्यहं त्वां शुभदां सरस्वतीं
जगन्मयीं ब्रह्ममयी मनोहराम् ॥ ४३
तरङ्गितक्षौमसिताम्बरे परे
देहि स्वरज्ञानमतिं विमङ्गले ।
येनाद्वितीयो हि भवेयमक्षरे
सर्वोपरि स्यां परराममण्डले ॥ ४४

भगवानुवाच

स्तोत्रं जाड्यापहं दिव्यं प्रातरुत्थाय यः पठेत् ।
नारदोक्तं सरस्वत्याः स विद्यावान् भवेदिह ॥ ४५
ततः प्रसन्ना वाग्देवी नारदाय महात्मने ।
देवदत्तां ददौ वीणां स्वरब्रह्मविभूषिताम् ॥ ४६
रागैश्च रागिणीभिश्च तत्पुत्रैश्च तथैव च ।
देशकालादिभेदैश्च तालमानस्वरैः सह ॥ ४७
षट्पञ्चाशत्कोटिभेदैरन्तर्भेदैरसङ्ख्यकैः ।
ग्रामैर्नृत्यैः सवादित्रैर्मूर्च्छनासहितैः शुभैः ॥ ४८
वैकुण्ठस्य पतेः साक्षात् प्रिया मुख्या सरस्वती ।
स्वरगम्यैः पदैः सिद्धैः पाठयामास नारदम् ॥ ४९
अद्वितीयं रागकरं कृत्वा तं रागमण्डले ।
वैकुण्ठं प्रययौ राधे वाग्देवी विष्णुवल्लभा ॥ ५०

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे नारदोपाख्यानं नाम
एकविंशोऽध्यायः ॥ २१

भगवानुवाच

कस्मै देयमिदं गुह्यं रागरूपं मनोहरम् ।
बुद्ध्या विचारयन्नित्थं गन्धर्वनगरं ययौ ॥ १

तुम्बुरुं नाम गन्धर्वं कृत्वा शिष्यं स नारदः ।
कलं जगौ मद् गुणांश्च वीणावाद्यपरायणः ॥ २

केषामग्रे गेयमिद रागरूपं मनोहरम् ।
श्रोतुं पात्रं विचिन्वन् स नारदः शक्रमाययौ ॥ ३

अनिवृ त्तश्च तं दृष्ट्वा नारदो मुनिसत्तमः ।
सख्या तुम्बुरुणा सार्द्धं सूर्यलोकं जगाम ह ॥ ४

रथेन तं प्रधावन्तं सूर्यं वीक्ष्य महामुनिः ।
शिवपार्श्वं जगामाशु ततो देवर्षिसत्तमः ॥ ५

भूतेशं ज्ञानतत्त्वज्ञं ध्यानस्तिमितलोचनम् ।
वीक्ष्य तं नारदो राधे ब्रह्मलोकं जगाम ह ॥ ६

सृजन्तं सृष्टिरचनां व्यग्र वीक्ष्य विधिं मुनिः ।
वैकुण्ठं प्रययौ विष्णोः सर्वलोकनमस्कृतम् ॥ ७

भक्तार्थं कुत्र गच्छन्तं भक्तेशं भक्तवत्सलम् ।
वीक्ष्य तुम्बुरुणा सार्द्धं योगीन्द्रः प्रययौ ततः ॥ ८

योगीश्वराणां हि सतां त्रिलोक्यामन्तरं बहिः ।
गतिमाहुर्नाप्नुवन्ति कर्मभिवृ षभानुजे ॥ ९

कोटिशो ब्रह्माण्डनिचयान् समुल्लङ्घ्य मुनीश्वरः ।
गोलोकं परमं धाम प्रययौ प्रकृतेः परम् ॥ १०

समुत्तीर्याशु विरजां नदीं कल्लोलशालिनीम् ।
ययौ वृन्दावनं रम्यं भ्रमरध्वनिसङ्कुलम् ॥ ११

सदा वसन्तर्तुयुतं मरुतेजस्वतागृहम् ।
दृष्ट्वा गोवर्द्धनं शैलं मल्लिकुञ्ज समाययौ ॥ १२
कौ युवां कुत आयातौ किं कार्यं वदतश्च नः ।
इत्थं सखीभिः सम्पृष्टावूचतुर्मुनितुम्बुरू ॥ १३
गायकौ कुशलौ रामा आवां वीणाकलध्वनिम् ।
परिपूर्णतमं साक्षाच्छ्रीकृष्णं राधिकापतिम् ॥ १४
कलं परं श्रावयितुमागतौ बन्दिनां वरौ ।
कथनीयमिदं वाक्यं श्रीकृष्णाय महात्मने ॥ १५
श्रुत्वा सख्यस्तथा मह्यं निवेद्याथ मदाज्ञया ।
आगत्याज्ञां ददुर्यातुं बन्दिभ्यां श्लक्ष्णया गिरा ॥ १६
मल्लिकुञ्जाङ्गणे भ्राजत्कोट्यर्कज्योतिराकुले ।
खचित्कौस्तुभरत्नाढ्ये प्रचलच्चारुचामरे ॥ १७
लोलन्मुक्ताफलच्छत्रे सखीकोटिसमन्विते ।
महापद्मस्थितं साक्षात्त्वया मां तावपश्यताम् ॥ १८
नत्वा प्रदक्षिणीकृत्य तत्र स्थित्वा मदाज्ञया ।
स्तुत्वा मां मद्गुणान् वक्तुं तेनासावुपचक्रमे ॥ १९
आतोद्यं विनुदन् वीणां देवदत्तां स्वरामृतम् ।
कलं जगावद्वितीयं नारदः सहतुम्बुरुः ॥ २०
सन्तुष्टोऽह शिरो धुन्वन् तेन संश्लाघ्य तत्स्वरम् ।
दत्त्वात्मानं प्रेमपरो जलत्वं गतवानहम् ॥ २१
यज्जलं मद्वपुर्जातं तद्वै ब्रह्मद्रवं विदुः ।
कोटिशः कोटिशोऽण्डानां राशयः संलुठन्ति हि ॥ २२
इन्द्रायनफलानीवानन्ते तस्मिन् जले शुभे ।
पृश्निगर्भमिदं राधे ब्रह्माण्डं मत्पदं स्फुटम् ॥ २३
भित्त्वा तच्चागतं साक्षादस्मिन् मन्वतरे शुभे ।
तत्स्वर्धुनीं विदुः पूर्वे श्रीगङ्गां पापहारिणीम् ॥ २४

दिवि मन्दाकिनी प्रोक्ता गङ्गा भागीरथी क्षितौ ।
अधो भोगवती प्रोक्ता त्रिधा त्रिपथगामिनी ॥ २५
यत्स्नातुं गच्छतः पुंसः प्रणतस्य पदे पदे ।
राजसूयाश्वमेधानां फलमस्ति न दुर्लभम् ॥ २६
गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २७
दृष्ट्वा जन्मशतं पाप पीत्वा जन्मशतद्वयम् ।
स्नात्वा जन्मसहस्रेण हन्ति गङ्गा कलौ युगे ॥ २८
सफलं जन्म वै तेषां ये पश्यन्ति हि जाह्नवीम् ।
वृथा जन्म गतं तेषां ये न पश्यन्ति जाह्नवीम् ॥ २९
यथाहं द्रवतां प्राप्तो विरजा त्वद्भयाद् यथा ।
प्रापुर्द्रवत्वं रम्भोरु विरजायाः सुता यथा ॥ ३०
यथा कृष्णा नदी विष्णुर्वेणी देवः शिवो यथा ।
ब्रह्मा ककुद्मिनी गङ्गा गण्डकी च यथाप्सराः ॥ ३१
तथा द्रवत्वं सम्प्राप्त ऋभुर्नाम्न्यं मुनिः ।
प्रेमलक्षणया भक्त्या रम्भोर्वत्र न संशयः ॥ ३२
यः शृणोति कथामेतां पवित्रां पापहारिणीम् ।
उल्लङ्घ्य सर्वलोकांश्च मल्लोकं याति मानवः ॥ ३३

नारद उवाच

एवमुक्त्वा प्रियां राधामृभोराश्रमतो हरिः ।
राधया सहितो राजन् आययौ मालतीवनम् ॥ ३४
गोपीनां विरहं ज्ञात्वा भगवान् भक्तवत्सलः ।
राधया प्रययौ कृष्णापुलिनं मङ्गलायनम् ॥ ३५
तदा गोपीगणाः सर्वे गतमाना गतव्यथाः ।
जगृहुस्तं घनश्यामं सौदामिन्यो घनं यथा ॥ ३६

वृन्दावने हरिः साक्षात् कृष्णातीरे मनोहरे ।
जगौ कलं गोपिकाभिर्वंशीवादनतत्परः ॥ ३७
भगवत्कलरागेण मूर्च्छिता गोपकन्यका: ।
नद्यो वेगत्वरहिता अचरत्वं हि पक्षिणः ॥ ३८
मौनत्वं देवताः सर्वाः स्तम्भत्वं देवनायकाः ।
सजलत्वञ्च तरवो निद्रात्वं प्रगतं जगत् ॥ ३६
कृत्वा रासं राधिकाया गोपीनाञ्च मनोरथम् ।
ब्राह्मे मुहूर्ते भगवानाययौ नन्दमन्दिरम् ॥ ४०
राधिका गोपिकाभिश्च प्राप्तानन्दमनोरथा ।
वृषभानुवरस्यापि सुन्दरं मन्दिरं ययौ ॥ ४१

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे नारदोपाख्यानं नाम
द्वाविंशोऽध्यायः ॥ २२

नारद उवाच

श्रीकृष्णो भगवान् साक्षाद् व्रजे कति दिनानि च ।
स्थित्वा स्वदर्शनं दत्वा मथुरां गन्तुमुद्यतः ॥ १
नन्दाञ्चोपनन्दांश्च वृषभानून् व्रजे च षट् ।
वृषभानुवरं चैव नन्दराजं व्रजेश्वरम् ॥ २
कलावतीं यशोदाञ्च गोपीर्गोपान् गवां गणान् ।
मिलित्वाश्वास्य ज्ञानञ्च दत्त्वानुज्ञाय माधवः ॥ ३
रथमारुह्य दिव्याभं चञ्चलाश्वनियोजितम् ।
मथुरां गन्तुकामोऽसौ निर्गतो नन्दगोकुलात् । ४
दूरं तमनुगाः सर्वे मोहिता व्रजवासिनः ।
न सेहिरे कष्टतरं विरहं माधवस्य हि ॥ ५
युगपद्दर्शनं विष्णोर्दुःसहं भूमिमण्डले ।
येषां नित्यं हि भवति तेषान्तु किमु वर्णनम् ॥ ६
वीक्षन्तः श्रीधरमुखं नेत्रैरनिमिषैर्नृप ।
सर्वे वै स्नेहसम्बन्धात्तमूचुः प्रेमविह्वलाः ॥ ७

गोपा ऊचुः

शीघ्रमागच्छ हे कृष्ण सर्वान् नो व्रजवासिनः ।
पाह्यस्मान् दर्शनं देहि देवेभ्यो ह्यमृतं यथा ॥ ८
त्वमेव सर्वदा देव यशोदानन्ददायकः ।
श्रीनन्दनन्दनस्त्वं वै जीवनं व्रजवासिनाम् ॥ ९
व्रजे धनं कुले दीपो मोहनो महतामपि ।
यथा निदाघदग्धस्य प्राप्त वै शीतलं जलम् ॥ १०
शीतार्तस्य यथा वह्निर्ज्वरार्तस्य यथौषधम् ।
मृतस्य मानवस्यापि पीयूषं मङ्गलं यथा ॥ ११

तथा व्रजस्य सर्वस्य जीवनं तव दर्शनम् ।
तस्मादत्र स्थितिं कुर्या बहुना कथितेन किम् ॥ १२
यन्नोऽस्ति किञ्चित् सुकृतमस्मिन् वा पूर्वजन्मनि ।
तत्फलेन सदा चेतो भूयात् त्वत्पादपङ्कजे ॥ १३
येषां चेतस्त्वत्पदाब्जे ते भक्तास्त्वत्प्रियाः सदा ।
भक्तार्थं सगुणोऽसि त्वं निर्गुणः प्रकृतेः परः ।
तव भक्तात् प्रियो नास्ति शिवो ब्रह्मा न चेन्दिरा ॥ १४
विसृज्य पारमेष्ठ्यादीन् निष्कामास्त्वां भजन्ति ये ।
नैरपेक्ष्यं सुखं शान्तं ते विदुर्युक्तचेतसः ॥ १५

नारद उवाच

एवमुक्त्वाथ ते सर्वे रुरुदुः प्रेमविह्वलाः ।
आनन्दाश्रूणि मुञ्चन्तः श्रीकृष्णस्य प्रपश्यतः ॥ १६
अश्रुपूर्णमुखः कृष्णो भगवान् भक्तवत्सलः ।
गोपानाह प्रसन्नात्मा नतान् विरहविह्वलान् ॥ १७

भगवानुवाच

मत्प्राणा मत्प्रिया यूयं सर्वे वै व्रजवासिनः ।
हृदयं मेऽस्ति युष्मासु देहोऽन्यत्र विलक्ष्यते ॥ १८
मासं प्रत्यागमिष्यामि युष्मान् द्रष्टुं वचो मम ।
मनसा नहि दूरेऽस्मि मनः सर्वस्य कारणम् ॥ १९
हे गोपा यदुभिर्योद्धुमागन्ता हि जरासुतः ।
यदूनान्तु सहायार्थं यामि माभूच्छुचश्च वः ॥ २०

नारद उवाच

एवमाश्वास्य तान् देवः संनिवृत्त्य पुनः पुनः ।
रथे द्वितीये संस्थाप्य नन्दराजं यशोदया ॥ २१
श्रीदामादीन् सखीन् नीत्वा भगवान् रथमास्थितः ।
सोद्धवो मथुरां प्रागात् सर्वकारणकारणः ॥ २२

यावद्रथश्चाश्वशतं सुवेगं
केतुस्त्रिवर्णः प्रचलत्पताकः ।
आलक्ष्यते वीररजश्च तावत्
स्थित्वान्य आजग्मुरत. सकाशम् ॥ २३
श्रीकृष्णचन्द्रस्य परं चरित्रं
नृणां महापापहरं विचित्रम् ।
शृणोति यो भक्तवर. पृथिव्यां
गोलोकलोकं स च याति सम्यक् ॥ २४

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे व्रजयात्रायां श्रीकृष्णागमनं नाम
त्रयोविंशोऽध्याय. ॥ २३

बहुलाश्व उवाच

गोपीनाञ्चैव गोपानां दत्त्वा स्वं दर्शनं परम् ।
मथुरायां किं चकार श्रीकृष्णो राम एव च ॥ १
चरित्रं परमं मिष्टं श्रीकृष्णबलदेवयोः ।
श्रुतं तव मुखाद् ब्रह्मन् पुनर्वक्तुं त्वमर्हसि ॥ २

नारद उवाच

अन्यच्चरित्रं शृणु तच्छ्रीकृष्णबलदेवयोः ।
सर्वपापहरं पुण्यं चतुर्वर्गफलप्रदम् ॥ ३
कोलेन पीडिता लोका कौशाम्बि-पुरान्नृप ।
मथुरामाययुः सर्वे सद्विजा दीनमानसाः ॥ ४
अश्वमाशुगमारुह्य रोहिणीनन्दनो बलः ।
स्वल्पैः पुरः सरैः सार्द्धं मृगयार्थी विनिर्गतः ॥ ५
तं तदाभ्यर्च्य विधिवत्तदङ्घ्र्योः पतिताः पथि ।
कृताञ्जलिपुटा ऊचुर्हर्षगद्गदया गिरा ॥ ६

प्रजा ऊचुः

राम राम महाबाहो देवदेव महाबल ।
कोलेन पीडिताः सर्वे आगताः शरणं वयम् ॥ ७
दैत्यः कंससखः कोलो जित्वा कौशाम्बिं नृपम् ।
कौशाम्बेश्च पुरे राज्यं करोति स महाबलः ॥ ८
कौशाम्बिस्तद्भयाद्धि गङ्गातीरं गतो नृपः ।
राज्यार्थं त्वत्पदाम्भोजं भजते सुजितेन्द्रियः ॥ ९
तत्सहायं कुरु विभो वयं यस्य प्रजाः शुभाः ।
पुत्रवत् पालितास्तेन महासौख्यसमन्विताः ॥ १०

कोलेनाद्यैव दुष्टेन पीडिताः सततं प्रभो ।
त्रैलोक्यविजयी वीरः कंसोऽपि निहतस्त्वया ॥ ११
कोले जीवति देवेन्द्र कंसोऽपि न मृतः स्मृतः ।
रक्षार्थं सगुणोऽसि त्वं भक्तानां प्रकृतेः परः ॥ १२

नारद उवाच

इति श्रुत्वा वचस्तेषां श्रीरामो भक्तवत्सलः ।
गङ्गायमुनायोर्मध्ये कौशाम्बीं नगरीं ययौ ॥ १३
योद्धुं समागतं रामं श्रुत्वा कोलोऽपि निर्गतः ।
अक्षौहिणीभिर्दशभिर्मण्डितश्चण्डविक्रमः ॥ १४
चञ्चलाश्वतरङ्गाढ्यां रथैमाश्वतिमिंगिलाम् ।
नदीमिवागतां सेनां प्रलयार्णवनादिनीम् ॥ १५
वीरावर्ताञ्च तां वीक्ष्य बध्वा सेतुं हलं बलः ।
आकृष्य तां तदग्रेण मुसलेनाहनद्दृढम् ॥१६
युगपत्तत्प्रहारेण वीरा अश्वा रथा गजाः ।
सर्वतः कोटिशः पेतुः पेशिताः फलवद्रणे ॥ १७
शेषाः प्रदुद्रुवुर्वीरा भयार्ता रणमण्डलात् ।
एकाकी युयुधे दैत्यः कोलो रामेण शस्त्रभृत् ॥ १८
गोमूत्रचयसिन्दूरकस्तूरीपत्रभृन्मुखम् ।
सुवर्णशृङ्खलायुक्तं प्रखचित्कटिबन्धनम् ॥ १९
स्रवन्मदं चतुर्दन्तं घण्टाटङ्कारभीषणम् ।
प्रोन्नतं दिग्गजमिव नदत्कालघनप्रभम् ॥ २०
शितमङ्कुशमादाय कोल आरुह्य कर्णतः ।
स्वगजं नोदयामास बलदेवाय दैत्यराट् ॥ २१
आगतं वीक्ष्य तं नागं मत्तं कोलेन नोदितम् ।
तताड मुसलेनासौ वज्रेणेन्द्रो यथा गिरिम् ॥ २२

मुसलस्य प्रहारेण विशीर्णोऽभून्महागजः ।
मृद्घटोऽनेकधैवाशु दण्डघातेन मैथिल ॥ २३
कोलः क्रोडमुखो दैत्यो रक्ताक्षः पतितो गजात् ।
शूलं चिक्षेप निशितं माधवाय महात्मने ॥ २४
मुसलेन तदा रामस्तच्छूलं शतधाच्छिनत् ।
काचपात्रं यथा बालो दण्डेन च विदेहराट् ॥ २५
सहस्रभारसंयुक्तां गदां गुर्वीं प्रगृह्य च ।
बलं तताड हृदये जगर्ज घनवत् खलः ॥ २६
तद्गदायाः प्रहारेण न चचाल यदूद्वहः ।
पश्यतां सर्वलोकानां स्रजाहत इव द्विपः ॥ २७
तमाकृष्य हलाग्रेण कोलं कज्जलवत्तनुम् ।
मुसलेनाहनन् मूर्ध्नि बलदेवो महाबलः ॥ २८
मुसलाहतमूर्द्धापि पतितो रणमण्डले ।
मुष्टिना तं घातयित्वा तत्रैवान्तरधीयत ॥ २९
चकार मायां मायावी दैतेयीमतिभीषणाम् ।
प्रलयप्रभवैर्मेघैर्महावातप्रणोदितैः ।
अन्धकारं प्रकुर्वद्भिरभूदाच्छादितं नभः ॥ ३०
जपापुष्पसमान् विन्दूनजस्रं रुधिरस्य च ।
मोचयित्वाथ बीभत्सवर्षाश्चक्रुर्घना घनाः ॥ ३१
पूयमेदोऽतिविण्मूत्रसुरामांससमन्विताः ।
दृष्ट्वा ताभिश्च वर्षाभिर्हाहाकारो बभूव ह ॥ ३२
ज्ञात्वाथ तत्कृतां मायां बलदेवो महाप्रभुः ।
चिक्षेप मुसलं दीर्घं परसैन्यविदारणम् ॥ ३३
सर्वास्त्रघातकं स्वच्छमष्टधातुमयं दृढम् ।
शतयोजनविस्तीर्णं प्रलयाग्निसमप्रभम् ॥ ३४

बलास्त्रं मुसलं रेजे भ्रमद्दशदिगन्तरे ।
विदारयद् घनान् व्योम्नि नीहारञ्च यथा रविः ॥ ३५
तद्व्योम्नि प्रगतं दृष्ट्वा हलास्त्रञ्च स्वतः प्रभुः ।
समुत्पत्याकृष्यबलान्मध्ये तां विददार ह ॥ ३६
नाशं गतायां मायायां बलदेवो महाबलः ।
गृहीत्वा भुजदण्डाभ्यां भुजदण्डे मदोत्कटम् ॥ ३७
भ्रामयन् बाल इव तं प्रतूलं स इतस्ततः ।
पातयामास भूपृष्ठे कमण्डलुमिवार्भकः ॥ ३८
तस्य दैत्यस्य पातेन साब्धिशैलवनैः सह ।
चकम्पे नाडिकामात्रं सर्वं भूखण्डमण्डलम् ॥ ३९
भग्नदन्तश्चलन्नेत्रो मूर्च्छितो निधनं ययौ ।
कोलो नाम महादैत्यो वृत्रो वज्रहतो यथा ॥ ४०
तदा जयजयारावो दिवि भूमौ बभूव ह ।
देवदुन्दुभयो नेदुः पुष्पवर्षाः सुरैः कृताः ॥ ४१
इत्थं कोलं घातयित्वा बलदेवोऽच्युताग्रजः ।
दत्त्वाथ कौशारवये कौशाम्बीञ्च पुरीं ततः ॥ ४२
स्नातुं भागीरथीं प्रागाद् गर्गाचार्यादिभिर्वृतः ।
लोकानां सङ्ग्रहं कुर्वन् सर्वदोषक्षयाय च ॥ ४३
स्नापयाञ्चक्रुरार्यास्ते गङ्गायां माधवं बलम् ।
वेदमन्त्रैर्मङ्गलैश्च गर्गाचार्यादयो द्विजाः ॥ ४४
लक्षं गजानां वैदेह स्यन्दनानां द्विलक्षकम् ।
हयानाञ्च तथा कोटिं धेनूनामर्बुदं दश ॥ ४५
शतार्बुदञ्च रत्नानां भारं जाम्बूनदावृतम् ।
रामो दत्वा ब्राह्मणेभ्यो प्रययौ मथुरां पुरीम् ॥ ४६
यत्र रामेण गङ्गायां कृतं स्नानं विदेहराट् ।
तत्र तीर्थं महापुण्यं रामतीर्थं विदुर्बुधाः ॥ ४७

कार्त्तिक्यां कार्त्तिके स्नात्वा रामतीर्थे तु जाह्नवीम् ।
हरिद्वाराच्छतगुणं पुण्य वै लभते जनः ॥ ४८

बहुलाश्व उवाच

कौशाम्बेश्च कियद्दूरं स्थले कस्मिन् महामुने ।
रामतीर्थं महापुण्यं मह्यं वक्तुं त्वमर्हसि ॥ ४६

नारद उवाच

कौशाम्बेश्च तदीशान्यां चतुर्योजनमेव च ।
वायव्यां सूकरक्षेत्राच्चतुर्योजनमास्थितम् ॥ ५०
कर्णक्षेत्राच्च षट्क्रोशैर्नलक्षेत्राच्च पञ्चभिः ।
आग्नेय्यां दिशि राजेन्द्र रामतीर्थं वदन्ति हि ॥ ५१
वृद्धदेवीसिद्धपीठाद्विल्वकेशवनात् पुनः ।
पूर्वस्याञ्च त्रिभिः क्रोशै रामतीर्थं विदुर्बुधाः ॥ ५२
दृढाश्वो वङ्गजो राजा कुरूपं लोमशं मुनिम् ।
दृष्ट्वा जहास सतत तं शशाप महामुनिः ॥ ५३
विकरालः क्रोडमुखोऽसुरो भव महाखल ।
इत्थं स मुनिशापेन कालः क्रोडमुखोऽभवत् ॥ ५४
बलदेवप्रहारेण त्यक्त्वा स्वामासुरीं तनुम् ।
कोलो नाम महादैत्यः परं मोक्षं जगाम ह ॥ ५५
ततो रामो मन्त्रिभिश्च उद्धवादिभिरान्वतः ।
जह्नुतीर्थं जगामाशु यत्र दक्ष गुतेरभूत् ॥ ५६
गङ्गा ब्राह्मणमुख्यस्य जाह्नवी येन कथ्यते ।
दत्वा दानं द्विजातिभ्य ऊषू रात्रौ जनैः सह ॥ ५७
ततस्तत्पश्चिमे भागे पाण्डवानामतिप्रियम् ।
आहारस्थानकं प्राप्य रात्रौ वासं चकार ह ॥ ५८

तत्र दानं द्विजातिभ्यो दत्त्वा सद्गुणभोजनम् ।
ततो योजनमेकञ्च देवमाण्डूकसंज्ञकम् ॥ ५६
तपस्तप्तं महत्तेनानन्तदेवकृपाप्तये ।
तदर्थं स्वसमाजेन बलदेवो जगाम ह ॥ ६०
ऊर्ध्वास्यमेकपादस्थं ध्यानस्तिमितलोचनम् ।
स्वभक्तं हृदयस्थ स्वं मूर्तिदर्शनलोलुपम् ॥ ६१
तां जहार तदानन्तस्ततो बाह्ये ददर्श ह ।
स दृष्ट्वानन्तदेवस्य रूपं परमसुन्दरम् ॥ ६२
स्रग्व्येककुण्डलं गौरं तालाङ्करथसंयुतम् ।
स्तुत्वा परमया भक्त्या पपात चरणौ पुनः ॥ ६३
तस्य शीर्ष्णि करं दत्वा वरं ब्रूहीत्युवाच ह ।
यदि प्रसन्नो भगवाननुग्राह्योऽस्मि वा यदि ॥ ६४

माण्डूक उवाच

सर्वोत्तमां भागवतीं संहितां शुकवक्त्रतः ।
निर्गतां देहि मे स्वामिन् कलिदोषहरां पराम् ॥ ६५

बलदेव उवाच

उद्धवद्वारतः प्राप्तिर्भविष्यति तवानघ ।
श्रीमद्भागवती कीर्तिरधिकार्या कलौ युगे ॥ ६६

माण्डूक उवाच

कथं भगवता दत्ता मुख्या तस्याधिकारिता ।
कदा योगं मम स्वामिन् कुरु सन्देहभञ्जनम् ॥ ६७

बलदेव उवाच

कथयामि परं गोप्यं रहस्यं परमाद्भुतम् ।
अद्यापि मम सामीप्ये उद्धवोऽयं विराजते ॥ ६८

तद्दर्शन कुरु परमाचार्यसम्प्रदायकम् ।
अद्य तीर्थस्य यात्रायामुपदेशो न ते भवेत् ॥ ६९
यथोपदेष्टा भवति तेन ते कथयाम्यहम् ।
उद्धवः स्थापितः श्रीमदाचार्यैः संहितामयः ॥ ७०
नन्दादिव्रजवासीनां गोपीनां प्रीतये कृतः ।
स्वस्वरूपं परिकर यत्किञ्चिद्भगवत्तमम् ॥ ७१
सर्वस्वभावगुणकं कृष्णेन परमात्मना ।
उद्धवश्चैव स्वात्मानमेक एवाचरद्विभुः ॥ ७२
साक्षात्कारं चकारादौ न स्वीयमन्तरं क्वचित् ।
श्रीकृष्णमेव ते ज्ञात्वा पूजयामासुरादरात् ॥ ७३
वसन्तर्तुश्च ग्रीष्मोऽपि स चचार व्रजात्मकौ ।
शमयामास राधायाः शोकं तत्कुण्डपार्श्वजः ॥ ७४
सर्वं भूमण्डलं तत्र विचचार व्रजानुगै. ।
वियोगार्तिहरः प्रोक्तो गवां नन्दादिगोपिनाम् ॥ ७५
मन्त्राधिकारकुशलः सर्वः परिकराग्रणीः ।
अथान्तर्धानवेलायां भगवान् धर्मगुप् तनुः ॥ ७६
तस्मै स्वतेजसन्नपि दास्यते परमाद्भुतम् ।
मुद्राधिकारं सर्वत्र सर्वदैव विराजते ॥ ७७
अन्तर्धाने तु स्वस्थाने दत्ता तस्याधिकारिता ।
बदरीस्थं सपरिकरं धर्मजं बोधयिष्यति ॥ ७८
अर्जुनादिवियोगार्तिहारी सैव भविष्यति ।
वज्रनाभो यादवानां माथुरे सम्भविष्यति ॥ ७९
श्रीकृष्णस्य प्रपौत्रे च महाराज्ञीगणेषु च ।
वियोगार्तिहरश्चैव स्थाप्यते श्रीहरिः स्वयम् ॥ ८०
कौरवाणां कुले राजा परीक्षिदिति विश्रुतः ।
तस्य पुत्रोऽतितेजस्वी विख्यातो जनमेजयः ॥ ८१

पितुः शत्रुहरं यज्ञं करिष्यति न संशयः ।
तस्यापि सर्वसामग्री उद्धवद्वारतो भवेत् ॥ ८२
श्रीमद्भागवतं दिव्यं पुराणं वाचनं तदा ।
गौरान्वयस्य सम्प्राप्तिर्भविष्यति न संशयः ॥ ८३
श्रीमत्प्रसादो विप्रर्षेर्महाभागवतोत्तमात् ।
तद्द्वारा सर्पयज्ञस्य निवृत्तिः सम्भविष्यति ॥ ८४
यज्ञसंस्तारकर्तॄणां ब्राह्मणानाञ्च पूजनम् ।
स दास्यति महाराजा ग्रामाणां शतकं तदा ॥ ८५
ततस्त्वाचार्यवर्यस्य श्रीप्रसादस्य चाज्ञया ।
स गन्ता शूकरक्षेत्रं मासमेकं स्थितो भवेत् ॥ ८६
दत्त्वा दानान्यनेकानि गोमहीगजवाजिनः ।
रत्नं वासो ब्राह्मणेभ्यो भोजनञ्च यदृच्छया ॥ ८७
ततस्तस्मात् स्थलात् सोऽपि निवर्त्य गुरुणा सह ।
गङ्गातीरस्थलान् पश्यन् आगमिष्यति सद्व्रतः ॥ ८८
शयाननगरे संस्थां करिष्यति सहानुगः ।
श्रीगुरोराज्ञया तत्र सामग्रीसाधनैः सहः ॥ ८९
अश्वमेधं करोति स्म सर्वजेता भविष्यति ।
एकच्छत्रधरो भूत्वा श्रीगुरोः शरणं गतः ॥ ९०
ततो गङ्गातटे रम्ये पूर्वस्यां क्रोशपञ्चके ।
परमैकान्तरूपेण सेवनं तत्करिष्यति ॥ ९१
तत्र भागवती वार्ता भवरोगविनाशिनी ।
भविष्यति मुदा युक्ता समाजेषु सुधर्मिणाम् ।
तत्र भागवती वार्त्ता सेवनं स करिष्यति ॥ ९२
तत्र पूर्णसमाजेषु तेषां मध्ये भवानपि ।
श्रृणोषि भगवद्धर्मं गन्ता श्रीनिर्मलं पदम् ॥ ९३

तपस्तप्तं मदर्थं ते तस्मादेतत् प्रकाशितम् ।
एवमेवं वरं दत्वा गतो रामः सहानुगः ॥ ९४
शयानंनगराच्छुद्धादीशान्यां दिशि संस्थितम् ।
स्थानं गङ्गातटे रम्यं कण्टकादुत्तरे भवेत् ॥ ९५
पुष्पवत्या दक्षिणे तु क्रोशैकं विस्तरेण च ।
तत्र सङ्कर्षणो देवः स्थित्वा दानपरोऽभवत् ॥ ९६
घोटकान् दशसाहस्रं रथानां शतकं तथा ।
द्विपान् सहस्रं गाश्चैव दिक्सहस्रं ददौ मुदा ॥ ९७
तत्र सङ्कर्षणं देवं पूजयामासुरादरात् ।
देवाः समाययुः सर्वे ऋषयश्च तपोधनाः ॥ ९८
नमः कोलेशघाताय खरासुरविघातिने ।
हलायुध नमस्तेऽस्तु मुशलास्त्राय ते नमः ।
नमः सौन्दर्यरूपाय तालाङ्काय नमोनमः ॥ ९९
इति श्रुत्वा स्तुतिं तेषां सङ्कर्षण उवाच ह ।
वरं ब्रुवन्तु वः सर्वे भवतां यदभीप्सितम् ॥ १००

द्विजदेवा ऊचुः

यदा यदा वयं युक्ताः स्मरामो भवतः पदम् ।
सर्वबाधाविनिर्मुक्ता भवामः श्रीतवाज्ञया ॥ १०१

राम उवाच

यदा यदा मां स्मरथ तदाहं शरणागतान् ।
रक्षिताहं कलौ नूनमिति सत्यं वचो मम ॥ १०२
अत्र स्थले वरं प्राप्तं पूजितं मुनिपुङ्गवैः ।
अतः सङ्कर्षणस्थानं भविष्यति कलौ युगे ॥ १०३
अस्यां स्नास्यन्ति गङ्गायां देवान् सम्पूजयन्ति ये ।
दास्यन्ति दानं विप्रेभ्यो भोजनं कारयन्ति ये ॥ १०४

विष्णुं सम्पूजयन्ति स्म सफलं जीवितं क्षितौ ।
ते यान्ति दैवतस्थानं कामी प्राप्नोति कामनाम् ॥ १०५
ततः परिवृतो रामः स्वां पुरीं सञ्जगाम ह ।
कोलरक्षो वध कृत्वा स्नात्वा विष्णुपदी जले ॥ १०६
रामस्य बलदेवस्य कथां यः शृणुयान्नरः ।
सर्वपापविनिर्मुक्तः स यांति परमां गतिम् ॥ १०७

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे कोलदैत्यवधो नाम
चतुर्विंशोऽध्यायः ॥ २४

बहुलाश्व उवाच

कस्मादागते रामे यत्र तीर्थमिदं श्रुतम् ।
हो मधुपुरी धन्या यत्र सन्निहितश्च सः ॥ १
ुरायास्तु को देवः कः क्षत्ता कश्च रक्षति ।
श्चारः को मन्त्रिवरः कैर्भूमिस्तत्र सेविता ॥ २

नारद उवाच

रेपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् हरिः ।
ायं हि मथुरानाथः केशवः क्लेशनाशनः ॥ ३
ाक्षाद्भगवता प्राप्तः कपिलाय द्विजाय च ।
पिलः प्रददौ यं वै प्रसन्नः शतमन्यवे ॥ ४
त्वा देवान् राक्षसेन्द्रो रावणो लोकरावणः ।
स्तुत्वा पुष्पके स्थाप्य लङ्कायां तमपूजयत् ॥ ५
त्वा लङ्कां राघवेन्द्रस्तमानीय प्रयत्नतः ।
योध्यायाञ्च वाराहमर्चयामास मैथिल ॥ ६
ुत्वा रामञ्च शत्रुघ्नो यमानीय प्रयत्नतः ।
ुरायां महापुर्यां स्थापयित्वा ननाम ह ॥ ७
वितो माथुरैः सर्वैः सर्वेषाञ्च वरप्रदः ।
ाक्षात् कपिलवाराहः सोऽयं मन्त्रिवरः स्मृतः ॥ ८
त्ता श्रीमथुरायाश्च नाम्ना भूतेश्वरः शिवः ।
त्वा दण्डं पातकिने हरेर्धाम नयेत् पलम् ॥ ९
ण्डिका तु महाविद्या दुर्गा दुर्गतिनाशिनी ।
सहारूढा सदा रक्षां मथुरायाः करोति हि ॥ १०
ारोऽहं मथुरायाश्च पश्यँल्लोकानितस्ततः ।
दामि वार्तां सर्वेषां श्रीकृष्णाय महात्मने ॥ ११

मध्ये वै मथुरादेवी शुभदा करुणामयी ।
बुभुक्षितेभ्यः सर्वेभ्यो ददात्यन्नं विदेहराट् ॥ १२
चतुर्भुजाः श्यामलाङ्गा व्रजन्ति प्राव्रजन्ति च ।
मथुरायां मृतं नेतुं विमानैः कृष्णपार्षदाः ॥ १३
श्रीकृष्णस्याङ्गसम्भूता मथुरा वै महापुरी ॥
यस्या दर्शनमात्रेण नरो याति कृतार्थताम् ॥ १४

पुरा विधिः श्रीमथुरामुपेत्य
तप्त्वा तपो वर्षशतं निरन्नः ।
जपन् हरिं ब्रह्म परं स्वयम्भूः
स्वायम्भुवं प्राप सुतं प्रवीणम् ॥ १५
भूतेश्वरो देववरः सतीपति
स्तप्त्वा तपो दिव्यशरन्मधोर्वने ।
कृष्णप्रसादान्नृपराज सत्वरं
तस्याः पुरे माथुरमण्डलस्य ॥ १६
कृष्णप्रसादादहमेव चारो
भ्रमन् सदा माथुरमण्डलस्य ।
तथाहि दुर्गा मथुरां प्रयाति
कृष्णप्रसादान्निवसन्ति लोकाः ॥ १७
तप्त्वा तपः शक्रपदञ्च शक्रः
सूर्यो मनुं नित्यनिधिं कुबेरः ।
पाशी च पाशं समवाप्य सम्यङ्
मधोर्वने विष्णुपदं ध्रुवश्च ॥ १८
तथाम्बरीषः समवाप मुक्तिं
सोमो क्षयं वा लवणाञ्जयञ्च ।
रघुश्च सिद्धिं किल चित्रकेतु
स्तप्त्वा तपोऽत्रैव मधोर्वने च ॥ १९

तप्त्वा तपोऽत्रैव मधोर्वने शुभे
भूत्वा बलिष्ठश्च मधुर्महासुरः।
श्रीमाधवे मासि च माधवेन
युयोध युद्धे मधुसूदनेन सः॥ २०
सप्तर्षयः श्रीमथुरां समेत्य
तप्त्वा तपोऽत्रैव च योगसिद्धिम्।
प्रापुः परे वा मुनयः समन्ताद्
गोकर्णवैश्योऽपि महानिधिञ्च॥ २१
तप्त्वा तपोऽत्रैव मधोर्वने शुभे
विजित्य देवान् दिवि लोकरावणः।
निधाय रक्षांसि विधाय मन्दिरं
प्रास्थाय लङ्कां विरराज रावणः॥ २२
तप्त्वा तपोऽत्रैव मधोर्वने शुभे
गजाह्वयेशो मिथिलेश शन्तनुः।
लेभे सुतं भीष्ममतीवसत्तमं
तत्त्वार्थवारांनिधिकर्णधारकम्॥ २३

बहुलाश्व उवाच

मथुरायाश्च माहात्म्यं वद देवर्षिसत्तम।
निवासे किं फलं प्रोक्तं मथुरायाः सतां नृणाम्॥ २४

नारद उवाच

आदौ वराहो धरणीं निमग्नां
महावने प्रोज्झितवीचिशङ्के।
स्वदंष्ट्रयोद्धृत्य करीव पद्मं
करेण माहात्म्यमिदं जगाद॥ २५

ब्रुवञ्जनो नाम फलं हरेर्लभे
च्छृण्वँल्लभेत् कृष्णकथाफलं नरः ।
स्पृशन् सतां स्पर्शनजं मधोः पुरि
जिघ्रंस्तुलस्यादलगन्धजं फलम् ॥ २६
पश्यन् हरेर्दर्शनजं फलं स्वतो
भक्षंश्च नैवेद्यभव रमापतेः ।
कुर्वन् भुजाभ्यां हरिसेवया फलं
गच्छँल्लभेत्तीर्थफल पदे पदे ॥ २७
राजेन्द्रहन्ता निजगोत्रघातक
स्त्रैलोक्यहन्तापि च कोटिजन्मसु ।
राजन् शृणु त्वं मथुरानिवासतो
योगीश्वराणां गतिमाप्नुयान्नरः ॥ २८
पादौ च धिग् यौ न गतौ मधोर्वनं
दृशौ च धिग् ये न कदापि पश्यतः ।
कर्णौ च धिग् यौ शृणुतो न मैथिल
वाचं च धिग् या न करोत्यलं मनाक् ॥ २६
त्रिसप्तकोटीनि वनानि यत्र
तीर्थानि वैदेह समास्थितानि ।
एकैकमेतेषु विमुक्तिदानि
वदामि साक्षान्मथुरां नमामि ॥ ३०
गोलोकनाथः परिपूर्णदेवः
साक्षादसङ्ख्याण्डपतिः स्वयं हि ।
श्रीकृष्णचन्द्रोऽवततार यस्यां
तस्यै नमोऽन्यासु पुरीषु किंवा ॥ ३१
यन्नाम पापं विनिहन्ति तत्क्षणं
भवन्त्यलं यां गृणतोऽपि मुक्तयः ।

वीथीषु वीथीषु च मुक्तिरस्या
स्तस्मादिमां श्रेष्ठतमां विदुर्बुधाः ॥ ३२
काश्यादिपुर्यो यदि सन्ति लोके
तासान्तु मध्ये मथुरैव धन्या ।
या जन्ममौञ्जीव्रतमृत्युदाहै
र्नृणां चतुर्धा विदधाति मुक्तिम् ॥ ३३
पुरीश्वरीं कृष्णपुरीं व्रजेश्वरीं
तीर्थेश्वरीं यज्ञतपोनिधीश्वरीम् ।
मोक्षप्रदां धर्मधुरं धरां परां
मधोर्वने श्रीमथुरां नमाम्यहम् ॥ ३४
शृण्वन्ति माहात्म्यमिदं मधोः पुरः
कृष्णैकचित्ता नियताश्च यत्र ये ।
व्रजन्ति ते तत्र परिक्रमाफलं
वैदेह राजेन्द्र नचात्र संशयः ॥ ३५
खण्डं त्विदं श्रीमथुरापुरस्य ये
शृण्वन्ति गायन्ति पठन्ति सर्वतः ।
इहैव तेषां हि समृद्धिसिद्धयो
भवन्ति वैदेह निसर्गतः सदा ॥ ३६
त्रिःसप्तकृत्वो बहु वैभवार्थिनः
शृण्वन्ति चैनं नियताश्च ये भृशम् ।
तेषां गृहद्वारमलङ्करोति हि
भृङ्गावली कुञ्जरकर्णताडिता ॥ ३७
विप्रोऽथ विद्वान् विजयी नृपात्मजो
वैश्यो निधीशो वृषलोऽपि निर्मलः ।
श्रुत्वेदमाराच्च मनोरथो भवेत्
स्त्रीणां जनानामतिदुर्लभोऽपि हि ॥ ३८

निष्कारणो भक्तियुतो महीतले
शृणोति चेदं हरिलग्नमानसः।
विजित्य विघ्नान् प्रविजित्य नाकपान्
गोलोकधामप्रवरं प्रयाति सः॥ ३१

इति श्रीगर्गसंहितायां मथुराखण्डे नारदबहुलाश्व-
संवादे मथुरामाहात्म्यं नाम
पंचविंशोऽध्यायः॥ २५

इति पञ्चमो मथुराखण्डः सम्पूर्णः।

## गर्गसंहितायां मथुराखण्डे पाठान्तरादि प्रदर्शनम्

१।४ ०प्रोवाचमेवं० इति क० ख० ग० पु० ।

१।७ ०त्वद्बलोत्कटाः । इति मु० पु० ।

१।१२ ०नारदेन तु ॥ इति मु० पु० ।

१।१३ ०हन्यतां मल्ल० इति क० ख० ग० पु० ।

१।१४ ०महाहितौ ॥ इति ख० पु० ।
०समाहितौ ॥ इति ग० पु० ।

१।१५ श्लोकादौ असङ्गतं किञ्चित् लिखितं वर्त्तते ग० पु० ।

१।२२ ०बद्धं राज्य० इति मु० पु० ।

१।२३ ०महान् मित्रं० इति क० ख० ग० पु० ।

१।२४ ०शङ्कर एव च । इति मु० पु० ।

१।२६ एते सर्वां० इति मु० पु० ।

१।२७ ०करिष्यन्ति न० इति मु० पु० ।

१।२९ त्वया यदुपते रम्ये० इति ग० पु० ।

१।३० ०त्मनो नित्यहरेः प्रभावा० इति मु० पु० ।

०स्तिष्ठति कर्म० इति मु० पु० ।

२।१ ०महोत्कटः । इति मु० पु० ।
राजन् वृन्दावनं० इति मु० पु० ।
गत्वा वृन्दावनं० इति ग० पु० ।

२।३ ते वीक्ष्य० इति ग० पु० ।

२।४ ०पीताम्बर० इति मु० पु० ।

२।१० महीं विदारयन्० इति मु० पु० ।
०पादैरूपपात० इति ग० पु० ।

२।१५ नास्ति ग० मु० पु०

२।२१ ०दृष्टोऽहं० इति मु० पु०

२।२३ यच्छापा० इति क० ख० पु० ।

३।१ ०नृपस्य हि । इति क० पु० ।

३।६ इत्थं संचिन्तयन् इत्यनन्तरं ७म श्लोकोऽत्रैव लिखितोऽस्ति ग० पु० ।

३।८ ०तेषु प्लुतं चाश्रु० इति ख० पु० ।

३।१० ०स्तथाक्रूर:० इति ग० पु० ।

३।१२ तडिद्द्युद्वर्षा० इति मु० पु० ।
०दूगतोऽधस्तयो० इति मु० पु० ।

३।१३ तदाननं वाष्प० इति० मु० पु० ।

३।१६ नास्ति ग० पु० ।

३।२३ सर्वे तु गोरसं० इति मु० पु० ।

३।३२ ०दैवं न जानाति० इति क० ख० पु० ।

३।३३ नास्ति ग० पु० ।

४।१ एवं गदन्तीनां राजन्० इति क० ख० ग० पु० ।

४।२ यावतीर्योषितो० इति क० ख० ग० पु० ।
यावन्त्यो योषितो० इति मु० पु० ।

४।३ ०दृष्ट्वा राधा० इत्यनन्तरं ४र्थ श्लोकस्थं चातुरा नेत्रे उन्मील्य इत्यादिकं वर्त्तते ग० पु० ।

४।७ ०मा शोचं० इति क० ख० ग० पु० ।

४।१० ०मूर्च्छिता सुकम्प० इति मु० पु० ।

४।११ ०शृणुष्वतः। इति क० ख० ग० पु० ।
०प्राणपते च० इति क० ख० मु० पु० ।

४।१२ यदात्थ मे० इति मु० पु० ।
०वारं वदयामि वाक्पथम्। इति क० ख० मु० पु० ।

४।१३ श्लोकद्वितीयार्द्धं नास्ति ख० पु० ।

४।१५ मा शोचं कुरु० इति क० ख० ग० पु० ।
०वियोगान्ते दर्शनं० इति मु० पु० ।

४।१६ श्लोकद्वितीयार्द्धे-नागमिष्यसि नन्दसूनो दुःखाद्देहं त्यजाम्यहम् ॥ इति ग० पु० ।

४।१८ ०ते वियोगं० इति मु० पु० ।
०मया सत् ॥ इति क० ख० ग० पु० ।

४।१९ ०हेतुपटुं नटं० इति मु० पु० ।

४।२० नास्ति ग० पु० । कं सरथं घनाः ॥ इति तु २९ श्लोकान्ते लिखितमिति । २९ श्लोकोऽपि भ्रष्ट एव ।

४।३३ विहाय लज्जां लोकस्य इत्यनन्तरं सबलो भगवान् हरिः इत्यादि ३४श्लोकः लिखितो वर्त्तते ग० पु० ।

४।३५ ०मा कुर्यास्तो व्रजौकसः ॥ इति क० ख० ग० पु० ।

४।३६ ०सरथं समा० इति क० ख० ग० पु० ।

५।१ ०माभ्यामसुरोपवनं० इति क० पु० ।

५।५ महालोक इत्यारभ्य अनन्तरश्लोकस्थः मार्त्तण्डज्योतिषां इत्यन्त. पाठः पतितः ग० पु० ।

५।६ ०मण्डल प्रभुम् । इति मु० पु० ।

५।८ ०तिहर्षितः ॥ इति मु० पु० ।

५।१० ०नन्दराजपुत्राय० इति ग० पु० ।

५।१५ रामकृष्णावित्यारभ्य अनन्तरश्लोकस्य वीक्ष्य नन्दं इत्यन्तः पाठः पतितः ख० पु० ।

गमिष्यामि इत्यनन्तरं परश्लोकस्थं प्रियं तवेति वर्त्तते ग० पु० ।

५।२० श्लोकोऽयं नास्ति ग० पु० ।

५।२१ ०निवेद्य तञ्च कंसाय० इति ग० पु० ।

५।२३ ०भवता किल । इति पतितः ग० पु० ।

०महा० इत्यधिकः ग० पु० ।

५।२५ ०खचित्तटैः । इति ग० पु० ।

५।२८ ०पुरी गताः । इति ग० मु० पु० ।

५।२६ ०कुब्ज्यास्तु का० इत्यनन्तरं पतित पाठः ग० पु० ।

५।३० एकं हलत्कुन्त० इति नास्ति ग० पु० ।

एकं चलत्कुन्त० इति मु० पु० ।

५।३१ ०बलिनं स्फुर० इति मु० पु० ।

०वलितस्फुर० इति क० पु० ।

पद्मे करे० इति ख० पु० ।

०स्वां हृदि० इति ख० ग० मु० पु० ।

५।३२ ०विलोलयावीन० इति ख० पु० ।

५।३४ ०स्ताभिः किं० इति मु० पु० ।

५।३८ ०स्तान कौपीन० इति क० ख० ग० पु० ।

५।३६ ०वस्त्रहरानहम् ॥ इति मु० पु० ।

०वस्त्रहराम्यहम् ॥ इति ग० पु० ।

५।४१ ०कालं यथा घनाः ॥ इति क० ख० पुं० ।

५।४२ ०बालास्ते इत्यनन्तरं परश्लोकस्थं वासांसि रुचिराणि च इति वर्त्तते ग० पु० ।

५।४३ तद्धारणाविदो बाला० इति पतित. ग० पु० ।

०वासांसि रुचिराणि च । इति पूर्वश्लोकान्ते लिखितं ग० पु० ।

५।४४ ०तौ बालकः० इति मु० पु० ।

६।१ ०दाममालिनः॥ इति मु०पु०।

६।५ ०कारं मधुपध्वनिम् । इति मु० पु० ।

६।७ ०न्मतस्वरूपमिहै० इति मु० पु० ।

६।११ मद्धस्तोत्थश्च० इति मु० पु० ।

६।१२ ०चाग्रतः । इति मु० पु० ।

६।१३ ०कर्त्तुमर्हसि । इति क० ख० ग० पु० ।

६।२१ एवं मुक्त्वो० इति ग० मु० पु० ।

६।२२ ०गन्धाढ्यैः० इति मु० पु० ।

०स्वासने स्थाप्य० इति मु० पु० ।

६।२३ ०स्मरतात् सदा ॥ इति मु० पु० ।

६।२५ कुमार पश्यै० इति मु० पु० ।

६।२६ नास्ति ख० पु० ।

६।२७ ०सप्ततालकैः । इति क० ख० ग० पु० ।

०व्रजान्तरम् ॥ इति क० ग० पु० ।

०व्रजाद् गृहम् ॥ इति ख० पु० ।

६।२८ ०मण्डले ॥ इति मु० पु० ।

६।३२ श्लोकमध्यपादद्वयं नास्ति ख० पु० ।

६।३३ श्लोकपूर्वार्द्धं नास्ति ख० पु० ।
०स्ताररराजंद्भू० इति मु० पु० ।
०स्तारा राजद्भू० इति ग० पु० ।
६।४० ०स्वरूपमद्भुतं० इति क० ख० ग० पु० ।
६।४१ ०माहर त्वरं० इति क० ख० ग० पु० ।
०मथुरां पुरं० इति मु० पु० ।
०समाविश ॥ इति क० ग० पु० ।
०समा दिशः ॥ इति ख० पु० ।
६।४२ ०निरीक्ष्यतीयभि० इति क० ख० ग० प० ।
६।४३ प्रपतन् परगवत् । इति क० ग० पु० ।
६।४४ ०न्नाभवल्लब्ध० इति मु० पु० ।
६।४५ नारद उवाच इति नास्ति मु० पु० ।

७।१ ०मुपागमत् ॥ इति मु० पु० ।
७।५ ०देशाग्रे० इति मु० पु० ।
७।८ ०र्युक्तैश्चाम० इति मु० पु० ।
७।६ ०द्रिश्रृङ्ग० इति मु० पु० ।
७।१३ ०तस्मादेकस्मिन्० इति मु० पु० ।
०मञ्चमाश्रिताः ॥ इति क० ख० ग० पु० ।
७।१५ रङ्गमण्डलम् ॥ इति मु० पु० ।
७।२४ ०मथुराञ्च० इति क० ख० ग० पु० ।
श्लोकापरार्द्धं नास्ति ग० पु० ।
७।२५ श्लोकपूर्वार्द्धं नास्ति ग० पु० ।
श्लोकतृतीयपादोऽपि नास्ति ग० पु० ।
७।२७ ०रुरुधुस्तं० इति मु० पु० ।
७।३० ०दण्डं सङ्गृहीत्वा० इति क० ख० ग० पु० ।
७।३१ सतां प्रपश्यता० इति मु० पु० ।
स तेषां पश्यतां० इति क० ग० पु० ।
७।३२ ०महामात्यान्० इति क० ख० ग० पु० ।

अन्येष्वपि श्लोकेषु महामात्यान् इत्येव दृश्यते क० ख० ग० पु० ।

७।३६ ०कंसो ह्यबुधाविरा० इति क० ख० ग० पु० ।

७।३७ ०दैवं तदा० इति मु० पु० ।

७।३८ ०भयमाप चेतसि। इति मु० पु० ।

०मानसाश्च० इति मु० पु० ।

७।४० ०यत्रैव साक्षा० इति क० ख० ग० पु० ।

७।४६ ०नोदनञ्च भुजाभ्या० इति मु० पु० ।

७।४८ ०भूखण्डे वाग० इति क० ग० पु० ।

७।५० नास्ति क० ख० ग० पु० ।

७।५१ ०भुजोरोऽङ्गुलि० इति मु० पु० ।

७।५२ श्रमवारियुते० इति मु० पु० ।

७।५३ नास्ति ग० पु० ।

७।५४ ०यन्नेत्रयोर्दर्शनं० इति क० ख० ग० पु० ।

७।५५ ०पुण्यलवेन० इति कं० ग० पु० ।

८।२ ०मिवोद्धतम् ॥ इति मु० पु० ।

८।३ ०ष्यधोमुखः । इति क० ग० पु० ।

८।४ ०भूतले ॥ इति मु० पु० ।

८।७ ०प्रचारेण चाणूरो० इति मु० पु० ।

८।८ धृत्वाङ्घ्रौ० इति मु० पु० ।

८।९ ०निधनं प्राप० इति मु० पु० ।

८।१२ ०संविदार्य च । इति मु० पु० ।

८।१३ श्लोकोत्तरार्द्धं नास्ति ग० पु० ।

८।१४ नास्ति ग० पु० । अत्र केवलं तेषां ज्योवनेच्छया । १४ इति लिखितमस्ति ।

८।१८ ०घोषं प्राह० इति मु० पु० ।

८।१९ हरन्त सर्वं० इति क० ख० ग० पु० ।

८।२१ ०आरुह क्रोधः इति क० ग० पु० ।

०आरुह्य क्रोध० इति मु० पु० ।

८।२२ ०खड्गचर्मणी ॥ इति मु० पु० ।

८।२३ अग्रहीत् सहसा० इति मु० पु० ।

८।२७ ०बलदक् देवो० इति क० ख० ग० पु० ।

८।३६ ०हस्तेभ्य प्राभयात्। इति क० ग० पु० ।
०हस्तेभ्य हा भयात्। इति ख० पु० ।

८।४६ आनिर्दशा० इति मु० पु० ।
०श्चापरेऽपि० इति मु० पु० ।

८।५० ०प्राश्वास्य नृप० इति क० ग० पु० ।
०चितः श्रीखण्ड० इति क० ख० ग० पु० ।

६।२ ०शैथिल्यता० इति क० ख० ग० पु० ।
०गरुडं प्राप्तं० इति मु० पु० ।

६।६ ०निवारयामास० इति मु० पु० ।

६।८ ०मनसोत्थिता० इति क० ख० ग० पु० ।

६।१४ श्लोकापरार्द्धं नास्ति ग० पु० ।

६।१५ नास्ति ग० पु० ।

६।१६ नास्ति ग० पु० ।

६।१८ द्दतः पञ्चजने० इति मु० पु० ।

६।१६ ०भयदायकः ।। इति ख० पु० ।

६।२० ०भीमवादिनि ।। इति क० ख० ग० पु० ।

६।२२ श्लोकोत्तरार्द्धं नास्ति क० ग० पु० ।

६।२३ श्लोकपूर्वार्द्धं नास्ति क० ग० पु० ।

६।२५ ०तं तताड ह ।। इति मु० पु० ।

९।२६ ०तं श्रुत्वा० इति मु० पु० ।

६।३० ये ये श्रुत्वा० इति क० ख० ग० पु० ।
०ध्वनिं ते तु० इति क० ख० ग० पु० ।

६।३४ सत्यं कुरु० इति क० ख० ग० पु० ।
०यदुक्त मानयं० इति क० ख० ग० पु० ।

६।३६ ०सयतौ तौ नत्वा० इति मु० पु० ।

६।३७ ०कारणाकारक.। इति मु० पु० ।

९।३६ कृताञ्जलिः पुरः ०इति मु० पु० ।
उवाहानन्दजनितां परां वाष्प कलां० इति क० ख० ग० पु० ।
९।४३ सन्तोत स्त्वात्मनः श्लाघ्यं कुर्वन्ति ०इति क० ख० ग० पु० ।
९।४७ ०कौरवदुःखभोगिनाम्। इति मु० पु० ।
०भवतः पदाम्बुजे० इति मु० पु० ।
९।५४ श्लोकपूर्वोत्तरार्द्धे व्यत्ययेन वर्त्तेते क० ख० ग० पु० ।

१०।१ ०श्रोतुमनाश्चाद्य तृषितो० इति मु० पु० ।
१०।२ ०दैत्यवर्याणां० इति मु० पु० ।
१०।५ ०दुष्टामुशती० इति मु० पु० ।
०भजेत् पुनः ॥ इति क० ख० ग० पु० ।
१०।६ ०पवादित ॥ इति क० ग० पु० ।
१०।१२ ०रचयन् किल। इति मु० पु० ।
०परिचयन्० इति ख० मु० पु० ।
१०।१५ ०तस्मादशेष० इति ख० मु० पु० ।
१०।१६ ०बभूव सः। इति क० ग० पु० ।
१०।१९ ०मत्सङ्गक्र० इति क० ग० पु० ।
१०।२१ एकदातिप्रसन्नो० इति मु० पु० ।
१०।२५ ०सम्बभूवह॥ इति मु० पु० ।

११।५ ०विमता भृशम्॥ इति क० ग० पु० ।
११।६ ०शूर्पनखी० इति क० ख० ग० पु० ।
११।९ ०माथुरान्ते० इति क० ख० ग० पु० ।
११।१३ ०समो बले ॥ इति ग० पु० ।
११।१४ ०मत्तोऽभवज्ज० इति ख० पु० ।
११।१६ ०विचरस्यङ्गयात्रायां० इति मु० पु० ।

१२।३ ०जय तेन सहैव० इति मु० पु०
०अयं तेन सहैव० इति ख०

१२।५ शमो दमस्तपः शौचमिति गीतास्थं श्लोकत्रयमुक्त्वा ब्रह्मकर्मपरित्यक्ता भवन्तो ब्रह्मणा सुताः ॥५ मल्लयुद्धं क्षात्रधर्म कथ कुरुत दुर्जना ॥८ इति वर्त्तते क० ग० पु०।

१२।७ श्लोकान्ते उक्तं गीतास्थं श्लोकत्रयमुक्त्वा ब्रह्मकर्म इत्यादि वर्त्तते ख० पु०।

१२।१३ ०ज्ञानपरो० इति मु० पु०।
०शिवभक्त्या० इति मु० पु०।

१२।१४ गडो दण्डः० इति मु० पु०।
०खण्डोखऽण्डः० इति मु० पु०।

१२।१७ ०पूजातिरस्कृतात्। इति क० ख० ग० पु०।

१२।२० तस्य शङ्खौ० इति क० ग० मु० पु०।

१३।३ ०भक्तमुद्धवम्। इति मु० पु०।

१३।४ शैलकृष्णा० इति मु० पु०।
०गोपीगलै० इति० मु० पु०।

१३।५ ०यशोदाकरेणैव भोः। इति क० ख० ग० प०।

१३।६ ०सखिभ्यः शिशुभ्यः शुभं० इति मु० पु०।
०पृथक् च। इति मु० पु०।
गोपिकानां सुतेभ्य० इति मु० पु०।

१३।८ ०जगन्मोहिनी। इति मु० पु०।
०धिमासा मदुक्तैः० इति मु० पु०।

१३।९ गोपालाः सुदामा० इति मु० पु०।
०सुखं मित्रव० इति मु० पु०।
०ताः कथं० इति ख० पु०।
०बलात्ताः कथं० इति० क० ग० पु०।

१३।१२ ०गतोऽहं स तं रथं० इति मु० पु०।
०दूघशिटकं वै। इति मु० पु०।

१३।१६ ०यत्र यत्र० इति मु० पु०।

१३।१७ ०शीलरूपा० इति ख० पु०।
०शीलरूपा गणौ युताः। इति क० ग० पु०।

१३।१८ हेमतुल्या हेमश्रृङ्ग्यो० इति मु० पु० ।

१३।२० ०लङ्घद्विर्गौ० इति० मु० पु० ।

०गोपगणेषु० इति० मु० पु० ।

१३।२५ ०मण्डलीविभ्रत्० इति मु० पु० ।

१३।३२ सर्वा धिय० कृष्णामृते० इति मु० पु० ।

१३।३४ ०यया हि यः । इति क० ख० ग० मु० पु० ।

१४।६ ०मे परिशूरनन्दनः० इति क० ख० ग० पु० ।

१४।१५ ०बर्हणो सद्युत्कण्ठ० इति मु० पु० ।

१४।१८ ०हरिणीव विह्वले ॥ इति ख० पु० ।

१४।२० ०केलिर्वने वने ॥ इति मु० पु० ।

१४।२२ ०ययौ गत्वा दिगन्तरम् ॥ इति क० ग० पु० ।

१४।२६ ०चरितं परम् ॥ इति मु० पु० ।

१४।३० सत्प्राङ्गणा० इति क० ख० ग० पु० ।

०हारश्च वीथी० इति क० ख० ग० पु० ।

१४।३२ उद्धव उवाच इति नास्ति क० ग० पु० ।

१४।३४ ०शाश्वती युवयो० इति मु० पु० ।

१४।५० ०पपात ह ॥ इति मु० पु० ।

१५।३ ०मेथ्यां नेत्रं० इति मु० पु० ।

१५।४ ०चलद्धारभुज० इति मु० पु० ।

०कङ्कणकङ्कणाः । इति ख० मु० पु० ।

१५।५ ०चित्रवर्णौ० इति मु० पु० ।

१५।६ ०यत्र यत्र० इति ख० मु० पु० ।

०रममाणा० इति० मु० पु० ।

१५।१६ ०स्फुरास्फुर० इति ख० मु० पु० ।

कृता चलच्चारु० इति क० ग० पु० ।

१५।२० श्लोकोत्तरार्द्धः पतितः ग० पु० ।

१५।२३ उद्धव उवाच इति नास्ति ग० पु० ।
श्लोकपूर्वार्द्धः पतितः ग० पु० ।
१५।२५ ०ज्ञानमिति स्मृतिः० इति क० ख० ग० पु० ।
१५।२६ ०वासुकौ ॥ इति क० ग० मु० पु० ।
१५।३२ श्लोकोत्तरार्द्धं नास्ति ग० पु० ।
१५।३३ नास्ति ग० पु० ।
०देवलक्षणा । इति मु० पु० ।
१५।३४ नास्ति ग० पु० ।
०त्वन्तु कृति० इति क० मु० पु० ।
१५।३५ ०परिविप्रतिष्ठिता ॥ इति मु० पु० ।
१५।३६ श्लोकोत्तरार्द्धे ०हिरण्मयी परा ॥ इत्येतन्मात्रं वर्त्तते ग० पु० ।
०सहा त्वं हि० इति मु० पु० ।
१५।३६ अद्यैव० इति मु० पु० ।
याम्यां० इति मु० पु० ।

१६।१ ०शिरो नेत्रं तथाच हृत् । इति क० ख० ग० पु० ।
१६।६ ०सस्नात्वा० इति मु० पु० ।
१६।८ श्लोकान्तिमः पादः नास्ति ख० पु० ।
१६।१० श्लोकस्याद्य पादः नास्ति ख० पु० ।
१६।११ नास्ति ग० पु० ।
०हृत्सुशीतलं० इति मु० पु० ।
१६।१२ ०मोहघनं० इति मु० पु० ।
१६।१७ नास्ति क० ख० ग० पु० ।
१६।२४ नास्ति ख० पु० ।
१६।२७ यावज्जयोमध्य० इति मु० पु० ।
०मध्यगतस्य० इति मु० पु० ।
०स्वकर्मरूपं० इति मु० पु० ।
श्लोकोत्तरार्द्धं नास्ति मु० पु० ।
०स्तथा तेषुमपश्य० इति ख० पु० ।
१६।२८ ०दूरेऽस्मि तत्त्वतो० इति क० ख० ग० पु० ।

१७।३ द्वारपालिका ऊचुरित्यादि श्लोकान्तं यावत् नास्ति ग० पु० ।

१७।४ शृङ्गारप्रकरेत्यादि श्लोकान्त यावत् नास्ति ग० पु० ।

१७।६ ०विद्धाङ्गो विद्वान् वा० इति मु० पु० ।

१७।८ शैलौकीभिस्तु० इति ख० पु० ।

१७।६ कुञ्जविधायिकेत्यादि श्लोकान्तं यावत् नास्ति ग० पु० ।

१७।१३ ०पुराद्यद्य समान० इति अस्पष्टं किञ्चित् लिखितं क० ख० ग० पु० ।

१७।१४ ०नचैवोद्भव० इति मु० पु० ।
०हरिं स्थिता० इति मु० पु० ।
०ललनावियोगे० इति मु० पु० ।
०योगिवर्गेण० इति मु० पु० ।

१७।२५ ०रासमण्डन० इति मु० पु० ।

१७।३१ ०क्रोधाद् गुणा० इति मु० पु० ।
०क्रुद्धा गुणा० इति ख० पु० ।

१७।३२ श्लोकोऽयं नास्ति ग० पु० ।
श्लोकादूनन्तरं च कौशला ऊचूरित्यपि नास्ति ग० पु० ।

१७।३५ एवं वरं० इति मु० पु० ।
०कृपा कृता ।। इति क० ख० ग० पु० ।
श्लोकोऽयं नास्ति ग० पु० ।

१७।३६ नागेन्द्रकन्येत्यादि श्लोकान्तं यावत् नास्ति मु० पु० ।
अयञ्च १८।२ श्लोकात्परं वर्त्तते मु० पु० ।

१८।१ ०संजनीशरोभूत्वा० इति क० ख० ग० पु० ।
०मंजनीश्वरो भूत्वा० इति मु० पु० ।

१८।२ श्लोकात्परं १७।३६संख्यकः श्लोकः वर्त्तते मु० पु० ।

१८।४ नास्ति क० ख० ग० पु० ।

१८।५ सर्वेश्वरो बलिमित्यादि अदिव्या ऊचुरित्यन्तं नास्ति क० ख० ग० पु० ।

१८।६ नास्ति ख० मु० पु० ।

१८।१० वृन्दावने छलं० इति क० ग० पु० ।

१८।१३ ०बिभ्रमतामग्रां० इति मु० पु० ।
०माधवं माधेवं० इति क० ख० ग० पु ।
१८।१६ ०वचोभिर्नयनैर्गुणैः इति मु० पु० ।
०वचोनिर्णायनैपुनैः । इति ख० पु० ।
१८।२२ सर्वा० इति नास्ति क० ग० पु० ।
१८।२५ गतभीत्यभिमा० इति मु० पु० ।

१९।४ नास्ति ग० पु० ।
१९।५ कोटिशः कोटिशो गा० इति नास्ति ग० पु० ।
१९।१३ पुरो निधाय० इति मु० पु० ।
१९।१९ ०राजमिश्रितैः० इति मु० पु० ।
१९।२३ ०सुगन्धिं नव० इति मु० पु० ।
१९।२८ ०परस्पर वा बाहुंश्च हस्त० इति क० ख० ग० पु० ।
०स्मितोऽभूत ।। इति क० ख० ग० पु० ।

२०।९ युवाकन्दर्प इति ख० पु० ।
२०।१० प्रसन्ना तस्य० इति ख० पु० ।
२०।१३ ०पुरीनागतः० इति क० ख० ग० पु० ।
२०।१५ ०समानाश्रयागोप्यो० इति मु० पु० ।
२०।१७ ०घृणानुराग. । इति मु० पु० ।
२०।१९ ०तथा वा सर्वदा० इति क० ख० ग० पु० ।
२०।२२ ०रहितोमल० इति मु० पु० ।
२०।२४ यावद्वने मध्य० इति मु० पु० ।
२०।३३ ०स्निग्धकण्डलः । इति मु० पु० ।
२०।३८ ०काञ्चनीलतिका० इति मु० पु० ।
२०।४० भ्रमरध्वनि० इति क० ग० पु० ।
०रुतव्रतम् ।। इति मु० पु० ।
२०।४४ पप्रच्छ वीक्ष्य० इति मु० पु० ।
२०।४७ ०येवाद्य रञ्जयन्तं० इति मु० पु० ।
२०।५५ ०त चाजुहाव० इति मु० पु० ।

२२।३२ ०ऋभोर्वा नात्र० इति मु० पु० ।

श्लोकोत्तरार्द्धमारभ्य अध्याय समाप्तिं यावत् नास्ति ग० पु० ।

२२।४० ०रासं राधिकेशो गोपीनाञ्च० इति क० ख० ग० पु० ।

२३।१ अध्यायादितः ११ श श्लोकप्रथमपादं यावन्नास्ति ग०पु० ।

२३।८ पाहि सन्दर्शनं देहि० इति मु० पु० ।

२३।१३ यन्नास्ति किञ्चिन्० इति क० ख० पु० ।

२३।१५ ०पारमेष्ठ्यादि निष्कामा० इति मु० पु० ।

२३।२० ०मागतो हि जरा० इति मु० पु० ।

०च्छुचा च वः ॥ इति मु० पु० ।

२४।१ ०दत्वा संदर्शनं० इति मु० पु० ।

२४।५ ०माशु समारुह्य० इति ख० पु० ।

२४।८ कौशारवेः पुरे० इति मु० पु० ।

२४।२६ मुष्टिघातं० इति मु० पु० ।

२४।२६ सभूत्याकृष्य च बला० इति मु० पु० ।

०मध्ये तां० इति मु० पु० ।

२४।४६ ग० पु० ५० श्लोक एव द्विर्लिखितः ।

२४।५० ०र्योजन मेव ॥ इति मु० पु० ।

२४।५२ वृद्धकेशी सिद्ध० इति मु० पु० ।

२४।५३ ०वङ्गराजोऽभूत्० इति मु० पु० ।

२४।५६ ०देवं गण्डूक० इति मु० पु० ।

२४।६० ०त्तेन चान्तदेव० इति मु० पु० ।

२४।६१ ऊर्ध्वस्थमेक० इति क० ख० ग० पु० ।

ऊर्ध्वास्य मोक० इति मु० पु० ।

०हृदयस्थं स्वं० इति मु० पु० ।

२४।६२ ०जहारस्तदा० इति क० ख० पु० ।

०मूर्त्तिं परमसुन्दराम् ॥ इति क० ख० ग० पु०।

२४।६४ माण्डूक उवाच इति नास्ति मु० पु०।

२४।६६ ०कीर्त्तं राधिकायाः कलौ० इति मु० पु०।

२४।६९ ०परमाचार्य० इति क० ख० ग० पु०।

२४।७० यथोपदेशो० इति क० ग० पु०।

०तथा ते कथया० इति ख० पु०।

०संहितामयम्॥ इति ख० पु०।

२४।७२ उद्धवे चैव० इति क० ख० ग० पु०।

०एव चरद् विभुः॥ इति क० ख० ग० पु०।

२४।७४ ०सुचचार० इति क० ख० ग० पु०।

०पार्श्वतः॥ इति क० ख० ग० पु०।

२४।७७ मदाधिकारं सर्वत्र० इति क० ख० ग० पु०।

२४।७८ बदरीस्थं सपरिकरं० इति मु० पु०।

२४।८० श्रीकृष्णस्यैव पौत्रेपु० इति मु० पु०।

२४।८२ ०शत्रुहर्णां० इति मु० पु०।

२४।८४ ०प्रसादाद् विप्रर्षे० इति मु० पु०।

तद्द्वारा सर्वयज्ञस्य० इति क० ख० ग० पु०।

२४।८५ यज्ञसंस्कार० इति क० ख० ग० पु०।

०महाराजो ग्रामाणा० इति मु० पु०।

२४।८७ ०गो महागज० इति क० ग० मु० पु०।

२४।८८ तत्तस्मात् तत्स्थलात्० इति मु० पु०।

२४।८९ ०सामग्री साधनैः० इति मु० पु०।

२४।९१ ०कान्तिरूपेण० इति मु० पु०।

०भवरोगविनाशिनी॥ इति क० ख० ग० पु०।

२४।९२ श्लोकपूर्वार्द्धे व्यत्ययेन वर्त्तते क० ख० ग० पु०।

'तत्र भागवती' इत्यादि नास्ति मु० पु०।

२४।९४ तपस्तप्त मयाप्येतत्तस्या० इति क० ख० ग० पु० ।
एव देवं वर० इति मु० पु० ।
२४।९६ ०दानरतोऽभवत्॥ इति मु० पु० ।
२४।९७ द्विपसहस्रं० इति मु० पु० ।
२४।१०० ०ब्रुवन्तु मां सर्वे० इति मु० पु० ।
२४।१०१ ०यदापद्गा युक्ता० इति मु० पु० ।
०भवाम च तवा० इति मु० पु० ।
२४।१०२ रक्षिता स्या कलौ० इति मु० पु० ।
२४।१०३ अत्र स्थले वरं नीतं० इति ख० पु० ।
अत्र स्थलं वरं नीतं० इति क० ग० पु० ।
२४।१०४ यस्यां स्नास्यन्ति० इति क० ख० ग० पु० ।
२४।१०६ ०विष्णुपदे जले ॥ इति क० ख० ग० पु० ।

२५।६ ०भक्त्यर्थान्मन्त्रतां व्रजेत्॥ इति मु० पु० ।

२५।१० ०देवी दुर्गति० इति मु०पु० ।
२५।१६ ०न्नृपराज चत्वरं० इति क० ख० ग० पु० ।
२५।१७ ०श्रीकृष्णादास्यं प्रकरोति नूनम्॥ इति मु० पु० ।
२५।१९ ०रामो त्नय० इति मु० पु० ।
२५।२१ प्रापुः पुरो वै० इति मु० पु० ।
२५।२२ ०मन्दिरमास्थाय० इति मु० पु० ।
२५।२३ ०कर्णाधारगम्॥ इति क० ख० ग० पु० ।
२५।२६ ०तुलस्यामलगन्धज० इति मु० पु० ।
२५।२८ ०धातकी त्रैलोक्य० इति मु० पु० ।
२५।३० एकैकमेतेषु विमुक्तियः॥ इति वर्त्तते ग० पु० ।
२५।३१ नास्ति ग० पु० ।
२५।३२ ०भवन्त्यलं यां शृणुतेऽपि मुक्तयः॥ इति क० ख० पु० ।
श्लोकपूर्वार्द्धः नास्ति ग० पु० ।
२५।३३ ०मौञ्जीव्रतमत्युदारै० इति मु० पु० ।

श्रीगणेशाय नमः ।

# गर्गसंहिता

## ( द्वारकाखण्डः )

कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ १

बहुलाश्व उवाच

श्रुतं तव मुखाद् ब्रह्मन् मथुराखण्डमद्भुतम् ।
वद मां द्वारकाखण्डं श्रीकृष्णचरितामृतम् ॥ २
विवाहाः कति पुत्राश्च कति पौत्रा रमापतेः ।
सर्वं वद महाबुद्धे द्वारकावासकारणम् ॥ ३

नारद उवाच

अस्तिप्राप्ती महिष्यौ द्वे मृते कंसे महाबले ।
जरासन्धगृहं दुःखाज्जग्मतुर्मैथिलेश्वर ॥ ४
तन्मुखात् कंसमरणं श्रुत्वा क्रुद्धो जरासुतः ।
अयादवीं महीं कर्तुमुद्यतोऽभून्महाबलः ॥ ५
अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संवृतः ।
रम्यां मधुपुरीं राजन् आययौ बलवान्नृपः ॥ ६
भयातुरां पुरीं वीक्ष्य तत्सेनां सिन्धुनादिनीम् ।
सभायां भगवान् साक्षाद् बलदेवमुवाच ह ॥ ७
सर्वं चास्य बलं राम हन्तव्यं वै न संशयः ।
मागधस्तु न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥ ८

जरासन्धनिमित्तेन भारं वै भूभुजां भुवः ।
सर्वञ्चात्र हनिष्यामि करिष्यामि प्रियं सताम् ॥ ६
एवं वदति कृष्णे वै वैकुण्ठाच्च रथौ शुभौ ।
अभूतामागतौ राजन् सर्वेषां पश्यताञ्च ह ॥ १०
समारुह्य रथौ सद्यो रामकृष्णौ महाबलौ ।
यादवानां बलैः सूक्ष्मैस्त्वरं निर्जग्मतुः पुरात् ॥ ११
यादवानां मागधानां पश्यद्भिर्दिविजैर्दिवि ।
बभूव तुमुलं युद्धमद्भुतं रोमहर्षणम् ॥ १२
अक्षौहिणीभिर्दशभी रथारूढो महाबलः ।
श्रीकृष्णस्य पुरः पूर्वं युयुधे मागधेश्वरः ॥ १३
पञ्चभिश्चाक्षौहिणीभिर्धार्तराष्ट्रः सुयोधनः ।
युयोध यादवैः सार्द्धं जरासन्धसहायकृत् ॥ १४
पञ्चभिश्च तथा राजन् विन्ध्यदेशाधिपो बली ।
तिसृभिश्च महायुद्धे वङ्गनाथो महाबलः ॥ १५
एवमन्येऽपि राजानो जरासन्धवशानुगाः ।
प्राणैः सहायं कुर्वन्तो जरासन्धस्य मैथिल ॥ १६
बाणान्धकारे सञ्जाते शत्रुसेनासमाकुले ।
टङ्कारं शार्ङ्गधनुषः शार्ङ्गधन्वा चकार ह ॥ १७
ननाद तेन ब्रह्माण्डं सप्तलोकैर्बिलैः सह ।
विचेलुर्दिग्गजास्तारा पजदू भूखण्डमण्डलम् ॥ १८
तदैव बधिरीभूत शत्रूणां सैन्यमण्डलम् ।
उत्पतन्तो हया युद्धाद् गजास्तु विमुखास्ततः ॥ १६
दुद्राव तद्बलं सर्वं टङ्काराद्भयविह्वलम् ।
प्रतीपमेत्य गव्यूतिः पुनस्तत्राजगाम ह ॥ २०
एवं शार्ङ्गं समुच्चार्य तडित्पिङ्गस्फुरत्प्रभम् ।
बाणौघैश्छादयामास जरासन्धबलं हरिः ॥ २१

चूर्णीभूता रथा राजन् बाणौघैः शार्ङ्गधन्वनः ।
चूर्णचक्रा निपेतुः क्ष्मां हतसूताश्च नायकाः ॥ २२
द्विधाभूता गजा बाणैश्चलिता गजिभिः सह ।
साश्ववाहास्तथाश्वाश्च बाणैः संछिन्नकन्धराः ॥ २३
तथा वीरा महायुद्धे भिन्नोरश्छिन्नमस्तकाः ।
विशीर्णकवचाः पेतुर्बाणौघैश्छिन्न पाणयः ॥ २४
अधोमुखा ऊर्ध्वमुखाश्छिन्नदेहा नृपात्मजाः ।
रेजू रणाङ्गणे राजन् भाण्डव्यूहा इवाहताः ॥ २५
क्षणमात्रेण तद्युद्धे शतक्रोशविलम्बिता ।
आपगाभून्महादुर्गा रुधिरस्रावसम्भवा ॥ २६
द्वीपग्राहा उष्ट्रखरकबन्धाश्वादिकच्छपा ।
शिशुमाररथा केशशैवाला भुजसर्पिणी ॥ २७
करमीना मौलिरत्नहारकुण्डलशर्करा ।
शस्त्रशुक्तिश्छत्रशङ्खा चामरध्वजसैकता ॥ २८
रथाङ्गावर्तसंयुक्ता सेनाद्वयतटावृता ।
शतयोजनविस्तीर्णा बभौ वैतरणी यथा ॥ २९
प्रमथा भैरवा भूता वेताला योगिनीगणाः ।
अट्टहासं प्रकुर्वन्तो नृत्यन्तो रणमण्डले ॥ ३०
पिबन्तो रुधिरं शश्वत् कपालेन नृपेश्वर ।
हरस्य मुण्डमालार्थं जगृहुस्ते शिरांसि च ॥ ३१
सिंहारूढा भद्रकाली डाकिनी शतसंवृता ।
पिबन्ती रुधिरं चोष्णं साट्टहासं चकार ह ॥ ३२
विद्याधर्यस्त्वम्बरस्था गन्धर्व्योऽप्सरसस्तथा ।
क्षात्रधर्मस्थितान् वीरान् वव्रिरे देवरूपिणः ॥ ३३
गृहीत्वा तान् कलिरभूत्तासां पत्यर्थमम्बरे ।
ममानुरूपा ते नैव इति तद्गतचेतसाम् ॥ ३४

प्रेषयामास सहसा गोपीचन्दनकीर्त्तिवित् ।
एवं ते कथितं राजन् गोपीचन्दनकं यशः ॥ ४५
गोपीचन्दनमाहात्म्यं यः शृणोति नरोत्तमः ।
स याति परमं धाम श्रीकृष्णस्य महात्मनः ॥ ४६

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्व-
संवादे कपिटङ्कनृगगोपीभूमिमाहात्म्यं नाम
पञ्चदशोऽध्यायः ॥ १५

नारद उवाच

सिद्धाश्रमस्य माहात्म्यं शृणु राजन् महामते ।
यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ १
यत्स्पर्शनाद्धरेः साक्षान्न वियोगो भवेत् क्वचित् ।
तञ्च सिद्धाश्रमं नाम वदन्तीह पुराविदः ॥ २
दर्शनाद् यस्य सालोक्यं सामीप्यं स्पर्शनात्तथा ।
सारूप्यं स्नानतो याति सायुज्यं तन्निवासतः ॥ ३
तत्तीर्थस्यापि माहात्म्यं श्रुत्वा चन्द्राननामुखात् ।
राधा स्नातुं मनश्चक्रे कृष्णविश्लेषविह्वला ॥ ४
श्रीसिद्धाश्रमयात्रायां सूर्यपर्वणि माधवे ।
राधा गन्तुं मनश्चक्र उत्थाय कदलीवनात् ॥ ५
गोपीनां शतयूथेन सर्वगोपगणैः सह ।
शतवर्षे व्यतीते तु श्रीदाम्नः शापकारणात् ॥ ६
श्रीराधा शिविकारूढा छत्रचामरवीजिता ।
आनर्त्तेषु महातीर्थं ययौ सिद्धाश्रमं सती ॥ ७
तत्रैव भगवान् साक्षाद् यादवैः परिमण्डितः ।
स्त्रीणां षोडशसाहस्रैर्यात्रार्थं चाययौ नृप ॥ ८
बलिष्ठा ये च गोपालाः कोटिशः शस्त्रपाणयः ।
सिद्धाश्रमं ते जुगुपुः सर्वतो राधिकाज्ञया ॥ ९
शतयूथास्तथा गोप्यो वेत्रहस्ता महाबलाः ।
सिद्धाश्रमे च विधिवत् स्नान्तीं राधां सिषेविरे ॥ १०
द्वारकावासिनां तेषां स्थितानां स्नानमिच्छताम् ।
शस्त्रवेत्रैस्ताडितानां विविशुर्भगवत्स्त्रियः ॥ ११

केयं स्नातीति पप्रच्छुर्यस्या वैभवमद्भुतम् ।
यद्गौरवात् त्रसन्तीह सर्वयादवपुङ्गवाः ॥ १२
अहो कस्य प्रिया चेयं का नाम्नी कुत्र वासिनी ।
त्वं सर्वज्ञो हि भगवान् वद नो देवकीसुत ॥ १३

भगवानुवाच

वृषभानुसुता साक्षाद्राधेयं कीर्तिनन्दिनी ।
व्रजेश्वरी मद्दयिता गोपिकाधीश्वरी वरा ॥ १४
स्नातुं सिद्धाश्रमं प्राप्ता व्रजाद् गोपीगणैः सह ।
यद्गौरवात् त्रसन्त्येते तस्या वैभवमद्भुतम् ॥ १५
श्रीकृष्णस्य वचः श्रुत्वा सत्यभामाथ मानिनी ।
शनैः प्राह सपत्नीनां रूपयौवनगर्विता ॥ १६
किं नु राधा रूपवती नाहं रूपवती किमु ।
बहुभिर्याचिता पूर्वं रूपौदार्यगुणान्विता ॥ १७
मद्रूपकारणात् सख्यः शतधन्वा मृतोऽभवत् ।
अक्रूरः कृतवर्मा च पुरात्तौ द्वौ पलायितौ ॥ १८
दिने दिने स्वर्णभारानष्टौ स सृजति स्वतः ।
दुर्भिक्षमार्यरिष्टानि सर्वाधिव्याधयोऽशुभाः ॥ १९
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ।
मत्पित्रा पारिबर्हेऽपि दत्तः साक्षात् स्यमन्तकः ॥ २०
तेन जातं मद्गृहेऽपि सर्वं वैभवमद्भुतम् ।
प्रेम्णा परेण श्रीकृष्णगरुडोपरिगामिनी ॥ २१
भौमासुरमहायुद्धं दृष्टं प्राग्ज्योतिषं पुरम् ।
ममापि कृपया यूयं तत्पुराच्च समागताः ॥ २२
प्राप्ताः श्रीकृष्णपत्नीत्वं सर्वा एव न संशयः ।
मद्गौरवाच्च शक्राय छत्रं दत्तमनेन वै ॥ २३

कुण्डले देवमात्रे च दत्ते वै मत् प्रयेच्छया ।
ऐरावतभवा नागा भौमासुरसमृद्धयः ।। २४
मदिच्छया समानीताः श्रीकृष्णेन महात्मना ।
मत्कारणान्महावैरं शक्रेऽपि कृतवान् हरिः ।। २५
मद्द्वारे वर्तते नित्यं वृक्षेन्द्रः पारिजातकः ।
पतिव्रत्येनैव मया श्रीकृष्णोऽयं वशीकृतः ।। २६
सर्वोपस्करसंयुक्तो नारदाय समर्पितः ।
मत्समानं न कस्यास्तु गौरवं वैभवं तथा ।। २७
रूपौदार्यं न कस्यास्तु राधायाः किमु वर्णनम् ।
यद्रूपोपरि चैद्याद्या अनेन युयुधुर्युधि ।। २८
हे सुभ्रु रुक्मिणी सा त्वं कथं रूपवती नहि ।
सा गोपकन्यका सख्यो यूयं वै राजकन्यकाः ।
धन्या मान्याश्च सर्वा वै यूय मानवतीवराः ।। २९
एवन्तु सत्यभामायां वदन्त्यां मैथिलेश्वर ।
भूत्वा मानवतीः सर्वा रुक्मिण्याद्याः स्त्रियो वराः ।। ३०
कुलकौशलशीलार्थरूपयौवनगर्विताः ।
श्रीकृष्णं मानदं प्राहुरष्टपट्टमहास्त्रियः ॥ ३१

राज्ञ्य ऊचुः

श्रुतं तव मुखात् पूर्वं राधारूपं परं स्मृतम् ।
यस्यां रक्तः सदा त्वं वै त्वयि रक्ता च या सदा ।। ३२
तां राधां द्रष्टुमिच्छामस्त्वत्प्रियां व्रजवासिनीम् ।
त्वद्वियोगेन संखिन्नां ज्ञातुं चात्र समागताम् ।। ३३

नारद उवाच

तथास्तु चोक्त्वा श्रीकृष्ण. पट्टस्त्रीपरिवेष्टितः ।
षोडशस्त्रीसहस्राढ्यो द्रष्टुं राधां जगाम ह ॥ ३४

श्रीहेमशिबिरे रम्ये पताकाध्वजमण्डिते ।
चन्द्रमण्डलशोभाढ्ये विताननतनिते शुभे ॥ ३५
मुक्ताजवनिका यत्र यत्रोपस्तरणं शुभम् ।
मालतीमकरन्दाढ्यं सर्वतो गन्धसङ्कुलम् ॥ ३६
तेन भृङ्गावली चक्रे कलं कोलाहलं परम् ।
तत्र राधा पट्टराज्ञी श्रीकृष्णहृतमानसा ॥ ३७
हंसाभैर्व्यजनैर्दिव्यैर्वीज्यमाना सखीजनैः ।
छत्रदोलाधरैस्तत्र व्रजद्भिस्ताभितस्ततः ॥ ३८
बालार्ककुण्डलधरा विद्युद्धारमनोहरा ।
कोटिचन्द्रप्रतीकाशा तन्वी कोमलविग्रहा ॥ ३९
आगुल्फस्मृक्षितिजपुष्पभूमिं मनोहराम् ।
शनैः शनैः पादपद्मं धारयन्त्यतिकोमलम् ॥ ४०
दूरात् तां राधिकां प्रेक्ष्य कृष्णपत्न्यः सहस्रशः ।
जग्मुर्मूर्च्छां महाराज तद्रूपेणातिमोहिताः ॥ ४१
तत्तेजसा हतरुचः सूर्यात् तारागणा यथा ।
गतरूपाभिमानास्ता ऊचुः सर्वाः परस्परम् ॥ ४२
अहो एतादृशं रूपं त्रिलोक्यां नहि चाद्भुतम् ।
श्रुतं यथा तथा दृष्टमद्वितीयं मनोहरम् ॥ ४३
एवं वदन्त्यस्तां प्राप्ताः श्रीकृष्णस्य पुरःसराः ।
गोपीनां राजपुत्रीणां नेत्राणि परिरेभिरे ।
परमानन्दसञ्जातप्रेमोद्रेकाः पुनः पुनः ॥ ४४

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्वसंवादे
सिद्धाश्रममाहात्म्ये राधारूपदर्शनं नाम
षोडशोऽध्यायः ॥ १६

नारद उवाच

श्रीकृष्णमागतं वीक्ष्य पट्टराज्ञीसमन्वितम् ।
तदा जयजयारावं चक्रुर्गोप्योऽतिहर्षिताः ॥ १
सहसा श्रीहरिं राधा परिक्रम्य कृताञ्जलिः ।
पद्माभाभ्यान्तु नेत्राभ्यामानन्दाश्रूणि मुञ्चती ॥ २
स्यमन्तकखचित्पादं चिन्तामणिखचित्तरम् ।
पद्मरागलसन्मध्यं चन्द्रमण्डलवर्तुलम् ॥ ३
कौस्तुभैः प्रखचितपृष्ठं कुम्भमण्डलमण्डितम् ।
दत्त्वा सिंहासनं तस्मै प्राह प्रहसितानना ॥ ४
अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
अद्य मे सफलो धर्मो हरे त्वय्यागते सति ॥ ५
धन्यं सिद्धाश्रमस्नानं सफलीभूतमद्भुतम् ।
मयापि न कृता भक्तिस्तव भक्तसहायिनः ॥ ६
बहुधश्च सहाया मे त्वया देव कृता भुवि ।
कंसोऽपि लोकविजयी येन भीतो बभूव ह ॥ ७
स मारितो मद्वचनाच्छङ्खचूडस्त्वया हरे ।
मत्प्रेम्णापि त्वया देव वैभवं दर्शितं व्रजे ॥ ८
शक्रस्य मानभङ्गोऽपि कृतो देव त्वया बलात् ।
मत्कारणाद् व्रजं रक्षन् धृत्वा गोवर्द्धनाचलम् ॥ ९
यथेच्छालिङ्गितो रासे गोपीभिस्त्वं वशीकृतः ।
इदं ते चरितं देव नरलोकविडम्बनम् ॥ १०

नारद उवाच

एवं वदन्ती सा राधा त्वरं चन्द्राननाज्ञया ।
सादरेण हरेः पत्नीर्वीक्ष्य ता गौरवं ददौ ॥ ११

मैष्मीं जाम्बवतीं भामां सत्यां भद्राञ्च लक्ष्मणाम् ।
कालिन्दीं मित्रविन्दाञ्च मिलित्वा सा परस्परम् ॥ १२
षोडशस्त्रीसहस्रञ्च रोहिणीमुखमेव च ।
प्रेमानन्दमयी दोर्भ्यां परिरेभे मुदान्विता ॥ १३

राधोवाच

चन्द्रो यथैको बहवश्चकोराः
सूर्यो यथैको बहवो दृशः स्युः ।
श्रीकृष्णचन्द्रो भगवांस्तथैको
भक्ता भगिन्यो बहवो वयञ्च ॥ १४
पद्मप्रभावं मधुपो यथा हि
रत्नप्रभावं किल तत्परीक्षकः ।
विद्याप्रभावञ्च यथा हि विद्वान्
काव्यप्रभावञ्च यथा कवीन्द्रः ॥ १५
यथा सहस्रेषु जनेषु सत्सु
रसप्रभावं रसिकस्तथा हि ।
जानाति तत्त्वेन नरेन्द्रपुत्र्यः
कृष्णप्रभावं भुवि कृष्णभक्तः ॥ १६

नारद उवाच

राधावाक्यं तदा श्रुत्वा रुक्मिणी भीष्मनन्दिनी ।
सपत्नीसहिता प्राह राधां कमललोचनाम् ॥ १७

रुक्मिण्युवाच

धन्यासि राधे वृषभानुपुत्रि
त्वद्भक्तिभावेन वशीकृतोऽयम् ।
वदत्यलं यस्य कथां त्रिलोकी
स एव वार्तां वदति त्वदीयाम् ॥ १८

श्रुतं यथा ते हरिभावलक्षणं
तथा हि दृष्टं नहि चित्रमेव हि ।
गच्छाशु चास्मच्छिबिराणि यत्र हि
त्वां नेतुमत्रागतवत्य आदृताः ॥ १६

नारद उवाच

एवमुक्त्वा भीष्मसुता राधां कीर्तिसुतां तदा ।
समानीय स्वशिबिरे सादरेण महात्मना ॥ २०
शिबिरे सर्वतोभद्रे पद्मकिञ्जल्कवासिते ।
हैमे शिरीषमृदुले पर्यङ्के सोपबर्हणे ॥ २१
सुखं निवासयामास वासःस्रङ्मण्डनादिभिः ।
सम्पूज्य विधिवद्रात्रौ सपत्नीसहिता सती ॥ २२
गोपीनां शतयूथञ्च सम्पूज्य च पृथक् पृथक् ।
वार्तालापान् बहुविधान् कृत्वा कृष्णप्रियास्ततः ॥ २३
शाययित्वाथ तां जग्मुः स्वं स्वं वै शिबिरं मुदा ॥ २४
कृष्णपार्श्वं गता भैष्मी दृष्ट्वा जाग्रदुपस्थितम् ।
कथं न शेषे भो स्वामिन् इति कृष्णमुवाच ह ॥ २५
रुक्मिणीवचनं श्रुत्वा भगवान् वृजिनार्दनः ।
तूष्णीं भूत्वा क्षणं राजन् प्राह प्रहसिताननः ॥ २६

भगवानुवाच

प्रत्युद्गमप्रश्रयणैराश्वासेन व्रजेश्वरी ।
अर्चिता हि त्वया सुभ्रूः प्रसन्ना साभवत् परम् ॥ २७
सा च नित्यं हि पिबति शयनादौ पयः शुभम् ।
पयःपानं तु न कृतमद्य सुभ्रूस्तया किल ॥ २८
तेन निद्रा नयनयोर्न जातास्या महामते ।
तस्मान्ममापि प्रस्वापो न जातो भीष्मकन्यके ॥ २६

नारद उवाच

इति श्रुत्वा त्वरं भैष्मी सपत्नीभिः समन्विता ।
नीत्वा दुग्ध तत्समीपं प्रययौ परमादरात् ॥ ३०
उष्णं दुग्धं सितायुक्तं कचोले हैमने कृतम् ।
अपाययत् परं प्रीत्या राधां भीष्मकनन्दिनी ॥ ३१
एवमभ्यर्च्य विधिवद्दत्त्वा ताम्बूलवीटिकाम् ।
सत्यभामादिभिः शश्वत् सपत्नीभिः समन्विता ॥ ३२
आगत्य कृष्णसामीप्यं वदन्ती स्वकृतं शुभम् ।
भेजे श्रीरुक्मिणी साक्षाच्छ्रीकृष्णपदपङ्कजम् ॥ ३३
संलालयन्ती सततं कोमलैः करपल्लवैः ।
कृष्णपादतलोच्छालान् वीक्ष्य सा विस्मिताभवत् ॥ ३४
उच्छालकाः कथं जातास्तव पादतले प्रभो ।
अद्यैव भूता भगवन्न वेद्म्यत्र हि कारणम् ॥ ३५
षोडश स्त्रीसहस्राणां शृण्वन्तीनां हरिः स्वयम् ।
राधाभक्तिप्रकाशार्थं स हसन् प्राह रुक्मिणीम् ॥ ३६

भगवानुवाच

श्रीराधिकाया हृदयारविन्दे
पादारविन्दं हि विराजते मे ।
अहर्निशं प्रश्रयपाशबद्धं
लवं लवार्द्धं न चलत्यतीव ॥ ३७
अद्योष्णदुग्धप्रतिपानतोऽङ्घ्रा
वुच्छालकास्तेन ममोच्छलन्ति ।
मन्दोष्णमेवं नहि दत्तमस्यै
युष्माभिरुष्णन्तु पयः प्रदत्तम् ॥ ३८

नारद उवाच

श्रीकृष्णस्य वचः श्रुत्वा रुक्मिण्याद्याः स्त्रियो वराः ।
प्रेक्षमाणा विसृज्याथ विसिष्मुः सर्वतो नृप ॥ ३६
श्रीराधायाः परा प्रीतिर्माधवे मधुसूदने ।
तत्समाना नचैकैषा अद्वितीया महीतले ॥ ४०

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्वसंवादे
सिद्धाश्रमे राधाकृष्णसमागमोराधाप्रेमप्रकाशो नाम
सप्तदशोऽध्यायः ॥ १७

नारद उवाच

श्रीराधायां परां प्रीतिं ज्ञात्वा गोपीगणेषु च ।
ऊचुर्हरिं राजपुत्र्यस्तद्रासप्रेक्षणोत्सुकाः ॥ १

पट्टराज्ञ्य ऊचुः

धन्या गोप्यस्तु ते भक्ताः प्रेमलक्षणसंयुताः ।
याः प्राप्ता रासरङ्गे वै तासां किं वर्ण्यते तपः ॥ २
वृन्दावने कृतो रासो विधिना येन माधव ।
तं विधिं द्रष्टुमिच्छामो यदि त्वं मन्यसे प्रभो ॥ ३
त्वञ्चात्रैव तथा राधा गोप्यः सर्वा व्रजाङ्गनाः ।
वयञ्चात्रैव देवेश रासो योग्यो भवेदिह ॥ ४
पूर्णं कुरु जगन्नाथ अस्माकन्तु मनोरथम् ।
कृतो मनोरथोऽन्योऽपि रासक्रीडां विना हरे ॥ ५
इति तासां वचः श्रुत्वा भगवान् प्रहसन्निव ।
प्राह ताः प्रेमसंयुक्तो गीर्भिः सम्मोहयन्निव ॥ ६

भगवानुवाच

रासेश्वर्यास्तु राधाया मनश्चेद्रन्तुमङ्गनाः ।
तदा रासो भवेदत्र भवतीभिस्तु पृच्छ्यताम् ॥ ७
इति श्रुत्वा वचस्तस्य रुक्मिण्याद्या नृपात्मजाः ।
राधामेत्य परं प्रेम्णा प्राहुः प्रहसिताननाः ॥ ८

राज्ञ्य ऊचुः

रम्भोरु चन्द्रवदने व्रजसुन्दरीशे
रासेश्वरि प्रियतमे सखि शीलरूपे ।
राधे सुकीर्ति कुलकीर्तिकरे शुभाङ्गे
त्वां प्रष्टुमागतवतीः सकला वयं स्म ॥ ९

रासेश्वरोऽपि किल चात्र रसप्रदायी
रासेश्वरी त्वमपि गोपवराङ्गनाश्च।
एवं वयं स्म इति सर्वविधौ रसार्थे
रासं कुरु प्रियतमेन तथा प्रियं नः॥ १०

राधोवाच

रासेश्वरस्य परमस्य सतां कृपालो
रन्तु मनो यदि भवेत्तु तदात्र रासः।
शुश्रूषया परमया परया च भक्त्या
सम्पूज्य तं किल वशीकुरुत प्रियं तम्॥ ११

नारद उवाच

राधाया वचनं श्रुत्वा श्रीकृष्णोक्तं तथावदन्।
तथास्तु चोक्त्वा सा राधा प्रसन्नाभून्महामनाः॥ १२
माधवे पूर्णिमायान्तु पुण्ये सिद्धाश्रमे शुभे।
प्रदोषकाले चन्द्राभे रासारम्भो बभूव ह॥ १३
रासेश्वरस्य रासार्थे रासेश्वर्या समन्वितः।
रराज रासे रसिको यथा रत्या रतीश्वरः॥ १४
यावत्यो गोपिकाः सर्वा यावत्यो राजकन्यकाः।
तावद्रूपधरो रेजे एकः कृष्णो द्वयोर्द्वयोः॥ १५
तालवेणुमृदङ्गानां कलकण्ठैः सखीजनैः।
कलनूपुरकाञ्चीनां मिश्रशब्दो महानभूत्॥ १६
कोटिकन्दर्पलावण्यः स्रग्वी कुण्डलमण्डितः।
पीताम्बरधरो राजन् किरीटकटकाङ्गदः॥ १७
रासेश्वर्या समं गायन् रासे रासेश्वरः स्वयम्।
स्त्रीगणैः सहितो राजंश्चन्द्रस्तारागणैर्यथा॥ १८
एवं सर्वा निशा राजन् क्षणवद्रासमण्डले।
व्यतीताभून्महाराज महानन्दमयी शुभा॥ १९

श्रीरासमण्डलं दृष्ट्वा रुक्मिण्याद्याः स्त्रियो वराः ।
जग्मुस्ताः परमानन्दं सर्वाः पूर्णमनोरथाः ॥ २०
परिपूर्णतमं साक्षाच्छ्रीकृष्णं पुरुषोत्तमम् ।
रासान्ते रुक्मिणीमुख्याः प्राहुः प्रेमपरायणाः ॥ २१

राज्ञ्य ऊचुः

दृष्ट्वा त्वद्रूपमाधुर्यं रासरङ्गे मनोहरे ।
गतं मनो नः स्वानन्दं ब्रह्मानन्दं यथा मुनिः ॥ २२
एतादृशोऽपि रासोऽन्यो न भूतो न भविष्यति ।
शतयूथस्तु गोपीनामत्र माधव वर्तते ॥ २३
पत्न्यः षोडशसाहस्रं सखीभिः सहिता वयम् ।
सखीकोटियुताश्चात्र अष्ट पट्टमहास्त्रियः ॥ २४
वृन्दावनेऽपि नैतादृक् भूतो वा माधवेश्वर ।

नारद उवाच

एवं कृताभिमानानां राज्ञीनां प्रहसन् हरिः ।
प्राहेदं पृच्छ्यतां राधा भवतीभिः परस्परम् ॥ २५
सत्यभामादिकाः सर्वाः पृच्छन्ति राधिकां वराम् ।
किञ्चिद्धसन्ती मनसि प्राह राधा परं वचः ॥ २६

राधोवाच

ननु रासः परश्चात्र बहुस्त्रीगणसङ्कुलः ।
पूर्वरासो न स्याद्यस्तु वृन्दावनेऽभवत् ॥ २७
क्व चात्र वृन्दारण्य तद्दिव्यद्रुमलताकुलम् ।
प्रेमभारानतलतं मधुमत्तमधुव्रतम् ॥ २८
पुष्पव्यूहान् वहन्ती या यथोष्णिङ्मुद्रिता शुभा ।
हंसपद्मसमाकीर्णा क्व चात्र यमुना नदी ॥ २९

एवं सिद्धाश्रमे रासं कृत्वा श्रीराधिकेश्वरः ।
नीत्वा गोपीगणान् सर्वान् राधया सहितो हरिः ॥ ४२
सभार्यो भगवान् साक्षाद् द्वारकां प्रविवेश ह ।
कारयामास राधायै मन्दिराणि पराणि च ॥ ४३
निवासयित्वा सुसुखं सर्वास्ताश्च व्रजौकसः ।
इत्थं सिद्धाश्रमकथा मया ते कथिता नृप ॥ ४४
सर्वपापहरा पुण्या सर्वेषाञ्चैव मोक्षदा ॥ ४५

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्व-
संवादे सिद्धाश्रमे रासोत्सवो नाम
अष्टादशोऽध्यायः ॥ १८

नारद उवाच

द्वारावतीमण्डलन्तु शतयोजनविस्तृतम् ।
तस्य प्रदक्षिणा सर्वा योजनानां चतुःशतम् ॥ १
तन्मध्ये कृष्णरचितं दुर्गं द्वादशयोजनम् ।
द्वितीयञ्च बहिर्दुर्गं नवत्या च तदुत्तरैः ।
क्रोशैः सङ्कुटित राजन् श्रीकृष्णेन महात्मना ॥ २
तृतीयञ्च तथा दुर्गं द्व्यूनैश्च द्विशतैर्नृप ।
क्रोशैः-सङ्कुटितं राजन् रत्नप्रासादसंयुतम् ॥ ३
तेषामन्तरदुर्गोऽपि श्रीकृष्णस्य महात्मनः ।
मन्दिराणि विचित्राणि नवलक्षाणि सन्ति हि ॥ ४
तत्र राधामन्दिरस्य द्वारे लीलासरोवरम् ।
सर्वतीर्थोत्तमं राजन् गोलोकाच्च समागतम् ॥ ५
यस्मिन् स्नात्वा नरः पापी व्रती भूत्वा समाहितः ।
अष्टम्यां हेमदानञ्च दत्त्वा नत्वा विधानतः ॥ ६
कोटिजन्मकृतैः पापैर्मुच्यते नात्र संशयः ।
प्राणान्ते त नरं नेतुं गोलोकाच्च महारथः ॥ ७
सहस्रादित्यसङ्काश आगच्छति न संशयः ।
दशकन्दर्पलावण्यो रत्नकुण्डलमण्डितः ॥ ८
स्रग्वी पीताम्बरः श्यामः सहस्रार्कस्फुरद्द्युतिः ।
सहस्रपार्षदैर्युक्तश्चामरान्दोलराजितः ॥ ९
जयध्वनिसमायुक्तो वेणुदुन्दुभिनादितः ।
भूत्वैवं रथमास्थाय गोलोकं यात्यसंशयम् ॥ १०
अथ तीर्थानि चान्यानि शृणु राजन् महामते ।
शतोत्तराणि तत्रैव सहस्राणि च षोडश ॥ ११

अष्टभिः सहितान्येव पत्नीनां भवनानि च ।
तानि प्रदक्षिणीकृत्य नत्वा नत्वा पृथक् पृथक्॥ १२
ज्ञानतीर्थे समाप्लुत्य स्पृशेद्यः पारिजातकम् ।
तस्य ज्ञानञ्च वैराग्यं भक्तिर्भवति तत्क्षणम् ॥ १३
श्रीकृष्णो हृदये तस्य वसेद्धृष्टमनाः सदा ।
समृद्धिसिद्धयः सर्वास्तं भजन्ति निसर्गतः ॥ १४
स मुक्तः स कृतार्थः स्याद्यः पश्येद्धरिमन्दिरम् ।
तत्समो वैष्णवो नास्ति तीर्थञ्च तत्समं नहि ॥ १५
पञ्चयोजनविस्तीर्णाद्भगवन्मन्दिरात्ततः ।
धनुःशते कृष्णकुण्डः कृष्णतेजःसमुद्भवः ॥ १६
यं स्नात्वा कुष्ठतो मुक्तः साम्बो जाम्बवतीसुतः ।
तस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥ १७
तस्मादष्टादशपदे पूर्वस्यां दिशि मैथिल ।
सर्वतीर्थोत्तमं पुण्यं बलभद्रसरो महत् ॥ १८
पृथ्वीप्रदक्षिणां कृत्वा बलदेवो महाबलः ।
यज्ञं यत्र विनिर्माय रेवत्या विरराज ह ॥ १९
तत्र स्नात्वा नरः सद्यो मुच्यते सर्वपातकात् ।
पृथ्वीप्रदक्षिणायाश्च फलं तस्य न दुर्लभम् ॥ २०
भगवन् मन्दिराद् राजन् सहस्रं धनुरग्रतः ।
दक्षिणस्यां महातीर्थं गणनाथस्य वर्तते ॥ २१
अनिर्देशे गते राजन् प्रद्युम्ने स्वसुते तदा ।
गणेशपूजनं यत्र कारयामास रुक्मिणी ॥ २२
यत्र स्नात्वा हेमदानं यो ददाति नृपेश्वर ।
पुत्रप्राप्तिर्भवेत्तस्य वंशस्तस्य विवर्धते ॥ २३
भगवन्मन्दिराद् राजन् दिग्विभागे च पश्चिमे ।
धनुषि द्विशते चास्ते दानतीर्थं परं शुभम् ॥ २४

तत्र श्रीकृष्णचन्द्रस्य नित्यं दानं करोति यः ।
तत्र स्नात्वा नरो राजन् द्विपलं काञ्चनं तथा ॥ २५
चतुर्गुणन्तु रजत पट्टाम्बरशतं तथा ।
तथा सहस्रमौल्यानि नवरत्नानि यानि च ॥ २६
यो ददाति नरश्रेष्ठस्तस्य पुण्यफलं शृणु ।
अश्वमेधसहस्राणि राजसूयशतानि च ॥ २७
दानतीर्थस्य पुण्यस्य कलां नार्हन्ति षोडशीम् ।
बद्रिकाश्रमयात्रायां यत्फलं लभते नरः ॥ २८
तस्माच्छतगुणं पुण्यं दानतीर्थे परात्मनः ।
सैन्धवारण्ययात्रायां मेषस्थे च दिवाकरे ॥ २९
उत्पलावर्त्तयात्रायां वृषस्थे भास्करे सति ।
स्नानं दानं लक्षगुणं भवतीह न संशयः ॥ ३०
तस्मात् कोटिगुण पुण्यं दानतीर्थे विदेहराट् ।
मासमेकञ्च यः स्नानं दानतीर्थे करोति हि ॥ ३१
तस्य जातञ्च यत्पुण्यं चित्रगुप्तो न वेत्ति तत् ।
तस्य तीर्थस्य माहात्म्यं वक्तुं नालं चतुर्मुखः ॥ ३२
सर्वेषां चैव दानानामश्वदानं परं स्मृतम् ।
अश्वदानाद् गजस्यापि गजदानाद् रथस्यच च ॥ ३३
रथदानात् परं राजन् भूमिदानं विशिष्यते ।
भूमिदानादन्नदानं महादानं प्रकथ्यते ॥ ३४
अन्नदानसमं दानं न भूतं न भविष्यति ।
देवर्षिपितृभूतानां तृप्तिरन्नेन जायते ॥ ३५
दानतीर्थे ह्यन्नदानं य करोति महामनाः ।
ऋणत्रयं विमुच्याथ याति विष्णोः परं पदम् ॥ ३६
दशैव मातृके पक्षे राजेन्द्र दश पैतृके ।
प्रियाया दशपक्षे तु पुरुषानुद्धरेन्नरः ॥ ३७

चतुर्भुजा दिव्यरूपा नागारिकृतकेतनाः ।
स्रग्विणः पीतवस्त्रास्ते प्रयान्ति हरिमन्दिरम् ॥ ३८
भगवन्मन्दिराद् राजन्नुत्तरस्यां दिशि श्रुतम् ।
क्रोशार्द्धे नृपशार्दूल मायातीर्थं मनोहरम् ॥ ३९
विराजते यत्र नित्यं दुर्गा दुर्गतिनाशिनी ।
सिंहारूढा भद्रकाली चण्डमुण्डविनाशिनी ॥ ४०
स्यमन्तकं समाहर्तुमृक्षराजबिलं गते ।
पुत्रे च देवकी देवी पूजयामास सत्फलैः ॥ ४१
तदाजगाम प्रियया सर्माणर्भगवान् हरिः ।
तद्दिनात्तत् प्रसिद्धं स्यान्मायातीर्थं फलप्रदम् ॥ ४२
मायातीर्थे च यः स्नात्वा मायां सम्पूज्य मानवः ।
सर्वां मनोरथप्राप्तिं प्राप्नुयान्नात्र संशयः ॥ ४३

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्व-
संवादे प्रथमदुर्गे लीलासरोवरहरिमन्दिरस्नान-
तीर्थकृष्णकुण्डबलभद्रसरोगणेशतीर्थ-
दानस्थलमायातीर्थमाहात्म्यं नाम
एकोनविंशोऽध्यायः ॥१९

नारद उवाच

द्वितीयस्यापि दुर्गस्य पूर्वद्वारे विदेहराट् ।
इन्द्रतीर्थं महापुण्यं कामदं सिद्धिदायकम् ॥ १
तत्र स्नात्वा नरो राजन्निन्द्रलोकं प्रयाति हि ।
इहैव चन्द्रसादृश्य वैभवं प्राप्यते नरै. ॥ २
तथा वै दक्षिणे द्वारे सूर्यकुण्डोऽभिधीयते ।
तत्र सत्राजितेनापि पूजितोऽभूत् स्यमन्तकः ॥ ३
तत्र स्नात्वा पद्मरागं यो ददाति नृपेश्वर ।
सूर्यप्रभविमानेन सूर्यलोकं प्रयाति हि ॥ ४
तथैव पश्चिमे द्वारे ब्रह्मतीर्थं विशिष्यते ।
तत्र स्नात्वा नरो राजन् स्वर्णपात्रे च पायसम् ॥ ५
यो ददाति महाबुद्धिस्तस्य पुण्यफल शृणु ।
ब्रह्महा पितृहा गोघ्नो मातृहाचार्यहाघवान् ॥ ६
इन्द्रलोके पद धृत्वा बिभ्रद् ब्रह्ममयं वपुः ।
चन्द्राभेन विमानेन याति ब्रह्मपदं स च ॥ ७
तथा वै उत्तरे द्वारे क्षेत्रं स्यान्नैललोहितम् ।
यत्र साक्षान्महादेवो राजते नीललोहित. ॥ ८
देवता मुनयः सर्वे तथा सप्तर्षयः परे ।
वसन्ति यत्र वैदेह तथा सर्वे मरुद्गणाः ॥ ९
नीललोहितलिङ्गन्तु यत्र संपूज्य यत्नतः ।
ऐश्वर्यमतुलं लेभे रावणो लोकरावणः ॥ १०
कैलासस्यापि यात्रायां यत्फलं लभते नृप ।
तस्माच्छतगुणं पुण्यं नीललोहितदर्शनात् ॥ ११

नीललोहितकुण्डे वै स्नातो यस्त्रिदिनं नरः ।
स याति शिवलोकाख्यं पापायुतयुतोऽपि हि ॥ १२
सप्तसामुद्रकं नाम तीर्थं यत्र विराजते ।
तत्र स्नात्वा नरः पापी पापसङ्घैः प्रमुच्यते ॥ १३
सप्तानाञ्च समुद्राणां स्नानपुण्यं लभेत् त्वरम् ।
विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः ॥ १४
पर्जन्यो धनदः सोमः क्षितिरग्निरपांपतिः ।
तत्पार्श्वेषु सदा ह्येते तिष्ठन्ति मनुजेश्वर ॥ १५
सप्तकोटीनि तीर्थानि ब्रह्माण्डे यानि कानि च ।
सर्वाणि तत्र तिष्ठन्ति सप्तसामुद्रके नृप ॥ १६
तत्र स्नात्वा नरः पश्चात् कृत्वा सर्वपरिक्रमम् ।
प्राप्नोति द्वारकायाश्च यात्रायाः सकलं फलम् ॥ १७
सप्तसामुद्रकमृते न यात्रा फलदा स्मृता ।
सप्तसामुद्रकं तीर्थं विष्णुरूपं विदुः सुराः ॥ १८

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्व-
संवादे द्वितीयदुर्गे इन्द्रतीर्थसूर्यकुण्डब्रह्मतीर्थ-
नैललोहितसप्तसामुद्रकमाहात्म्यं नाम
विंशोऽध्यायः ॥ २०

### नारद उवाच

तृतीयस्यापि दुर्गस्य पूर्वद्वारे महाबलः ।
रक्षत्यहर्निशं राजन् हनूमानञ्जनीसुतः ॥ १
तं प्रेक्ष्य भगवद्भक्तं हनूमन्तं महाबलम् ।
जायते भगवद्भक्तो हनूमानिव मानवः ॥ २
तथा वै दक्षिणद्वारं चक्रं नाम सुदर्शनम् ।
रक्षत्यहर्निशं राजन् श्रीकृष्णगतमानसम् ॥ ३
तस्य दर्शनमात्रेण भवेद्भक्तो हरेः परः ।
भक्तस्यापि सदा रक्षां करोति हि सुदर्शनम् ॥ ४
तथा वै पश्चिमं द्वार जाम्बवानृक्षराड् बली ।
तृतीयद्वारदुर्गस्य पश्चिमद्वारमाश्रितः ।
रक्षत्यहर्निशं राजन् भगवद्भक्तिसंयुतः ॥ ५
तं प्रेक्ष्य भगवद्भक्तं जाम्बवन्तं महाबलम् ।
चिरंजीवी हरेर्भक्तो भवतीह च मानवः ॥ ६
तथा वै चोत्तरं द्वारं विष्वक्सेनो महाबलः ।
रक्षत्यहर्निशं राजन् श्रीकृष्णहृदयो महान् ॥ ७
तस्य स्मरणमात्रेण नरो याति कृतार्थताम् ।
शृणु राजन् बहिर्दुर्गात्तीर्थं पिण्डारकं स्मृतम् ॥ ८
पिण्डारकस्य माहात्म्यं शृणुताद् राजसत्तम ।
यस्य स्मरणमात्रेण महापापात् प्रमुच्यते ॥ ९
अर्थसिद्धिरिव द्वारे रैवताद्रिसमुद्रयोः ।
मध्ये पिण्डारकक्षेत्रं तीर्थानां तीर्थमुत्तमम् ॥ १०
क्रतुराजं राजसूयं यदुराजो महाबलः ।
चकार यत्र वैदेह परिपूर्णतमाज्ञया ॥ ११

सर्वाणि यत्र तीर्थानि समाहूतानि सर्वतः ।
निवासं चक्रिरे राजन् उग्रसेनक्रतूत्तमे ॥ १२
तेन पिण्डारकं नाम सर्वतीर्थस्य पिण्डतः ।
तत्र स्नात्वा नरः सद्यो राजसूयफलं लभेत् ॥ १३
यत्रैव त्रिदिनं स्नात्वा व्रती भूत्वा समाहितः ।
ब्राह्मणेभ्यः स्वर्णदानं दत्त्वा यः प्रणतो भवेत् ॥ १४
इहैव नरदेवः स्यात् स महात्मा न संशयः ।
नित्यं शृणोति सततं बन्दिवाग्भिर्यशः स्वयम् ॥ १५
सुवर्णरत्नवस्त्राद्यैः सुचन्द्रवदनैः परैः ।
स्त्रीसङ्घैः सेवितो नित्यं हृष्टपुष्टो महाबलः ॥ १६
अहोरात्रं प्रताड्यन्ते द्वारि दुन्दुभयो घनैः ।
करीन्द्राणाञ्च चीत्कारैरश्वह्रेषैः समन्वितम् ॥ १७
विराजते राजसङ्घैः प्रेक्षयन् प्राङ्गणाजिरम् ।
रत्नप्रासादनिचयं ध्वजमण्डलमण्डितम् ॥ १८
मत्तकुञ्जरकर्णाभ्यां ताडिता भृङ्गमण्डली ।
अलङ्करोति तद्द्वारं मण्डितं मण्डलेश्वरैः ॥ १९
पिण्डारकस्नानमृते कथ राजा भवेदिह ।
अन्ते मोक्ष कथं याति नरः पापयुतोऽपि हि ॥ २०

पिण्डारकस्नानमृते न वर्म
पिण्डारकस्नानमृते न कर्म ।
पिण्डारकस्नानमृते न धर्मः
पिण्डारकस्नानमृते न शर्म ॥ २१
पिण्डारकस्नानमृते वियोगी
पिण्डारकस्नानकरस्तु योगी ।
पिण्डारकस्नानकरः सुभोगी
पिण्डारकस्नानकरो न रोगी ॥ २२

द्वारावतीं माधवमासमध्ये
प्रदक्षिणीकृत्य नमस्करोति ।
सर्वा इहामुत्र च सिद्धयोऽपि
वैदेह तत्पाणितले भवन्ति ॥ २३

तीर्थाप्लुतोऽधःशयनः शुचिश्च
मौनी व्रती वा यवभोजनेन ।
आरभ्य चैत्रीं किल पौर्णमासीं
यो माधवीमेत्य करोति यात्राम् ॥ २४

तत्पुण्यसङ्ख्यां गदितुं न शक्त
श्चतुर्मुखो वेदमयो विधाता ।
यो मेघधारां गणयेत् कदाचित्
कालेन पुण्यानि न कृष्णपुर्याः ॥ २५

यथा तिथीनां हरिवासरश्च
यथा हि शेषः फणिनां फणीन्द्रः ।
यथा गरुत्मान् दिवि पक्षिणाञ्च
यथा पुराणेषु हि भारतञ्च ॥ २६

यथा हि देवेषु च देवदेवः
श्रीवासुदेवो यदुदेवदेवः ।
तथा पुरीक्षेत्रसमस्तमध्ये
द्वारावती पुण्यवती प्रशस्ता ॥ २७

अहोऽतिधन्या यदुमण्डलीभि-
र्विराजते भूमितले मनोहरा ।
वैकुण्ठलीलाधिकृता कुशस्थली
यथा तडिद्भिर्जलदावलिर्दिवि ॥ २८

यत्रैव साक्षात् पुरुषः परेश्वरो
धृत्वा चतुर्व्यूहमलं विराजते ।
यस्तूग्रसेनाय ददौ नृपेशतां
कृष्णाय तस्मै हरये नमो नमः ॥ २९

यदा स्वलोकं भगवान् गमिष्यति
सम्प्लावयिष्यत्यथ तां तदार्णवः ।
वैदेह दिव्य हरिमन्दिरं विना
तस्मिन् निवासं भगवान् करिष्यति ॥ ३०

शृण्वन्ति तत्रैव कलौ जना ध्वनि
कृष्णोक्तमित्थं सततं दिने दिने ।
भवेदविद्यो यदि वा सविद्यो
यो ब्राह्मणो वै स तु मामकी तनुः ॥ ३१

भूत्वाथ विप्रोऽब्धितटादगाधं
गत्वा गृहीत्वा प्रतिमां परस्य ।
कृत्वा प्रतिष्ठाञ्च विधाय शौरिजं
करिष्यते स्थापनमर्क एषः ॥ ३२

श्रीद्वारकानाथमिति स्वरूपं
पश्यन्ति ये भक्तजनाः कलौ युगे ।
गच्छन्ति ते विष्णुपदं नृदेव
योगीश्वराणामपि दुर्लभं यत् ॥ ३३

इदं मया ते कथितं नृदेव
माहात्म्यमेतत् किल कृष्णपुर्याः ।
शृणोति यः श्रावयते च भक्त्या
श्रीद्वारकावासफलं लभेत् सः ॥ ३४

श्रीद्वारकाया नृप खण्डमेतन्
मया तवाग्रे कथितं सुपुण्यम् ।
कीर्तिं कुलं भक्तिमतीवमुक्तिं
ददाति राज्यञ्च सदैव शृण्वताम् ।। ३५

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्व-
संवादे तृतीयदुर्गे पिण्डारकमाहात्म्यं नाम
एकविंशोऽध्यायः ।। २१

नारद उवाच

श्रीकृष्णस्य सखा कश्चित् सुदामा नाम ब्राह्मणः ।
स उवास स्वपुर्य्यान्तु सत्या च भार्यायावृतः ॥ १
विरक्तो धनहीनश्च वेदवेदाङ्गपारगः ।
समानशीलया पत्न्या चक्रे वृत्तिमयाचिताम् ॥ २
स कदाचित् प्रियां प्राह सीदमानां दरिद्रतः ।
श्रीकृष्णो द्वारकानाथो मित्रं मम पतिव्रते ॥ ३
मया तेनापि पठिता विद्या सान्दीपनेगृहे ।
पुनर्न दृष्टः श्रीकृष्णो भोजवृष्ण्यन्धकेश्वरः ॥ ४
त्रैलोक्यनाथो भगवान् दुःखहा दीनवत्सलः ।
इति श्रुत्वा वचस्तस्य शुष्कवक्त्रा पतिव्रता ॥ ५
जीर्णवस्त्रधरा दीना पतिं प्राह बुभुक्षिता ।
यदि ब्रह्मन् ननु हरिः सखा ते कमलापतिः ॥ ६
बुभुक्षितः कथं भूतो जीर्णकर्पटधारणः ।
द्वारकायां जना गत्वा दृष्ट्वा साक्षाच्छ्रियः पतिम् ।
धनयुक्ताः समायान्ति तस्मात्त्वं गन्तुमर्हसि ॥ ७

सुदामोवाच

सर्वेषां शिक्षकोऽहं त्वं तस्मै शिक्षां प्रदास्यसि ।
विप्रस्य विदुषो भिक्षा धनं प्रकथितं प्रिये ॥ ८

प्रियोवाच

सखा तु श्रीपतिर्यस्य नातिदूरे प्रवर्तते ।
तमुपेहि स ते दुःखं दारिद्र्यं नाशयिष्यति ॥ ९

गता अवस्था मम ते दुःखदारिद्र्यभुञ्जतोः ।
दातुः कृपानिधेः कान्त मित्रतायाश्च किं फलम् ॥ १०

सुदामोवाच

विधिना लिखितं भाग्यं तत्तथैव भविष्यति ।
यातायातेन किं भद्रे हरेर्ध्यानं करोम्यहम् ॥ ११
यद्द्वारि देशे राजानो देवगन्धर्वकिन्नराः ।
आज्ञां विना न यास्यन्ति दीनस्य मम का कथा ॥ १२

प्रियोवाच

विनाज्ञां नैव यास्यन्ति देवगन्धर्वकिन्नराः ।
अन्तर्यामी हरिः शीघ्रं दूतैस्त्वामाह्वयिष्यति ॥ १३

विप्र उवाच

दयालुरीदृशः कृष्णो परन्तु शृणु भामिनि ।
विपत्तिकाले मित्रस्य न गच्छेद् गृहमुत्तमम् ॥ १४
कथन्तु याचनां कुर्वे चिराद्दृष्ट्वा स्वकं प्रियम् ।
निर्लोभात्तु भवेत् प्रीतिर्याचनात्तु गमिष्यति ॥ १५

प्रियोवाच

दुःखदारिद्र्यहरणं श्रीहरेर्दर्शनं कुरु ।
याचना नैव कर्तव्या स तेऽर्थं बहु दास्यति ।
एवन्तु प्रियया विप्रो बहुधैवं प्रभाषितः ॥ १६
अयं हि परमो लाभः कृत्वा मित्रस्य दर्शनम् ।
उपायनन्तु किं दास्ये लज्जितोऽहं दरिद्रत. ॥ १७
इत्युक्त्वा सा गता शीघ्रं परगेहं तदा सती ।
तण्डुलांश्चतुरो मुष्टीन् याचित्वा स्वगृहं ययौ ॥ १८
जीर्णकर्पटखण्डे च बध्वा तान् पतये ददौ ॥ १९

ततो गृहीत्वा पृथुकांश्च तण्डुलान्
कुचैलधारी मलिनश्च दुर्बलः ।
जगाम कृष्णस्य पुरीं शनैः शनै
र्ब्रह्मण्यदेवं मनसा च सस्मरन् ॥ २०
सोत्तीर्य सिन्धुमुडुपेन ददर्श तत्र
श्रीद्वारकां हरिपुरीं कनकैर्विचित्राम् ।
श्रेणीसभाविविधदुर्गगृहैः पताकैः
शृङ्गाटकैरतिबलैर्यदुभिश्च गुप्ताम् ॥ २१
दृष्ट्वा कृष्णपुरीं विप्रो जनानापृच्छ्य श्रीहरेः ।
श्रीमन्दिरन्तु कुत्रास्ते सर्वे वदत साम्प्रतम् ॥ २२
इति श्रुत्वा माधवस्य भवनानाञ्च रक्षकाः ।
ऊचुस्ते वर्तते कृष्णः सर्वेषु मन्दिरेषु च ॥ २३
इत्युपश्रुत्य सदनं प्रविश्यैकतमं द्विजः ।
ब्रह्मानन्दं गतः कृष्णं पर्यङ्कस्थं विलोक्य च ॥ २४
सखायमागतं ज्ञात्वा सहसोत्थाय माधवः ।
दोर्भ्यां मिलित्वा चान्योन्यं प्रेम्णा ह्यश्रुकलाकुलः ॥ २५
स्वर्णपात्रेण तस्यापि पादौ प्रक्षाल्य तज्जलम् ।
गृहीत्वा शिरसा तं तु पर्यङ्क उपवेश्य च ॥ २६
अर्चनं कृतवान् गन्धचन्दनागुरुकुङ्कुमैः ।
पक्वान्नैर्धूपदीपैश्च मधुपर्कैर्विधानतः ॥ २७
पश्चादावेद्य ताम्बूलं गाञ्च स्वागतमब्रवीत् ।
वृद्धं कुचैलं मलिनं दुर्बल श्वेतमूर्द्धजम् ॥ २८
मित्रविन्दा पर्यचरद्व्यजनेन स्मितान्विता ।
श्रीकृष्णस्य प्रियाः सर्वा विस्मिता जहंसुस्तदा ॥ २९
ऊचुः परस्परं नार्यः प्रेक्ष्य विप्रं समर्चितम् ।
भिक्षुणा ह्यवधूतेन किमनेन कृतं तपः ॥ ३०

येन त्रैलोक्यनाथेन सत्कृतश्चाग्रजो यथा ।
एतस्मिन्नन्तरे तौ द्वौ कथयाञ्चक्रतुः कथाः ।
पूर्वा गुरुकुले जाता हस्तौ गृह्य परस्परम् ॥ ३१

कृष्ण उवाच

शृणु ब्रह्मन् प्रपठिता सर्वविद्या त्वया मया ।
गुरवे दक्षिणां दत्त्वा पुनस्त्वं नैव दृश्यसे ॥ ३२
अहन्तु द्वारकां यातो जरासन्धभयात् सखे ।
कुत्र स्थले तव विभो निवासो वद मे खलु ॥ ३३
कदाचिदिन्धनार्थं वै गुरुदारैः प्रणोदिताः ।
विद्यार्थिनो वयं सर्वे वनं जग्मुर्भयङ्करम् ॥ ३४
विपत्तिरभवत्तत्र वातवर्षभयङ्करी ।
रविरस्तं गतो रात्र्यामन्धकारोऽभवन्महान् ॥ ३५
सर्वं जलमयं जातं स्थलं नैव तु दृश्यते ।
वयं परस्परं सर्वे गृहीतकरपङ्कजाः ॥ ३६
विद्युत्प्रकाशे पश्यन्तो दिक्षु सर्वासु बभ्रमुः ।
ततः सूर्योदये जाते गुरुः सान्दीपनिर्महान् ॥ ३७
जले शिष्यांश्च शीतार्तान् वनं गत्वा ददर्श ह
जलात् सर्वान् स्थले कृत्वा गुरुरश्रुपरिप्लुतः ॥ ३८
उवाच बालका यूयमस्मदाज्ञापरायणाः ।
प्रेष्ठस्तु प्राणिनामात्मा तमनादृत्य मत्पराः ॥ ३९
तस्माद्भवद्भ्यः सन्तुष्टो वरं दास्यामि दुर्लभम् ।
भवतां चापि सर्वत्र पूर्णाः सन्तु मनोरथाः ॥ ४०
वेदशास्त्रपुराणानि कण्ठस्थानि भवन्ति हि ।
तस्माद्गुरोश्च कृपया पूर्णोऽहं सर्वसौख्यतः ॥ ४१

सुदामोवाच

देवदेव गुरुस्त्व तु कोटिब्रह्माण्डनायकः ।
श्रीपतेस्तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ४२
ततः सुदामा विप्रस्तु कृष्णाय परमात्मने ।
पृथुकाँस्तण्डुलान् राजन्नप्रायच्छदवाङ्मुखः ॥ ४३
सर्वात्मा भगवांस्तस्य ज्ञात्वागमनकारणम् ।
नायं विप्रस्तु श्रीकामो मुक्त्यर्थे मां तु सेवते ॥ ४४
भार्या पतिव्रता दुःखाद्धनाशां चास्य कुर्वती ।
तस्माद्धनं कथं दास्ये अदात्रोश्च तयोरहम् ॥ ४५
इति ब्रुवन् पुनर्ज्ञात्वा हेतोर्मम स तण्डुलान् ।
प्रगृह्य गतवानत्र लज्जया नैव दास्यति ॥ ४६
तस्मात्तु याचनां कुर्वे विदित्वैवं वचोऽब्रवीत् ॥ ४७

कृष्ण उवाच

गृहान् मदर्थे भवता किमानीतमुपायनम् ।
अण्वप्युपाहृतं यच्च भक्त्या भूरि भविष्यति ॥ ४८
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४९
इत्थमाभाष्य भगवानदातुश्च द्विजन्मनः ।
चीरखण्डात्तण्डुलांश्च जहार किमिदं स्वयम् ॥ ५०
एतत्त्वयोपनीतं मे सखे परमप्रीणनम् ।
विश्वं मां तर्पयिष्यन्ति ब्रह्मन्ते च तण्डुलाः ॥ ५१
ईदृशा गोकुले भुक्ताः श्रेष्ठाः पृथुकतण्डुलाः ।
मात्रा यशोदया दत्ताः पुनस्तान्नैव दृष्टवान् ॥ ५२
इत्येकमुष्टिं जग्ध्वा च भूमिजां सम्पदं ददौ ।
द्वितीयां जग्धुमारेभे दातुं पातालसम्पदाम् ॥ ५३

तावद्वक्षस्थलाच्छीघ्रं जगृहे श्रीः करं हरेः ।
अपराधाद्विना नाथ कथं मां त्यक्तुमिच्छसि ।। ५४
एतावतालं श्रीकृष्ण शक्रतुल्यो द्विजो भवेत् ।
द्विजेन निर्धनेनापि न ज्ञातं तद्रहस्यकम् ॥ ५५
सम्पूर्णञ्च धन प्राप्तं स्वगृहे विष्णुमायया ।
उषित्वा रजनीमेकां भुक्त्वा पीत्वा सुखं गतः ।। ५६
श्वो भूते स्वगृहान् गन्तुं कृष्णं नत्वा मनो दधे ।
स चाज्ञतो भगवता वन्दितः परिरम्भितः ॥ ५७
याचना न कृता येन व्रीडितः स्वगृहान् ययौ ।
ब्रह्मण्यता मया दृष्टा विप्रदेवस्य श्रीपतेः ।। ५८
अहं दरिद्रः कृष्णस्य बाहुभ्यां परिरम्भितः ।
प्रियाजुष्टे च पर्यङ्के भ्रातेव स्थापितो द्विजः ॥ ५९
वीजितो व्यजनेनापि रुक्मिण्या सत्यभामया ।
निर्द्धनस्तु धनं लब्ध्वा श्रीपतिं नैव संस्मरेत् ।। ६०
इत्थं करुणया मह्यं धनं कृष्णो न दत्तवान् ।
इत्थं विचारयन् गच्छन् संस्मरन् ब्राह्मणीं रुषा ॥ ६१
गृहाण धनकोटिञ्च गृहं गत्वा ब्रवीम्यहम् ।
ब्रह्मण्यदेवो दाता च श्रीकृष्णोऽद्य मया श्रुतः ।। ६२
प्रत्यक्षदृष्टः कृपणो गर्वितो धनपूरितः ।
शापं दास्ये कथं मित्रे धनलोभादहं वृथा ॥ ६३
यादृशी मे कृता प्रीतिस्तादृशीं प्रापयिष्यति ।
पितरावस्य कंसेन कारागारे कृतौ पुरा ।। ६४
कृष्णस्तु नन्दसदने परगेहे च वर्द्धितः ।
स दास्यति कथं द्रव्यं धनयुक्तोऽपि निर्धनः ।। ६५
रत्नैः प्रपूरितान् गेहान दृष्ट्वा वाञ्छां न कारयेत् ।
ललाटे लिखितं यद्यत्तन्न्यूनं भविष्यति ॥ ६६

इति सङ्कथयन् विप्रो निजपुर्य्यन्तके गतः।
सुवर्णदुर्गसंयुक्तां कपाटध्वजमण्डिताम् ॥ ६७
तोरणैः कलशैश्चित्रैः प्रासादैः सुजनैर्वृताम्।
द्वारकामिव शोभाढ्यां सर्वरत्नैः प्रपूरिताम् ॥ ६८
दृष्ट्वा विप्रस्तु किमिदं कस्य स्थानमिति ब्रुवन्।
रथ्यां रथ्यां भ्रमन्तं तं प्रत्यगृह्णन् स्त्रियो नराः ॥ ६९
नागच्छन्त द्विजं दृष्ट्वा किङ्कर्य्यः किङ्करास्तथा।
स्वामिन्यै कथयामासुः श्रुत्वा सा विस्मयं गता ॥ ७०
भर्तारमागतं श्रुत्वा पत्नी सम्भ्रमसंयुता।
निश्चक्रामालयात्तूर्णं साक्षाच्छ्रीरिव रूपिणी ॥ ७१
ब्राह्मणी शिबिकारूढा दासीदासगणैर्वृता।
भ्रमन्तमग्रहीद्विप्रं दर्शयित्वा स्वकं मुखम् ॥ ७२

दृष्ट्वा स्फुरन्तीं तरुणीञ्च भार्यां
स्वर्णाम्बरै रत्नविभूषणाढ्याम्।
यथेन्दिरारूपवतीं विमाने
मुदान्वितः कृष्णकृपाञ्च मेने ॥ ७३

निजगेहं तया युक्तः श्रीकृष्णभवनोपमम्।
भोजनैर्द्रव्यरत्नैश्च पर्यङ्कव्यजनासनैः ॥ ७४
वितानैः स्वर्णपात्रैश्च तोरणैः समलङ्कृतम्।
दृष्ट्वा कृष्णस्य कृपया सुदामा तरुणोऽभवत् ॥ ७५
बुभुजेऽलम्पटो विप्रः समृद्धिं स्वामहैतुकीम्।
मनसाजाययात्यद्दयज्ज्ञानवैराग्यभक्तितः ॥ ७६॥
चकार तर्कणां विप्रः कुतो मम समृद्धयः।
दत्ता ब्रह्मण्यदेवेन देवानामपि दुर्लभाः ॥ ७७
ईदृशीं सम्पदं दत्त्वा नावोचत् किमपि स्वयम्।
मम तण्डुलमुष्टिञ्च प्रीत्या प्रत्यग्रहीद्धरिः ॥ ७८

तस्य सख्यञ्च दास्यञ्च भूयान्मे जन्मजन्मनि ।
तत्पदाम्बुरुहध्यानात् तरिष्येऽहं भवार्णवम् ॥ ७९

विचिन्त्य चेत्थं मनसा सुदामा
पत्न्यावृतः कृष्णपदारविन्दे ।
मनश्च कृत्वा धनमेव विप्रान्
दत्त्वा हरेर्धाम परं जगाम ॥ ८०

एतच्छ्रीकृष्णदेवस्य चरितं शृणुयान्नरः ।
दारिद्र्यान्मुच्यते शीघ्रं भक्तो भगवतो भवेत् ॥ ८१

श्रीद्वारकाया नृप खण्डमेत-
न्मया तवाग्रे कथितं सुपुण्यम् ।
कीर्तिं कुलं भक्तिमतीवमुक्तिं
ददाति राज्यञ्च सदैव शृण्वताम् ॥ ८२

इति श्रीगर्गसंहितायां द्वारकाखण्डे नारदबहुलाश्व-
संवादे सुदामविप्रोपाख्यानवर्णनं नाम
द्वाविंशोऽध्यायः ॥ २२

## इति श्रीगर्गसंहितायां षष्ठं द्वारकाखण्डं समाप्तम् ।

०पश्यताञ्च तौ ॥ इति मु० पु० ।
०समं लोकैर्विलै.० इति क० पु० ।
०राजद्भूखण्ड० इति ग० मु० पु० ।
०टङ्कारोद्भयविह्वलम् । इति ग० मु० पु० ।
०स्फुरत्प्रभुः । इति क० पु० ।
घूर्णीभूता रथा० इति क० पु० ।
०श्छिन्नसंशयाः ॥ इति मु० पु० ।
द्विपग्रहाचोष्ट्र० इति मु० पु० ।
०शैवालभुज० इति मु० पु० ।
करमीनमौलि० इति मु० पु० ।
०शुक्तीच्छत्रशङ्खा० इति मु० पु० ।
रथाङ्गात्रत० इति मु० पु० ।

०सेनाद्वीपितटा० इति क० ख० ग० पु० ।
१।३१ रहस्यमुण्डमाला० इति मु० पु० ।
१।३३ विद्याधर्यश्च स्वर्गस्था० इति मु० पु० ।
१।३४ ममानुरूपावेमे च० इति मु० पु० ।
१।४१ पश्यतामिति देवा०इति क० पु० ।
१।४२ ०महाबलौ ॥ इति मु० पु० ।
१।४३ तयोश्च युद्ध्यतोः सर्वं चूर्णं० इति मु० पु० ।
१।४८ ०नीत्वा सुखावहम् ॥ इति मु० पु० ।

२।१ ०स्तावत्यक्षौहि० इति क० ख० ग० पु० ।
२।३ ०शत्रूपहारिणाम् ॥ इति क० पु० ।
०शत्रूपहारणाम् ॥ इति ख० पु० ।
०शांत्रूपहारण ॥ इति ग० पु० ।

२।४ ०द्रव्यञ्च संहर्त्तुं वीक्षन्तः० इति मु० पु० ।

२।७ ०स्वपुरे भयविह्वले० इति क० ख० ग० पु० ।

२।८ ०द्वारकादुर्गामेक० इति क० ग० पु० ।

०द्वारकादुर्गमेक० इति ख० पु० ।

२।१३ ०कन्दरं त्वरम् ॥ इति मु० पु० ।

२।१४ ०पुरी हृत्वा देवानां० इति क० पु० ।

२।१५ ०देवताः सर्वे० इति क० ख० ग० पु० ।

२।१७ ०शयानस्याप्यचेतसः ॥ इति क० ख० ग० पु० ।

०प्यचेतनः ॥ इति मु० पु० ।

२।१८ ०कृतयुगे युगे ॥ इति क० ख० ग० पु० ।

२।१६ ०पीताम्बराच्युतम् । इति मु० पु० ।

तताड यवनः० इति मु० पु० ।

२।२० असावपश्यंस्ततपा०इति क० पु० ।

२।२१ ०दृष्टस्य दृष्टिपातेन० इति क० पु० ।

२।३० ०पापप्रहारी । इति । क०ख० ग० पु० ।

२।३२ श्लोकापरार्द्धं नास्ति क० पु० ।

२।३३ नास्ति क० पु० ।

२।३५ इत्थं स्तुत्वा हरिं० इति मु० पु० ।

२।३८ ०पुनरावृत्य मथुरां० इति क० पु० ।

०पुनरागत्य मथुरा० इतिग० पु० ।

श्लोकापरार्द्धं अग्रिमश्लोक-पूर्वार्द्धादनन्तरं वर्त्तते क० पु० ।

२।४० ०गतोह्ययम् । इति मु० पु० ।

२।४१ ०यावद्वै स्थिता० इति ग० मु० पु० ।

०भवत मे द्विजाः । इति ख० पु० ।

२।४२ ०राजा जरासन्धो० इति मु० पु० ।

२।४६ ०तटाद् गिरेः ॥ इति मु० पु० ।

२।४७ अन्तिम पादद्वयं नास्ति मु० पु० ।

३।४ ०स पुरा विनिर्माय० इति क० पु० ।

३।६ ०महीम् ॥ इति क० ख० ग० पु० ।

३।८ ०सोऽभिप्रायं न्यवे० इति क० पु० ।

३।१० ०उरस्तथैव० इति मु० पु० ।
०पृष्टो ह्यधर्मज्ञ० इति क० ख० ग० पु० ।

३।११ ०सारथिवद् गणेषु। इति मु० पु० ।

३।१३ ०प्रभावताम् । इति मु० पु० ।
अस्यै वरं० इति क० ख० ग० पु० ।

३।१६ ०द्वारिकायां० इति क० ख० पु० ।

३।२० ०समृद्धां तां समृद्धिभिः ॥ इति मु० पु० ।

३।२१ पारिभद्रे रथं० इति मु० पु० ।

३।२३ ०यदुपुर्यां गृहे० इति मु० पु० ।
०द्वारवत्यां विराजते ॥ इति ख० पु० ।

४।४ ०तमं वै सा मेने च सदृशं० इति क० ख० ग० पु० ।

४।५ ईदृशी श्रीहरि० इति० क० पु० ।

४।६ ०कृष्णस्य दातुं० इति क० पु० ।
०दातुं सा निश्चये कृता ॥ ख० ग० पु० ।

४।७ कृष्णशत्रुर्महावीर० इति मु० पु० ।

४।१० पृच्छते कुशल० इति क० ख० ग० पु० ।
०तस्मै सर्वमवर्णयत् ॥ इति मु० पु० ।

४।१२ शमत्रास्तु० इति मु० पु० ।

४।१४ ०मुद्वहेद् दुर्गे स्थिता० इति क० ख० पु० ।

४।१५ ०मां तु गृहाण० इति क० ग० पु० ।

४।१६ रुक्मिण्या. समभिप्रायं ०इति क० ख० ग० पु० ।

४।२३ ०चिञ्चिणीवृक्षे० इति क० ख० ग० पु० ।

४।२५ ०चातुर्मास्या नदी यथा ॥ इति क० ख० ग० पु० ।

४।२७ त्तोलकानि विरेजिरे । इति ग० मु० पु० ।

४।२८ ०सम्भारसञ्चयं रत्नमण्डपे ॥ इति मु० पु० ।

४।३० अथ विद्वज्जना भैष्मीं० इति क० ग० पु० ।
अथ विद्वद्‌द्विजा० इति मु० पु० ।
०रत्नावन्धं० इति क० ख० ग० पु० ।

४।३४ ०पूर्वं रत्नावन्धनरूपिणीम् ॥ इति मु० पु० ।

४।३५ ०मौलिर्मनोहरम् ॥ इति क० ख० पु० ।
०मौलिहर शुभम् ॥ इति ग० पु० ।

४।३६ ०विवर्जितम् ॥ इति क० पु०

४।४० ०श्रुत्वा घोरं० इति क० पु० ।

४।४१ भीष्मको ह्यग्रतो० इति क० पु० ।
०ह्यगतो कृत्वा० इति ख० पु० ।
०दिव्यैर्मृगैः सामुद्र० इति क० पु० ।
०दिव्यारुणैः सामुद्र० इति मु० पु० ।

४।४३ ०मृदङ्गेषु ध्वनत्सु च । इति मु० पु० ।

५ १ मेवं वा लभते वार्त्तां० इति क० पु० ।
मेघ वा लभते वार्त्ता० इति ख० ग० पु० ।

५।४ ०न देवदेवो भगवांश्चन्द्र-मौलि । इति क० ख० ग० पु० ।

५।५ एवं विचिन्तयन्ती सा भैष्मी गेहाद्‌भूमिपु । इति मु० पु० ।

५।६ ०मस्फुरत् प्रतिभाषणाम् । इति मु० पु० ।

५।७ श्रीकृष्णागमनं० इति क० मु० पु० ।

५।१५ ०मन्दिरं सम्प्रागतं० इति मु० पु० ।

५।१६ ०सितासिलक्षं० इति मु० पु० ।

५।२० देवीमठं० इति मु० पु० ।

५।२१ ०सततं भवानि ते । इति क० मु० पु० ।

५।२३ ०वदती विलासं तदा वद-न्तीषु० इति क० ख० ग० पु० ।

६।२ त्यक्त्वा मुनिव्रतं० इति क० ख० ग० पु० ।

सहाराभिः सखीभिश्च० इति क० ख० ग० पु० ।

६।५ तदपाङ्गमिषै० इति क० ख० ग० पु० ।

६।६ नैश्रेयसम्भवै० इति मु० पु० ।

६।१५ ०स्मान् स्वयशो हृत० इति क० ख० ग० पु० ।

६।२१ ०जग्मुरेते वै कृष्ण० इति ख० पु० ।

६।२४ ०मामैरित्यभय० इति मु० पु० ।

६।२६ ०शिञ्जत्कम्बुकाः । इति क० ख० पु० ।

६।३१ कदाचिद् वै गदो० इति ख० पु० ।

०युद्ध स तत्याज तत् किलान् मनसा० इति ख० पु० ।

०युद्ध स तत्याज तत् कलावान् मनसा० इति क० पु० ।

६।३२ गदाग्रजेन० इति क० ख० ग० पु० ।

६।३३ ०मयी गुर्वी याञ्च कौमोदकी यथा । इति क० ख० ग० पु० ।

६।३५ ०प्रहारव्यथिते० इति क० ख० पु० ।

६।३५ ०रथगां ध्वजाम् । इति क० ख० ग० पु० ।

६।३६ ०दण्डेन च यथा घटम् ॥ इति ख० पु० ।

६।३९ ०दन्तवक्त्रस्य मध्यतः । इति मु० पु० ।

६।४१ ०मूर्च्छितास्ता क्षताप्लुताः॥ इति मु० प० ।

६।४६ ०द्वारका हत्वा० इति क० ख० ग० पु० ।

०रामं सत्रान्धवम् । इति क० पु० ।

६।४७ ०चन्द्रिकापुरम् । इति क० ख० ग० पु० ।

७।३ ०घनमम्बुदनिर्मितम् । इति क० पु० ।

०मदोद्धटः ॥ इति ख० पु० ।

७।५ पेटरस्य० इति क० ग० पु० ।

मेरटस्य० इति ख० पु० ।

७।११ ०गोपान्नोच्छिष्ट० इति ख० पु० ।

०च्छिष्टभुक् भवत् । इति क० ग० पु० ।

७।१२ ०युधिमाकृष्य बाण० इति क० ख० ग० पु० ।

अत्र च क० पु० इषुधि-शब्दस्य पार्श्वटिप्पण्यां 'ज्या' इति लिखित वर्त्तते ।

७।१३ सन्ताडितोऽपि० इति मु० पु० ।

७।१५ श्लोकोऽयं ७।१७ श्लोकादनन्तर दृश्यते क० ख० ग० पु० ।

०ज्ञानेनैव गुणामयम् ॥ इति क० पु० ।

०ज्ञानेनेव गुणामयम् ॥ इति ख० ग० पु० ।

७।१६ अयञ्च तत्रैव दृश्यते क० ख० ग० पु० ।

७।१७ ०मध्यतस्तद् द्विधा० इति क० ख० ग० पु० ।

०पुनः शितैर्बाणैः० इति मु० पु० ।

०द्धरयेचोक्ति० इति क० ग० पु० ।

७।१८ ०रुक्मसूतं० इति ख० पु० ।

०रुक्मेः सूतं० इति ग० मु० पु० ।

७।२१ ०जगर्ज च नदन् मृधे ॥ इति क० ग० पु० ।

०जगर्ज गजवन्मृधे ॥ इति ख० पु० ।

७।२२ सन्ताडितोऽपि० इति मु० पु० ।

०परिघेणापि संजघान० इति मु० पु० ।

७।२४ तनखड्ग चर्मणा० इति क० ख० ग० पु० ।

चर्मणा इति सहार्थे तृतीया इति ख० पु० पार्श्वटिप्पण्याम् ।

०त्राणः कञ्चुकश्च हतो महान् ॥ इति क० ख० ग० पु० ।

७।२५ ०त्राणोऽपि युग० इति क० ख० ग० पु० ।

०देते छिन्नाः कृता मृधे । इति क० ख० ग० पु० ।

७।२७ ०भ्रातृवध खड्गं रुक्मिणी० इति क० ख० ग० पु० ।

७।२६ परित्रासैर्विलपती० इति मु० पु० ।

७।३२ ०वैशालिभद्राणां जहि चैतादृश० इति मु० पु० ।

७।३५ आर्यपुत्र महाबुद्धे० इति ख० मु० पु० ।

७।३६ ०भीष्मकात्मज० । इति ख० मु० पु० ।

७।४५ इहैव भुक्त्वा विभवेन मुक्ति० इति क० ख० ग० पु० ।

८।६ नागत स० इति क० ख० ग० पु० ।

८।१७ अगजित्कन्यकां० इति क० पु० ।

८।१६ ०मत्स्य पगान् जित्वा० इति ख० पु० ।

८।२१ सविधं जगृहे पाणीन् नाना-रूपः० इति मु० पु० ।

८।२४ शम्बरो निर्देश तोकं० इति क० ग० पु० ।

शम्बरो निर्देश तोक० इति ख० पु० ।

०त समापतन् । इति क० ग० पु० ।

८।२६ ०भार्ययाम्बरयायुतः । इति क ख० ग० पु० ।

८।२७ स्वयंवरस्थले० इति मु० पु० ।

६।८ पितुर्वचः समा० इति मु० पु० ।

६।६ ०राजन् बलिष्ठो भगवान् विभुः ॥ इति मु० पु० ।

६।१२ स विश्वाख्यो० इति मु० पु० ।

६।१३ श्लोकोत्तरार्द्धं नास्ति क० ख० ग० पु ।

६।१४ ०राजन्नाहङ्कारं समाचर ॥ इति क० पु० ।

०राजन् माहङ्कारं समाचर ॥ इति ख० ग० पु० ।

६।१७ नवीना किं मही ते वै भगवानेत्र० इति क० ख० ग० पु० ।

६।१६ ०राज्ञाप्यानर्त्तोऽब्धि० इति मु० पु० ।

६।२४ भुवोऽपि० इति मु० पु० ।

६।२६ कर्त्तुं मद्भक्त्या० इति क० ख० ग० पु० ।

६।२७ तस्माद् दैवस्य० इति मु० पु० ।

९।३० ०समायुक्तो राजन् वैकुण्ठ० इति मु० पु० ।

०समायुक्तो व्रजन्० इति क० पु० ।

६।३१ ०प्रशासत. ॥ इति क० ख० ग० पु० ।

६।३२ ०न्ययोजयत् ॥ इति ख० पु० ।

१०।२ ग० पु० श्लोकान्तरांशयोजनेन पाठः प्रभ्रष्टः ।

१०।३ ०कृत्य पुण्यदा। इति मु० पु०।
ख० पु० यज्ञियम् इत्यस्य पार्श्वटिप्पया रैवतयज्ञ-स्थानम् इति दृश्यते।
१०।४ श्लोकोत्तरार्द्धं नास्ति ग० पु०।
१०।५ श्लोकपूर्वार्द्धं नास्ति ग० पु०।
१०।८ ०रजांसि धारयेन्नरः। इति क० ख० ग० पु०।
०कृत पाप मुच्यते० इति क० ख० ग० पु०।
१०।१४ ०मुक्ति समारुहेत्॥ इति क० ख० ग० पु०।
१०।१७ ०कैलासोत्तमभूमिषु॥ इति मु० पु०।
१०।२१ ०भद्रोऽभूत्सत्सेवायां गजा० इति मु० पु०।
१०।३० कृतं ते वैष्णवं० इत्यादि क० ग० पु०।
१०।३१ ०ज्ञानिसत्तमम्॥ इति क० ग० पु०।
१०।३७ तद्वच परमं ०इति क० ख० ग० पु०।
१०।३९ घण्टानाद महाधृष्ट० इति क० पु०।

०धनग्राहो भव मूढ महा-खल॥ इति ख० पु०।

११।३ भवता ग्राह० इति मु० पु०।
भवत ग्राह० इति क० पु०।
भवेत्तं ग्राह० इति ख० ग० पु०।
११।५ नास्ति क० ख० ग० पु०।
११।६ ०पृष्टग्राच्यो० इति मु० पु०।
११।९ प्रियाला प्रीतका० इति मु० पु०।
प्रयाला प्रातका० इति ग० पु०।
११।११ ०गाह्याशु शुण्डा० इति क० ख० ग० पु०।
११।१२ ०बली दैवेन नोदित.। इति क० पु०।
११।१३ तेनैव तद्वते नीतो० इति क० पु०।
येनैव तद्वने० इति० ख० ग० पु०।
११।१४ ०कपनोर्हि वहि० इति ख० ग० पु०।
११।१७ ०कृष्णाय ते विशदधिष्ण्य सुरेश० इति क० ख० ग० पु०।

११।१६ ०धावन् नक्रं समा० इति क० पु० ।
०शिरोऽद्भुतम् ।। इति मु० पु० ।
०पूर्वमेव तत्याज तं गजं द्रुतम् ।। इति क० पु० ।
११।२७ नास्ति क० ग० मु० पु० ।

१२।३ ०शङ्खं सुन्दरैलक्षणैर्वृतम् ।। इति मु० पु० ।
१२।५ ०शङ्खाख्यो भवतु० इति क० ग० पु० ।
१२।६ ०मामैरित्यभयं० इति मु० पु० ।
१२।१२ ०तदा च सः ।। इति मु० पु० ।
१२।१५ ०चीरसंत्राणा० इति क० ख० ग० पु० ।
विषाग्निवन० इति क० पु० ।

१३।२ ०हरिक्षेत्रे० इति क० ख० ग० पु० ।
१३।६ ०भूतं भागवतं० इति ख० ग० पु० ।
१३।१४ ०पापतापात्० इति मु० पु० ।
१३।१६ ०भार्यां स भिन्नोऽभू० इति मु० पु० ।
१३।२१ ०वेश्यारक्तो० इति क० ख० ग० पु० ।
१३।२३ ०द्वादशसाहस्रं० इति क० ख० ग० मु० पु० ।
परं ख० पु० पार्श्वटिप्पण्यां 'तद्राज्ये' इति साहस्रं इत्यस्य स्थाने वर्त्तते ।
१३।२७ ०जग्मुरातुराः । इति मु० पु० ।
०शङ्खचिह्नादिभिः कृते । मु० पु० ।
०शङ्खचिह्नादिभिः० इति ख० ग० पु० ।
१३।३० तेषां पाशान् स्वयं० इति मु० पु० ।

१४।४ ०तत्र तनुः शुभा ।। इति मु० पु० ।
१४।६ यस्त्वमभक्त० इति क० पु० ।
०पापात्मंस्तपोबलविगर्वितः ।। इति मु० पु० ।
१४।१२ श्लोकोत्तरार्द्धं नास्ति मु० पु० ।
१४।१३ श्लोकपूर्वार्द्धं नास्ति मु० पु० ।

प्रोवाच सोऽपि राजान० इति मु० पु० ।

१४।१५ ०भक्तानां स्वान्तकारिणा ॥ इति क० पु० ।

१४।१६ ०कथित तथोक्तं० इति मु० पु० ।

१४।१८ एतस्मिस्तं० इति मु० पु० ।
एकस्मिन्न स चोर० इति क० पु० ।
०सञ्चोरयितुं० इति ग० पु० ।

१४।१६ कलहप्रियेण० इति क० ख० ग० पु० ।

१४।२० श्रीशैलपुत्रं० इति मु० पु० ।

१४।२२ विदेशे याति० इति क० ख० ग० पु० ।

१४।२८ ०सगिरिं जग्मु० इति मु० पु० ।

१४।२६ ०गिरिराजं कराग्रतः ॥ इति क० ख० ग० पु० ।

१४।३१ ०वज्रघातिना ॥ इति ग० मु० पु० ।
०वज्रपाणिना ॥ इति क० पु० ।

१४।३२ ०वज्राच्च बलवत्तरः । इति क० पु० ।

१५।२ ०कपितोयात्समु० इति क० पु० ।
०कपितोयसमु० इति ख० पु० ।
०कपिपानात्समु० इति ग० पु० ।

१५।३ ०वज्रघातिना ॥ इति क० ख० ग० पु० ।

१५।४ सद्यो मूर्च्छां गतः० इति क० ख० ग० पु० ।

१५।५ कपिटङ्कस्य यात्राया० इति ख० पु० ।

१५।१३ एक पात्राय गोदानं० इति क० ख० ग० पु० ।

१५।१८ श्लोकोत्तरार्द्धं नास्ति ग० पु० ।

१५।१६ गङ्गाया द्विगुणं० इति ख० पु० ।
श्लोकपूर्वार्द्धं नास्ति ग० पु० ।

१५ २४ तेनैव भारते० इति क० ख० ग० पु० ।

१५।३२ ०कृत्वा हत्या सहस्रशः । इति क० ख० ग० पु० ।

१५।३३ तदेवमाज्ञया० इति मु० पु० ।

१५।३४ स्फुरदत्युच्छलत्फे० इति मु० पु० ।

१५।३८ स्फुरदत्युच्छलत्फे० इति मु० पु० ।

१५।३९ अस्याक्षेपणतो० इति क० ख० ग० पु० ।

१५।४० यथा ब्रह्मगतिः० इति क० ख० ग० पु० ।

१५।४२ ०पतिता द्वारकामृद । इति मु० पु० ।

ख० पु० मूलेऽपि तथैव दृश्यते ।

१५।४३ एतस्य दर्शनात् सद्यो० इति मु० पु० ।

१६।१ श्लोकोत्तरार्द्धं नास्ति ख० पु० ।

१६।४ ०कृष्णविक्षेपविह्वला ।। इति क० ग० मु० पु० ।

१६।६ सिद्धाश्रमं तेऽपि जग्मु० इति क० ख० ग० पु० ।

१६।११ ०र्विस्मिस्म्युर्भगवत्स्त्रियः ।। इति क० ख० ग० पु० ।

१६।१३ ०का नाम कुत्र० इति मु० पु० ।

त्वं सर्वतो हि भगवन्० इति ख० पु० ।

१६।१७ किन्तु राधा० इति क० ख० ग० पु० ।

०गुणार्पिता ।। इति ख० पु० ।

०गुणार्चिता ।। इति क० मु० पु० ।

१६।१९ ०सर्पादिव्याध० इति मु० पु० ।

१६।२३ ०समा एव न० इति मु० पु० ।

१६।२८ ०किं सुवर्णानम् । इति क० ग० पु० ।

०किं युवर्णानम् । इति ख० पु० ।

१६।३० ०मानयुताः सर्वा० इति मु० पु० ।

कुलकौशल्य० इति क० ख० ग० पु० ।

१६।३४ ०परः स्त्रीपरिवेष्टितः । इति क० पु० ।

१६।३६ ०परितस्तरणं शुभम् । इति क० ग० पु० ।

०वस्त्रैरास्तरणं शुभम् । इति मु० पु० ।

०गन्धिसङ्कुलम् ।। इति क० ग० मु० पु० ।

१६।३८ छत्रान्दोलधरैः० इति क० ख० पु० ।

०वृजद्भिस्तामितस्तत ।। इति क० ख० पु० ।

१६।३६ ०विद्युद्दाममनोहरा। इति मु० पु०।

१६।४० अङ्गुल्यग्रैः शोभनैः स्वैः पुष्पभूमि० इति मु० पु०।

१६।४२ ०सूर्यस्तारागणास्तथा। इति क० पु०।

०सूर्यात्तारागणास्तथा। इति ख० पु०।

०सूर्यतारागणास्तथा। इति ग० पु०।

१६।४४ ०वदन्त्यस्मा. प्राप्ताः याः श्रीकृष्णपुरःसराः। इति क० ख० ग० पु०।

श्लोकान्तिमपादद्वयं नास्ति क० ग० मु० पु०।

१७।७ ०सहायान्मे त्वया देव हता भुवि। इति मु० पु०।

०सहाया हि० इति ख० पु०।

१७।६ ०धृतो गोवर्द्धनाचलः॥ इति ख० पु०।

१७।१४ ०भक्ता भवत्यो वह्वो० इति क० ख० पु०।

ख० पु० पार्श्वटिप्पण्यां भगिन्यो इति वर्त्तते।

१७।१५ ०रत्नप्रभाव किमु तत्पगीर्च्चान्। इति क० ख० ग० पु०।

१७।१६ आगच्छ चास्मच्छिविरा० इति ख० पु०।

१७।२० ०राधा कीर्त्तिमतीं० इति क० ख० ग० पु०।

१७।२४ स्वापयित्वाथ ता० इति मु० पु०।

१७।२७ प्रत्युद्गमप्रस्रवणै ० इति मु० पु०।

०प्रश्रवणै.० इति ख० ग० पु०।

१७।३० ०श्रुत्वा परं भैष्मी० इति मु० पु०।

१७।३२ ०ताम्बूलवीटकम्। इति मु० पु०।

१७।३३ ०स्वकृतं शुभा। इति क० ग० पु०।

१७।३६ ०प्रसन्नः प्राह० इति मु० पु०।

१७।३८ ०स्ते मम प्रोच्छ० इति मु० पु०।

१७।३६ प्रेम्णा पादं विमृज्याथ० इति मु० पु०।

१७।४० ०नवैकैषामद्वितीया० इति क० ख० ग० पु०।

१८।१ ०गोपीगणस्य च। इति क० ख० ग० पु०।
१८।२ ०ते भक्त्या० इति मु० पु०।
१८।४ ०तथा गोप्यः सर्वा वै वृजिनार्दन। इति क० ख० ग० पु०।
१८।५ पूर्णीकुरु० इति मु० पु०।
१८।६ राधेऽद्य कीर्त्ति० इति क० ग० पु०।
१८।१० ०कुरु प्रियतमे च० इति मु० पु०।
०प्रियतमेऽद्य० इति ग० पु०।
१८।११ ०प्रियेष्टाः॥ इति मु० पु०।
०प्रियंस्ताः॥ इति ख० पु०।
०प्रियस्ता॥ इति ग० पु०।
१८।१८ ०स्त्रीगणैश्छादितो राजन्० इति ख० पु०।
१८।२२ गतं मानो नः० इति क० ख० पु०।
०महामुनिः॥ इति ग० पु०।
१८।२५ प्राहैवं पृच्छ्यता० इति क० ग० पु०।
१८।२६ ०पृच्छन्ति ता मनोहराम्। इति मु० पु०।
०राधिका पराम्। इति ख० पु०।
१८।३२ ०गोवर्द्धनाचलः। इति क० ख० ग० पु०।
१८।३३ ०वायुनाचितसैकते। इति ग० मु० पु०।
०वायुनाच्चित्तसैकते। इति ख० पु०।
१८।३७ ०कापाङ्गदो रसः। इति क० ख० ग० पु०।

१९।१ श्लोकोत्तरार्द्धं नास्ति ग० पु०।
१९।२ श्लोकाद्यपादद्वयं नास्ति ग० पु०।
०नवत्या च षडुत्तरैः। इति ख० पु० पार्श्वटिप्पण्याम्।
१९।३ नास्ति ग० पु०।
०ऊनैश्च द्विशतैर्नृप। इति क० पु०।
१९।४ ०श्रीकृष्णस्य महात्मनः इत्येतन्मात्रमेव श्लोकपूर्वार्द्धे वर्त्तते ग० पु०।
१९।६ सहर्षः पार्षदै० इति मु० पु०।
१९।१३ ज्ञानतीर्थं समाहृत्य० इति ख० पु०।
१९।१७ ०कुष्ठतामुक्तः० इति क० ख० ग० पु०।

१६।२५ ०श्रीकृष्णचन्द्रस्तु० इति क० ख० ग० पु० ।

१६।२८ श्लोकान्तिमः पादः नास्ति ख० पु० ।

१६।२६ नास्ति ख० पु० ।

०वृषस्थे भास्करे सति ॥ इति क० ग० पु० ।

१६।३० श्लोकाद्यः पादः नास्ति ख० पु० ।

श्लोकपूर्वार्द्धं नास्ति क० ग० पु० ।

१६।४० ०दुर्गार्त्तिनाशिनी । इति मु० पु० ।

१६।४२ तद्विलात् तत् प्रसिद्धं० इति मु० पु० ।

तद्व्यक्ता तत् प्रसिद्धं० इति ख० ग० पु० ।

२०।१ इदं तीर्थं महापुण्यं कामदं तीर्थदायकम् ॥ इति क० पु० ।

इदं तीर्थं० इति ग० पु० ।

२०।२ ०प्राप्यते नरः ॥ इति क० ख० ग० पु० ।

२०।३ तदा वै० इति मु० पु० ।

०कुण्डो विधीयते । इति क० ख० ग० पु० ।

यत्र मत्रा० इति मु० पु० ।

२०।५ तथा वै पश्चिमे० इति मु० पु० ।

ब्रह्मतीर्थ इत्यादिस्तस्य पुण्य इत्यन्तो भाग नास्ति ग० पु० ।

०स्वर्गपात्रेण० इति मु० पु० ।

२०।१७ ०कृत्वा सर्वपरिग्रहम् । इति क० ख० ग० पु० ।

२१।१ ०निशं द्वारं हनू० इति ख० पु० ।

२१।४ ०मात्रेण स भवेद् भक्तिसंयुत. । इति क० ख० ग० पु० ।

श्लोकोत्तरार्द्धं नास्ति क० ख० ग० पु० ।

२१।५ जाम्बवान् नाम ऋक्षराट् । इति क० पु० ।

श्लोकप्रथमद्वितीयचरणौ न स्तः ख० ग० पु० ।

श्लोकतृतीयचतुर्थचरणौ न स्तः क० ग० मु० पु० ।

श्लोकपञ्चमषष्ठचरणौ न स्तः क० ख० ग० पु० ।

२१।१५ ०स महात्मा० इत्यादि श्लोकान्त नास्ति ग० पु० ।

२१।१६ श्लोकपूर्वार्द्धं नास्ति ग० पु० ।

स्त्रीसङ्गः० इति मु० पु० ।

२१।१७ ०रर्च्चिहेपै समन्वितम् । इति क० ख० ग० पु० ।

०रर्च्चिहेषैः ० इत्यस्य पार्श्व-टिप्पण्या 'हयहेषैः' इति वर्त्तते ख० पु० ।

२१।१८ ०राजसङ्घैः० इति मु० पु० ।

०राजसङ्घे० इति ख० पु० ।

२१।२० ०कथं राज्य० इति मु० पु० ।

नास्ति ग० पु० ।

२१।२१ श्लोकप्रथमपादः नास्ति ग० पु० ।

२१।२४ तीर्थैस्तुतोऽध ० इति क० पु० ।

तीर्थायुतोऽध ० इति ग० पु० ।

२१।२५ ०न शक्यश्चतुर्मुखो० इति क० ख० ग० मु० पु० ।

२१।३१ ०ब्राह्मणो वैष्णव मामकी० इति क० पु० ।

२१।३२ ०विधाय सार्धं० इति मु० पु० ।

इतःपरं मु० पु० द्वाविंशोऽध्यायः दृश्यते । परं क० ख० ग० पुस्तके तदभाव एव वर्त्तत इति द्रष्टव्यम् ।

---